# BIBLIOTHECA INDICA;

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED UNDER THE PATRONAGE OF THE

Hon. Court of Directors of the East India Company,

AND THE SUPERINTENDENCE OF THE

ASIATIC SOCIETY OF BENGAL.

EDITED BY DR. E. RÖER.

VOL. VIII.—NOS. 24, 26, 28, 29, 30, 31.

## सानन्दगिरिकृतटीकशाङ्करभाष्यसम्बलितेशाकेन-कठप्रश्नमुण्डकमाण्डुक्योपनिषदः ।

---

## THE ÍSÁ, KE'NA, KAṬHA, PRASNA, MUNḌA, MÁNḌU-KYA, UPANISHADS,

WITH THE

COMMENTARY OF SANKARA ÁCHÁRYA, AND THE GLOSS OF ÁNANDA GIRI.

EDITED BY DR. E. RÖER.



CALCUTTA:

PRINTED BY J. THOMAS, BAPTIST MISSION PRESS,
CIRCULAR ROAD.

1850.

## ॐ परमात्मने नमः ॥

---

### वाजसनेयसंहितोपनिषद्भाष्यं ॥

भा० (ईशावास्यमित्यादयो मन्त्राः कर्मस्वविनियुक्तास्तेषा-
मकर्मशेषस्यात्मनो याथात्म्यप्रकाशकत्वात् । याथात्म्यं
चात्मनः शुद्धत्वापापविद्धत्वैकत्वनित्यत्वाशरीरत्वसर्व्वगत-
त्वादि वक्ष्यमाणं । तच्च कर्मणा विरुध्यत इति युक्त एवैषां

---

### वाजसनेयसंहितोपनिषद्भाष्यटीका ॥

व्या० येनात्मना परेशेन व्याप्तं विश्वमशेषतः । सोऽहं देहद्वयोः
साक्षी वर्जितो देहतद्गुणैः ॥ १ ॥

ईशावास्यमित्यादिमन्त्रान् व्याचिख्यासुर्भगवान् भाष्यकार-
स्तेषां कर्मशेषत्वशङ्कां तावत् व्युदस्यति । तथा हि कर्मजडाः
केचन मन्यन्ते ईशावास्यमित्यादयो मन्त्राः कर्मशेषा मन्त्रत्वा-
विशेषादिषे त्वादिमन्त्रवत् ॥ अतः पृथक्प्रयोजनाद्यभावाद-
व्याख्येया इति तान् प्रत्याह । ईशावास्यमित्यादय इति ॥ कर्मस्व-
विनियुक्ता इति ॥ इषे त्वेति शाखां छिनत्तीत्यादिवत् विनियो-
जकप्रमाणादर्शनात्प्रकरणान्तरत्वाच्चेत्यर्थः ॥ श्रौतविनियोगा-
भावेऽपि बर्हिर्देवसदनं दामीत्यस्य बर्हिर्लवनप्रकाशनसाम-
र्थ्यात् बर्हिर्लवने यथा विनियोगस्तथा कर्मशेषात्मप्रकाशनसा-
मर्थ्येन कर्मस्वेषां विनियोग इत्यपि नाशङ्कनीयमित्याह । तेषा-
मिति ॥ शुद्धादिविशेषणस्यात्मनः कर्मशेषत्वे प्रमाणाभावात्
याथात्म्यं न केवलं कर्मानुपयोगि किन्तु कर्मणा विरुध्यत
इत्याह । याथात्म्यञ्चेति ॥ शुद्धोऽहं स्वभावतो न तु केनापि पाप्मना
विद्धः सर्व्वत्रैको शरीर आकाशोपम इति जानन् कठवल्लीष्वपि

भा० कर्म्मस्वविनियोगः । न चैवंलक्षणमात्मनो याथात्म्यमुत्पाद्यं विकार्य्यमाप्यं संस्कार्य्यं वा कर्त्तृ भोक्तृ वा येन कर्म्मशेषता स्यात्। सर्व्वासामुपनिषदामात्मयाथात्म्यनिरूपणेनैवोपक्षयात् । गीतानां मोक्षधर्म्माणां चैवंपरत्वात् । तस्मादात्मनोऽनेकत्वकर्त्तृत्वभोक्तृत्वादि चाशुद्धत्वपापविद्धत्वादि चोपादाय लोकबुद्धिसिद्धकर्म्माणि विहितानि । यो हि कर्म्मफलेनार्थी दृष्टेन ब्रह्मवर्चसादिनाऽदृष्टेन स्वर्गादिना

---

आ० कर्म्म वीक्षते । किन्त्वापातप्रतीपान्तरेप्येतादृशी निरूढैव कर्म्मप्रवृत्तिमित्यर्थः । किञ्च यः कर्म्मशेषः स उत्पाद्यो दृष्टो यथा पुरोडाशादिः । विकार्य्यः सोमादिः । आप्यो मन्त्रादिः । संस्कार्य्यो व्रीह्यादिस्तत्तण्डुलाघातादिरूपत्वं व्यापकं व्यावर्त्तमानमात्मयाथात्म्यस्य कर्म्मशेषत्वमपि व्यावर्त्तयति । तथात्मयाथात्म्यं कर्तृ भोक्तृ च न भवति । येन ममेदं समीहितसाधनं ततो मया कर्त्तव्यमित्यहंकारान्वयपुरःसरः कर्त्राऽन्वयः स्यादित्याह । न चैवमिति ॥ ननु उपनिषदि जपोपयोगित्वादन्यस्य च प्रमाणस्यादर्शनान्न निरूप्यमेव । एतादृशमात्मयाथात्म्यं तत्राह । सर्व्वासामिति ॥ यत्परः शब्दः स शब्दार्थ इति मीमांसाप्रसिद्धेः सर्व्वासामुपनिषदाञ्चैकात्म्ये तात्पर्य्यदर्शनान्न जपोपयोगित्वमुपनिषदां शक्यं वक्तुं । तथा हि ईशावास्यमित्युपक्रम्य स पर्य्यगाच्छुक्रमित्युपसंहारादनेजदेकं तदन्तरस्य सर्व्वस्येत्यभ्यासदर्शनान्नैतद्देवा आप्नुवन्नित्यपूर्व्वतासङ्कीर्त्तनात्को मोहः कः शोक एकत्वमनुपश्यत इति फलवत्त्वासङ्कीर्त्तनात्कुर्व्वन्नेवेहेति जिजीविषोर्भेददर्शिनः कर्म्मकरणानुवादेनासूर्य्या नाम त इति निन्दयैकात्म्यदर्शनस्य स्तुतत्वात्तस्मिन्नपो मातरिश्वा दधातीत्यभिधायिन्याश्चास्यास्तावदुपनिषदैकात्म्यतात्पर्य्यं दृश्यते । एवमन्यासामप्युपनिषदामुपक्रमोपसंहारैकरूप्याभ्यासापूर्व्वताफलवत्त्वार्थवादयुक्त्युपपादनानि षट् तात्पर्य्यलिङ्गानि विकल्पेन समुच्चयेन वास्माभिस्तत्त्वालोके दर्शि-

च द्विजातिरहं न काणकुण्ठत्वाद्यनधिकारधर्म्मवानित्यात्मानं मन्यते सोऽधिक्रियते कर्म्मस्विति हि अधिकारविदो वदन्ति ।(तस्मादेते मन्त्रा आत्मनो याथात्म्यप्रकाशनेनात्मविषयं स्वाभाविककर्म्मविज्ञानं निवर्त्तयन्तः शोकमोहादिसंसारधर्म्मविच्छित्तिसाधनमात्मैकत्वादिविज्ञानमुत्पादयन्तीति )॥ एवमुक्ताभिधेयसम्बन्धप्रयोजनान्मन्त्रान् सङ्क्षेपतो व्याख्यास्यामः ॥

---

तानीति नेह प्रतन्यन्ते किञ्च प्रत्ययसंवादोऽपि बलवत्कारणं। प्रसिद्धे विद्यते चोपनिषदर्थे गीतादिसंवादस्तस्मादुपनिषत्पदसमन्वयेनावगम्यमानमैकात्म्यं न प्रमाणान्तरानुपलम्भविरोधेनोपलम्भनीयं॥ यथेन्द्रियान्तरेणानवगम्यमानमपि रूपं चक्षुषा गम्यमानं नापह्नुवते तथैकात्म्यमपि नापह्नवार्हमित्याह। गीतानामिति। समं सर्व्वेषु भूतेषु तिष्ठन्तं परमेश्वरं। विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यतीत्यादिगीता। एक एव हि भूतात्मा सर्व्वभूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवदित्यादिमोक्षशास्त्राणाञ्चैकात्म्यपरत्वादित्यर्थः ॥ यद्येतादृशमात्मतत्त्वं तर्हि निरधिकारित्वात्कर्म्मकाण्डमुच्छिद्येतेत्यपि नाशङ्कनीयमित्याह। तस्मादिति ॥ औपनिषदात्मयाथात्म्यं च तीव्रक्रोधाक्रान्तस्वान्तं प्रत्येव श्येनादिविधिप्रामाण्यं। तथा मिथ्यादर्शिनं प्रत्येव कर्म्मविधिप्रामाण्यमित्यर्थः ॥ अत्र जैमिनिप्रभृतीनां सम्मतिमाह। यो हीत्यादिना। अर्थित्वादियुक्तस्य कर्म्मण्यधिकारः षष्ठे प्रतिष्ठापितः। अर्थित्वादि च मिथ्याज्ञाननिदानं। न हि नभोवन्निष्क्रियस्य स्वत एव दुःखासंसर्गिणः परमानन्दस्वभावस्य सुखं मे स्याद्दुःखं मे माभूदित्यर्थित्वं। शरीरेन्द्रियसमर्थोऽहमित्यभिमानित्वं मिथ्याज्ञानं विना न सम्भवतीत्यर्थः ॥ यस्मादात्मयाथात्म्यप्रकाशका मन्त्रा न कर्म्मशेषभूता न च मानान्तरविरुद्धास्तस्मात्प्रयोजनादिमत्त्वमपि तेषां सिद्धमित्याह। तस्मादेत इति ॥

। ॐ । वाजसनेयसंहितोपनिषत् ॥

उ० ईशावास्यमिदꣳ सर्वं यत्किञ्च जगत्यां जगत्

भा० ईशा। ईष्टे इतीट् तेनेशा। ईशिता परमेश्वरः परमात्मा सर्व्वस्य। स हि सर्व्वमिष्टे सर्व्वजन्तूनामात्मा सन्। तेन स्वेनात्मनेशावास्यमाच्छादनीयं। किं। इदं सर्व्वं यत्किञ्च यत्किञ्चिज्जगत्यां पृथिव्यां जगत्। सर्व्वं स्वेनात्मनाऽहमेवेदं सर्व्वमिति परमार्थसत्यरूपेणानृतमिदं सर्व्वञ्चराचरमाच्छादनीयं परमात्मना। यथा चन्दनागर्व्वादेरुदकादिसम्बन्धजक्लेदादिजं दौर्गन्ध्यं तत्स्वरूपनिघर्षणेनाच्छाद्यते स्वेन पारमार्थिकेन गन्धेन तद्वदेव हि स्वात्मन्यध्यस्तं स्वाभाविकं कर्त्तृत्वभोक्तृत्वादिलक्षणं जगद्द्वैतरूपं पृथिव्यां जग-

आ० व्याख्येयत्वमुक्त्वा प्रतिपदं व्याचष्टे। ईशेति॥ ईश ऐश्वर्य्ये। ऽस्य धातोः क्विपि लुप्ते हलन्तरूपमीट् तस्य तृतीयैकवचनमीशेति॥ ननु कर्त्तरि क्विब्विधानात्परमेश्वरस्य चाक्रियत्वात्कथं क्विबन्तशब्दवाच्यतेति तत्राह। ईशितेति। मायोपाधीशनकर्त्तृत्वसम्भवाच्छब्दवाच्यता न विरुध्यते निरुपाधिकस्य च लक्ष्यत्वं भविष्यतीत्यर्थः॥ ईशित्रीशितव्यभावेन तर्हि भेदः प्राप्त इत्याशङ्क्याह। सर्व्वजन्तूनामिति॥ यथा दर्पणादिषु प्रतिबिम्बानामात्मा बिम्बभूतो देवदत्त ईशिता भवति तथा कल्पभेदेनेशित्रीशितव्यभावसम्भवान्न वास्तवभेदानुमानं सम्भवतीत्यर्थः। वस आच्छादने। अस्य रूपं वास्यन्तत्त्वत ईश्वरात्मकमेव सर्व्वं भ्रान्त्या यदनीश्वररूपेण गृहीतं तत्सर्व्वमीश्वर एवात्मैवेति ज्ञानेनाच्छादनीयं सर्व्वात्मक ईश्वरोऽस्मीति ज्ञातव्यमेवतत्त्वोपदेशच्छान्दोग्ये तत्त्वमसीतिवदित्यर्थः। अत्रैव सर्व्वमात्मेव सत्प्रकाशाविशेषतः। हेयोपादेयभावोऽयं न सत्स्वप्नवदीष्यते। १। उक्तञ्च।

तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनं ॥ १ ॥

॰ त्यामित्युपलक्षणार्थत्वात्सर्व्वमेव नामरूपकर्म्माख्यं विकार-
जातं परमार्थसत्यात्मभावनया त्यक्तं स्यात्। एवमीश्वरा-
त्मभावनया युक्तस्य पुत्राद्येषणात्रयसन्न्यास एवाधिकारो
न कर्म्मसु तेन त्यक्तेन त्यागेनेत्यर्थः। न हि त्यक्तो मृतः
पुत्रो भृत्यो वा आत्मसम्बन्धितयाऽभावादात्मानं पाल-
यत्यतस्त्यागेनेत्ययमेवार्थः। भुञ्जीथाः पालयेथाः। एवं
त्यक्तैषणस्त्वं मा गृधः गृधिमाकाङ्क्षां माकार्षीर्धनविषयां।
कस्य स्वित्कस्य चित्परस्वं धनं स्वस्य वा धनं माकाङ्क्षी-
रित्यर्थः। स्विदित्यनर्थको निपातः। अथवा मागृधः

---

न बन्धोऽस्ति न मोक्षोऽस्ति न विकल्पोऽस्ति तत्त्वतः। नित्यप्र-
काश एवास्ति विश्वाकारो महेश्वर इति॥२॥ यस्यौपदेशिकज्ञा-
नमात्रेणान्तर्दृष्टिर्न निराक्रियते तस्य विचारादिप्रयत्नेन तत्त्व-
प्रकाशे सत्यन्तर्दृष्टिस्तिरस्करिष्यत इत्यभिप्रेत्य दृष्टान्तमाह।
यथेति॥ चन्दनागर्व्वादेरुदकादिसम्बन्धादार्द्रीभावादिना जातं
यद्दौर्गन्ध्यमौपाधिकं मिथ्या तद्यथा तत्स्वरूपनिघर्षणाभिव्यक्तेन
स्वाभाविकेन गन्धेनाच्छाद्यते तद्वद्विचारादेः स्वरूपसद्भावान्मि-
थ्याबुद्धेर्बाधकत्वं सम्भवतीत्याह। तद्वदेव हीति॥ स्वभावोऽना-
दिरविद्या तत्कार्य्यं स्वाभाविकमित्यादिबाधत्वे योग्यत्वप्रदर्शना-
र्थंविशेषणं। एवं विचारादिप्रयत्नवतोऽन्तर्दृष्टिरित्यसम्भा-
वनामुक्त्वा युक्त्यभिज्ञस्य सर्व्वविदहं चेश्वर एवेति भावनाया-
मधिकृतस्य युक्तिकुशलस्य च विचारेऽधिकृतस्य सर्व्वकर्म्मस-
न्न्यास एवाधिकार इह मन्त्रे विवक्षितस्तेन त्यक्तेनेत्यत्र त्यागप-
रामर्शात् त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक्परं पदमित्यन्य-
त्राप्युक्तत्वात्पुत्राद्येषणायाश्चित्तविक्षेपहेतुत्वेन प्रसिद्धत्वाच्चेत्यभि-
प्रेत्याह। एवमीश्वरात्मेति॥ चिकीर्षितं सन्न्यासं स्तौति।

उ० कुर्व्वन्नेवेह कर्म्माणि जिजीविषेच्छतᳫं समाः।

भा० कस्मात्। कस्य स्विद्धनमित्याक्षेपार्थो न कस्यचिद्धनमस्ति यद्गृध्येत। आत्मैव सर्व्वमितीश्वरभावनया सर्व्वं त्यक्तमत आत्मन एवेदं सर्व्वमात्मैव च सर्व्वमतो मिथ्याविषयां गृधिं माकार्षीरित्यर्थः॥ १॥

एवमात्मविदः पुत्राद्येषणात्रयसन्न्यासेनात्मज्ञाननिष्ठतयात्मा रक्षितव्य इत्येष वेदार्थः। अथेतरस्यानात्मज्ञतयात्मग्रहणाशक्तस्येदमुपदिशति मन्त्रः। कुर्व्वन्नेव इह निर्वर्त्तयन्नेव कर्म्माण्यग्निहोत्रादीनि जिजीविषेज्जीवितुमिच्छेच्छतं शतसङ्ख्याकाः समाः संवत्सरान्। तावद्धि पुरुषस्य परमायुरुचितं। यथा प्राप्तानुवादेन यज्जिजीविषेच्छतं वर्षाणि

व्या० तेन त्यक्तेनेति॥ त्यागेनात्मा रक्षितः स्यान्निष्क्रियात्मस्वरूपावस्थानानुकूलत्वात्त्यागस्येत्यर्थः। सन्न्यासिनः शरीरसन्धारणोपयुक्तकौपीनाच्छादनभिक्षाशनादिव्यतिरिक्तेऽपि कथञ्चिद्द्रव्यपरिग्रहे रागश्चेत्प्राप्तस्तन्निरोधे यत्नः कर्त्तव्यः॥ तस्य प्रधानविरोधित्वादित्यभिप्रेत्य नियमविधिमाह। एवं त्यक्तैषणा इति॥ स्विदिति निपातस्य सामान्यार्थत्वेऽपि कस्य स्विदिति चिन्तनार्थत्वमन्यत्रप्रसिद्धं तदिह न गृह्यते इत्यनर्थकमित्युक्तं। व्यवहारदृष्ट्यात्मनैवेदं सर्व्वशेषभूतं जडस्य चित्परतन्त्रत्वादतः प्राप्ते विषये नाकाङ्क्षा कर्त्तव्या॥ १॥

परमार्थस्त्वात्मैव सर्व्वमित्याकाङ्क्षाविषय एव नास्तीत्यर्थः। आद्यमन्त्रस्य पूर्व्वार्द्धेन तत्त्वोपदेशः कृतस्तृतीयपादेनापरिपक्वज्ञानस्य सन्न्यासविधिरुक्तश्चतुर्थपादेन सन्न्यासिनो नियमविधिरुक्त इति प्रतिपदं व्याख्याय सङ्क्षेपार्थमनुवदत्युत्तरस्य सम्बन्धाभिधित्सया। एवमात्मविद इत्यादिना॥ पूर्व्वमन्त्रेण ज्ञानं विहितं यस्य तस्यैवोत्तरमन्त्रेण कर्म्म विहितं ततः समुच्चयानुष्ठाने तात्पर्य्यं

एवं त्वयि नान्यथेतोऽस्ति न कर्म्म लिप्यते नरे ॥ २ ॥

तत्कुर्वन्नेव कर्म्माणीत्येतद्विधीयते । एवमेवम्प्रकारे त्वयि जिजीविषति नरे नरमात्राभिमानिनि इत एतस्मादग्निहोत्रादीनि कर्म्माणि कुर्व्वतो वर्त्तमानात्प्रकारादन्यथा प्रकारान्तरं नास्ति येन प्रकारेणाशुभं कर्म्म न लिप्यते कर्म्मणा न लिप्यस इत्यर्थः । अतः शास्त्रविहितानि कर्म्माण्यग्निहोत्रादीनि कुर्व्वन्नेव जिजीविषेत् । कथं पुनरिदमवगम्यते । पूर्व्वेण मन्त्रेण सन्न्यासज्ञाननिष्ठतोक्ता द्वितीयेन तदशक्तस्य कर्म्मनिष्ठतेत्युच्यते । ज्ञानकर्म्मणोर्विरोधं पर्व्वत-

मन्त्रद्वयस्येत्येकदेशी शङ्कामुद्भावयति ।कथं पुनरिति ॥ शुद्धब्रह्मज्ञानकर्म्मणोरेकाधिकारे विरुद्धत्वात् ऋतुगमनचिदग्निधर्म्मवदस्त्येव तत्रापि क्रमेणैककर्त्तृकत्वमिति चेन्न । विभिन्नरूपभेदाद्भिन्नाधिकारत्वात् । यच्चोक्तं । ज्ञानकर्म्मणोर्विहितत्वे शुद्धिसाम्याद्विरोधोऽसिद्ध इति तदसत् । ऋतुगमनचिदग्निधर्म्मयोरप्यविरोधप्रसङ्गात् । तदुभयं नैकस्य विहितमिति चेत्तुल्यमेतत्प्रतिषेधात्तत्र न समुच्चय इति चेदिहापि न कर्म्मणा न प्रजया नानुध्यायेद्बहूञ्छब्दानित्यादिप्रतिषेधस्तुल्यः केवलकर्म्मविषयो निषेध इति न च वाच्यं केवलपदव्यवच्छेद्याभावात् समुच्चयविधेरप्यनिश्चितत्वात्तस्मान्न समुच्चये तात्पर्य्यं मन्त्रद्वयस्येत्याह । ज्ञानकर्म्मणोर्विरोधमिति । कर्त्तृत्वाद्यध्यासाश्रयं कर्म्म शुद्धत्वादपमृद्यत इति सम्बन्धग्रन्थे यथोक्तं सहानवस्थानलक्षणं विरोधं किं न स्मरसि येनैकाधिकारत्वं तयोः कल्पयसीत्यर्थः ॥ मन्त्रलिङ्गादपि तयोर्भिन्नाधिकारत्वं प्रतीयत इत्याह । इहाप्युक्तमिति ॥ जिजीविषो रागिणः कर्म्म विहितं सर्व्वमीश्वर एवेति ज्ञानवतस्त्यागो

भा० वदकर्म्म्यं यथोक्तं न स्मरसि किं। इहाप्युक्तं यो हि जिजीविषेत् स कर्म्म कुर्व्वन्। ईशावास्यमिदं सर्व्वं तेन त्यक्तेन भुञ्जीथा मागृधः कस्य स्विद्धनमिति। न जीविते मरणे वा गृधिं कुर्व्वीताऽरण्यमियादिति च। ततो न पुनरेयादिति सन्न्यासशासनात्। उभयोः फलभेदञ्च वक्ष्यति। इमौ द्वावेव पन्थानावनुनिष्क्रान्ततरौ भवतः क्रियापथश्चैव पुरस्तात्सन्न्यासश्च। तयोः सन्न्यास एवातिरेचयति। न्यास एवात्यरेचयदिति तैत्तिरीयके। द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः। प्रवृत्तिलक्षणो धर्म्मो निवृत्तौ च विभावित इत्यादि पुत्राय विचार्य्य निश्चितमुक्तं व्यासेन वेदाचार्य्येण भगवता। विभागञ्चानयोर्दर्शयिष्यामः॥२॥

---

व्या० विहितः। किञ्च धनसम्पन्नस्यैव कर्म्मण्यधिकारः। प्रथममन्त्रार्थाधिकारिणश्च धनाकाङ्क्षानिषेधेन कर्म्माधिकारनिषेधः प्रतीयत इत्यर्थः॥ जिजीविषा हि कर्म्माधिकारिण एव न ज्ञानाधिकारिण इत्यत्र प्रमाणमाह। न जीवित इति॥ अरण्यं स्त्रीजनासङ्कीर्णमाश्रममियाद्गच्छेदिति वेदशास्त्रनिश्चितस्ततोऽरण्यवासोपलक्षितात्सन्न्यासविधानादित्यर्थः। इतश्च नैकफलकामस्य ज्ञानकर्म्मणोरधिकारः प्रतिपत्तव्य इत्याह। उभयोरिति॥ को मोहः कः शोक एकत्वमनुपश्यत इति स निदानार्थप्रहाणं ज्ञानफलं वक्ष्यति। संसारमण्डलान्तरगतमेव देशान्तरप्राप्त्यापन्नं हिरण्यगर्भपदप्राप्त्यादिलक्षणं कर्म्मफलं वक्ष्यति। अग्ने नय सुपथेत्यन्तेनेत्यर्थः॥ नारायणोपनिषद्वाक्यमपि भिन्नाधिकारत्वे सति प्रमाणयति। इमौ द्वावेवेति॥ पुरस्तात्सृष्टिकालेऽनुनिष्क्रान्ततरौ भूतसृष्टिमनुप्रवृत्तौ भिन्नाधिकारत्वात् द्वौ। तयोः सन्न्यास एवातिरिक्तः श्रेष्ठो भवति परमपुरुषार्थाव्यवधानादित्यर्थः॥ व्यासवाक्यमपि संवादकमाह। द्वाविमाविति॥२॥

उ० असूर्य्या नाम ते लोका अन्धेन तमसाऽऽवृताः। तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः॥ ३॥

---

भा० अथेदानीमविद्वन्निन्दार्थोऽयं मन्त्र आरभ्यते। असुर्य्याः परमात्मभावमद्वयमपेक्ष्य देवादयोऽप्यसुरास्तेषां च स्वभूता असुर्य्याः। नामशब्दोऽनर्थको निपातः। ते लोकाः कर्म्मफलानि लोक्यन्ते दृश्यन्ते भुज्यन्त इति जन्मानि। अन्धेनादर्शनात्मकेनाज्ञानेन तमसाऽऽवृता आच्छादितास्तान् स्थावरान्तान् प्रेत्य त्यक्त्वेमं देहमभिगच्छन्ति यथा कर्म्म यथा श्रुतं। ये के चात्महनः। आत्मानं घ्नन्तीति आत्महनः। के ते। येऽविद्वांसः। कथं ते आत्मानं नित्यं हिंसन्ति। अविद्यादोषेण विद्यमानस्यात्मनस्तिरस्करणात्। विद्यमानस्यात्मनो यत्कार्य्यं फलमजरामरत्वादिसंवेदनादिलक्षणं तद्धतस्येव तिरोभूतं भवतीति प्राकृता अविद्वांसो

---

आ० आद्यमन्त्रार्थं प्रपञ्चयितुं प्रथममविद्वन्निन्दा क्रियत इत्याह। अथेति॥ ते लोका इति तच्छब्दो यच्छब्दार्थे। यथाश्रुतमिति येन येन यादृशं प्रतिषिद्धं विहितं वा देवताविज्ञानमनुष्ठितं सत्तदनुरूपामेव योनिमाप्नोतीत्यर्थः॥ आत्महन्तृत्वस्योदरभेदिनि प्रसिद्धे कथमविद्वांस आत्महन इत्याह। कथं त इति॥ उदरभेदिनोऽध्यात्माधिकारे प्रसङ्गाभावादशुद्धत्वाध्यासेन तिरस्कार एवात्महन्तृत्वमित्याह। अविद्यादोषेणेति॥ यथा कस्यचिच्छुद्धस्य मिथ्याभिशापो ब्रह्मवध उच्यते तद्वदात्मनि पापित्वाद्यध्यासोऽपि हिंसैवेत्यर्थः॥ अजरामरत्वादिलक्षणोऽहमिति संवेदनमभिधानञ्च यत्कार्य्यं तदपि हतस्येव न दृश्यत इति हननमुपपद्यत इत्याह। विद्यमानस्येति॥ अस्यात्मघातस्य प्राय-

उ॰ अनेजदेकम्मनसो जवीयो नैनद्देवा आप्नुवन्

भा॰ जना आत्महन उच्यन्ते। तेन ह्यात्महननदोषेण संसरन्ति ते॥ ३॥

यस्यात्मनो हननादविद्वांसः, सरन्ति तद्विपर्य्ययेण विद्वांसो मुच्यन्ते ते नात्महनः। तत्कीदृशमात्मतत्त्वमित्युच्यते। अनेजत् न एजत्। एजृ कम्पने। कम्पनं चलनं स्थिरत्वप्रच्युतिस्तद्वर्जितं सर्व्वदा एकरूपमित्यर्थः। तच्चैकं सर्व्वभूतेषु मनसः सङ्कल्पादिलक्षणात् जवीयो जववत्तरं। कथं विरुद्धमुच्यते। ध्रुवं निश्चलमिदं मनसो जवीय इति च। नैष दोषः। निरुपाध्युपाधिमत्त्वोपपत्तेः। तत्र निरुपाधिकेन रूपेणोच्यते अनेजदेकमिति। मनसोऽन्तःकरणस्य सङ्कल्पविकल्पलक्षणस्योपाधेरनुवर्त्तनादिह देहस्थस्य मनसो ब्रह्मलोकादिदूरस्थसङ्कल्पनं क्षणमात्राद्भवतीत्यतो मनो जविष्ठं लोके प्रसिद्धं। तस्मिन्मनसि ब्रह्मलोकादीन् द्रुतं गच्छति सति प्रथमं प्राप्त इवात्मचैतन्याभासो गृह्यतेऽतो मनसो जवीय इत्याह। नैनद्देवा द्योत-

---

आ॰ स्चित्तविधानादर्शनात्संसरणमेव फलमित्याह। ते न हीति॥ ३॥

उत्तरमन्त्रमवतारयति। यस्यात्मन इत्यादि॥ अविक्रियमेवचेदात्मतत्त्वं कथं केचन स्वर्गगामिनः केचन नरकगामिन इति सांसारिकव्यवस्था स्यात् मन उपाधिनिबन्धनेत्यभिप्रेत्याह। मनस इत्यादिना॥ उपाधेरनुवर्त्तमानात् विक्रियादिव्यवहाराश्रयत्वमिति शेषः। ननु मनसो देहान्तःस्थत्वाद्बहिर्गमनायोग्यात्कथं वेगवत्त्वमित्याशङ्क्याह। देहस्थस्येति॥ जवीयस्त्वादश्वादिवत्तर्हि चक्षुरादिग्राह्यत्वं प्राप्तमित्याशङ्क्याह। नैन-

उ॰ पूर्व्वमर्षत्। तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति ॥ ४ ॥

---

भा॰ नाद्देवाश्चक्षुरादीनीन्द्रियाणि एतत्प्रकृतमात्मतत्त्वं नाप्नुवन् न प्राप्तवन्तः। तेभ्यो मनो जवीयो मनोव्यापारव्यवहितत्वात्। आभासमात्रमप्यात्मनो नैव देवानां विषयीभवति। यस्माज्जवनान्मनसोऽपि पूर्व्वमर्षत् पूर्व्वमेव गतं। व्योमवद्व्यापित्वात्। सर्व्वव्यापि तदात्मतत्त्वं सर्व्वसंसारधर्म्मवर्जितं स्वेन निरुपाधिकेन स्वरूपेणाविक्रियमेव सदुपाधिकृताः सर्व्वाः संसारविक्रिया अनुभवतीवाऽविवेकिनां मूढानामनेकमिव च प्रति देहं प्रत्यवभासत इत्येतदाह। तद्धावतो द्रुतं गच्छतोऽन्यान्मनोवागिन्द्रियप्रभृतीनात्मविलक्षणान् अत्येति अतीत्य गच्छतीव। इवार्थं स्वयमेव दर्शयति। तिष्ठदिति। स्वयमविक्रियमेव सदित्यर्थः। तस्मिन्नात्मतत्त्वे सति नित्यचैतन्यस्वभावे मातरिश्वा मातरि अन्तरिक्षे श्वसति गच्छतीति वायुः सर्व्वप्राणभृत् क्रियात्मको यदाश्रयाणि कार्य्यकरणजातानि यस्मिन्नोतानि प्रोतानि च यत्सूत्रसञ्ज्ञकं सर्व्वस्य जगतो विधारयितृ स मातरिश्वा।

---

आ॰ देवा इति ॥ चक्षुरादिप्रवृत्ते मनोव्यापारपूर्व्वकत्वात्तदविषयत्वे चक्षुरादिविषयत्वमप्यात्मनो न सम्भवतीत्यर्थः ॥ मनसो वा कथं न विषय आत्मेत्यत आह। यस्मादिति ॥ यथा मनःस्थं परिमाणं मनसो न विषयोऽत्यन्ताव्यवधानात्तथात्माप्यत्यन्ताव्यवधानान्मनसो न विषयस्तद्व्यापकत्वाच्चेत्यर्थः ॥ उक्तात्मसाङ्गवचनयोगोपपत्तिमाह। तस्मिन्नात्मतत्त्वे सतीति ॥ श्रौतानि कर्म्माणि सोमाज्यपयःप्रभृतिभिर्द्रव्यैः [illegible] इति [illegible]

उ॰ तदेजति तन्नैजति तद्दूरे तद्वन्तिके। तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः॥ ५॥

भा॰ अपः कर्म्माणि प्राणिनां चेष्टालक्षणानि। अग्न्यादित्यादीनां ज्वलनदहनप्रकाशाभिवर्षणादिलक्षणानि दधाति विभजतीत्यर्थः। धारयतीति वा। भीषास्माद्वातः पवते इत्यादिश्रुतिभ्यः। सर्व्वा हि कार्य्यकारणादिविक्रिया नित्यचैतन्यात्मस्वरूपे सर्व्वास्पदभूते सत्येव भवन्तीत्यर्थः॥ ४॥

न मन्त्राणां जामिताऽस्तीति पूर्व्वमन्त्रोक्तमपि अर्थं पुनराह। तदात्मतत्त्वं यत्प्रकृतमेजति चलति तदेव च नैजति स्वतो नैव चलति अचलमेव सच्चलतीवेत्यर्थः। किञ्च तद्दूरे वर्षकोटिशतैरप्यविदुषामप्राप्यत्वाद्दूर इव। तद्वन्तिके समीपेऽत्यन्तमेव विदुषामात्मत्वान्न केवलं दूरेऽन्तिके च। तदन्तरेऽभ्यन्तरे सर्व्वस्य। आत्मा सर्व्वान्तर इति श्रुतेः। अस्य सर्व्वस्य जगतो नामरूपक्रियात्मकस्य तदु सर्व्वस्यास्य बाह्यतो व्यापित्वादाकाशवन्निरतिशयसूक्ष्मत्वादन्तः प्रज्ञानघन एवेति शासनान्निरन्तरं॥ ५॥

---

आ॰ ऽपशब्दः कर्म्मवाची प्राणिचेष्टायास्तावन्निमित्तत्वप्रसिद्धेः। कारणवाचकः शब्दः कार्य्योपलक्षणया प्रयुक्त इत्यर्थः। ईश्वरस्यापि हिरण्यगर्भस्य नियतप्रवृत्त्यन्यथानुपपत्त्याधिष्ठाता परमेश्वरः सम्भाव्यत इत्युक्तमिदानीं मातरिश्वग्रहणमुपलक्षणार्थमादाय तात्पर्य्यमाह। सर्व्वा हीति॥ ४॥

जामिता आलस्यं व्यापित्वाद्बाह्यतोऽस्ति निरतिशयसूक्ष्मत्वादन्तश्चेदस्ति तर्हि निरन्तरमेकरसं न स्यान्मानाभावादित्याशङ्क्याह। प्रज्ञानघन एवेति॥ ५॥

उ० यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति ।
सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥ ६ ॥
यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः ।

---

भा० यस्तु परिव्राड्मुमुक्षुः सर्व्वाणि भूतानि अव्यक्तादीनि स्थावरान्तान्यात्मन्येवानुपश्यति आत्मव्यतिरिक्तानि न पश्यतीत्यर्थः । सर्व्वभूतेषु च तेष्वेव चात्मानं तेषामपि भूतानां स्वमात्मानमात्मत्वेन यथास्य कार्य्यकारणसङ्घातस्यात्माऽहं सर्व्वप्रत्ययसाक्षिभूतश्चेताः केवलो निर्गुणोऽनेनैव स्वरूपेणाव्यक्तादीनां स्थावरान्तानामहमेवात्मेति सर्व्वभूतेषु चात्मानं निर्व्विशेषं यस्त्वनुपश्यति स ततस्तस्मादेव दर्शनान्न विजुगुप्सते जुगुप्सां घृणां न करोति । प्राप्तस्यानुवादोऽयं । सर्व्वा हि घृणात्मनोऽन्यद्दुष्टं पश्यतो भवत्यात्मानमेवात्यन्तविशुद्धं निरन्तरं पश्यतो न घृणानिमित्तमस्तीति प्राप्तमेव । ततो न विजुगुप्सत इति ॥ ६ ॥

इममेवार्थमन्योऽपि मन्त्र आह । यस्मिन् सर्व्वाणि भूतानि । यस्मिन् काले यथोक्तात्मनि वा तान्येव भूतानि सर्व्वाणि परमार्थात्मदर्शनात् आत्मैवाभूदात्मैव संवृत्तः परमार्थवस्तु विजानतस्तत्र तस्मिन् काले तत्र चात्मनि वा कः शोकः

---

व्या० उक्तात्मज्ञानस्य फलं विधिनिषेधातीतजीवन्मुक्तस्वरूपेणावस्थानमित्याह । यस्त्विति ॥ इममेवार्थमन्योऽपि मन्त्र आह । यस्मिन्निति ॥ निरतिशयानन्दः स्वत एव दुःखास्पृष्टमात्मानमजानतो भवति हा हतोऽहं न मे पुत्रोऽस्ति न क्षेत्रमिति । ततः पुत्रादीन्

उ॰ तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥७॥
स पर्य्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपाप-

---

भा॰ को मोहः। शोकस्य मोहस्य कामबीजमज्ञानतो भवति। न चात्मैकत्वं विशुद्धं गगनोपमं पश्यतः को मोहः कः शोक इति। शोकमोहयोरविद्याकार्य्ययोराक्षेपेणासम्भवप्रदर्शनात् सकारणस्य संसारस्यात्यन्तमेवोच्छेदः प्रदर्शितो भवति॥७॥

योऽयमतीतैर्मन्त्रैरुक्त आत्मा स स्वेन रूपेणेत्याहायं मन्त्रः। सपर्य्यगात्स आत्मा पर्य्यगात्परि समन्तादगाद्गतवान् आकाशवद्व्यापीत्यर्थः। शुक्रं शुद्धं ज्योतिष्मद्दीप्तिमानित्यर्थः। अकायमशरीरो लिङ्गशरीरवर्जित इत्यर्थः। अव्रणमक्षतं। अस्नाविरं स्नावा शिरा यस्मिन्न विद्यन्त इत्यस्नाविरं। स्नाविरमव्रणमित्याभ्यां स्थूलशरीरप्रतिषेधः। शुद्धं निर्म्मलं। अपापविद्धं धर्म्माधर्म्मादिपापवर्जितमिति। शुक्रमित्यादीनि वचांसि पुंलिङ्गत्वेन परिणेयानि। स पर्य्यगादित्युपक्रम्य कविर्मनीषीति पुंलिङ्गत्वेनोपसंहारात्। कविः क्रान्तदर्शी सर्व्वदृक्। नान्यतोऽस्ति द्रष्टेत्यादिश्रुतेः। मनीषी मनस ईशिता सर्व्वज्ञ ईश्वर इत्यर्थः। परिभूः सर्व्वेषामुपर्य्युपरि भवतीति परिभूः। स्वयम्भूः स्वयं भवतीति येषामुपरि भवति यश्चो-

---

आ॰ कामयते तदर्थं देवताराधनादि चिकीर्षति नत्वात्मैकत्वं पश्यत-स्ततोऽन्वयव्यतिरेकाभ्यां शोकादेरविद्याकार्य्यत्वावधारणान्मूला-विद्यानिवृत्त्यैव शोकादेरात्यन्तिकनिवृत्तिर्विद्याफलत्वेन विव-क्षिता। भयमात्रस्य सुषुप्तेऽपि भावादित्याह। शोकस्य मोहस्येत्या-

उ० विद्धं । कविर्मनीषी परिभूः स्वयम्भूर्याथात-
थ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥ ८ ॥
अन्धन्तमः प्रविशन्ति येऽविद्यामुपासते । ततो

---

भा० परि भवति स सर्व्वं स्वयमेव भवतीति स्वयम्भूः । स नित्य-
मुक्त ईश्वरो याथातथ्यतः सर्व्वज्ञत्वाद्यथातथाभावो याथा-
तथ्यं यथाभूतकर्म्मफलसाधनतोऽर्थान् कर्त्तव्यपदार्थान्
व्यदधाद्विहितवान् यथानुरूपं व्यभजदित्यर्थः । शाश्व-
तीभ्यो नित्याभ्यः समाभ्यः संवत्सराख्येभ्यः प्रजापतिभ्य
इत्यर्थः ॥ ८ ॥

अत्राद्येन मन्त्रेण सर्व्वैषणापरित्यागेन ज्ञाननिष्ठोक्ता
प्रथमवेदार्थः । ईशावास्यमिदं सर्व्वं मा गृधः कस्यस्विद्धन-
मित्यज्ञानां जिजीविषूणां ज्ञाननिष्ठासम्भवे कुर्व्वन्नेवेह
कर्म्माणि जिजीविषेदिति कर्म्मनिष्ठोक्ता द्वितीयो वेदार्थः ।
अनयोश्च निष्ठयोर्विभागो मन्त्रप्रदर्शितयोर्बृहदारण्यके-
ऽपि प्रदर्शितः । सोऽकामयत जाया मे स्यादित्यादिना ।
अज्ञस्य कामिनः कर्म्माणीति मन एवास्यात्मा वाग्जाये-

---

आ० दिना ॥ योऽयमिति । स्नुप्रस्रवणे धातुः । स्नावयन्ति शरीरमिति
स्नावा शिरा ॥ ६ ॥ ७ ॥ ८ ॥

प्रकरणविभागं दिदर्शयिषुर्वृत्तमनुवदति । अत्राद्येनेति ॥
यदुक्तं भास्करेण सर्व्वाप्युपनिषदेकब्रह्मविद्याप्रकरणं ततः प्रक-
रणभेदकरणमनुचितं । तदसत् । प्राणाद्युपासनविधानस्याप्युपनि-
षत्सु दर्शनात् । न च तदपि ब्रह्मज्ञानाङ्गमिति वाच्यं । पृथक्फलश्र-
वणात् । स्वेनापि व्याहृताव्याहृतोपासनसमुच्चयविधानस्य प्रकरण-

उ॰ भूय इव ते तमो य उ विद्यायाꣳ रताः ॥ ९ ॥

---

भा॰ त्यादिवचनात्। अज्ञत्वं कामित्वं च निश्चितमवगम्यते। तथाच तत्फलं सप्तान्नसर्गास्तेष्वात्मभावेनात्मस्वरूपावस्थानं जायाद्येषणात्रयसन्न्यासेन चात्मविदां कर्म्मनिष्ठाप्रातिकूल्येनात्मस्वरूपनिष्ठैव दर्शिता। किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोक इत्यादिना। ये तु ज्ञाननिष्ठाः सन्न्यासिनस्तेभ्योऽसूर्य्या नाम त इत्यादिनाऽविद्वन्निन्दाद्वारेणात्मनो याथात्म्यं स पर्य्यगादित्येतदन्तैर्मन्त्रैरुपदिष्टं। ते ह्यत्राधिकृतान् कामिन इति। तथाच श्वेताश्वतराणां मन्त्रोपनिषदि अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसङ्घजुष्टमित्यादि विभज्योक्तं। ये तु कर्म्मनिष्ठाः कर्म्म कुर्व्वन्त एव जिजीविषवस्तेभ्य इदमुच्यते। अन्धं तम

---

व्या॰ भेदेनैवेष्टत्वाद्व्याकृताव्याकृतोपासनस्य प्रकारान्तरत्वात्तस्माद्यथा कर्म्मकाण्डेऽग्निहोत्रादिप्रकरणं भिन्नमेवेष्यते भिन्नाधिकारत्वात्तत्कर्म्मणस्तथोपनिषत्स्वपि भिन्नाधिकारकर्म्माविरोधाद्विरुद्धविद्याप्रकरणभेदो न विरुध्यते॥ मन्त्रार्थं ब्राह्मणसम्मतिं दर्शयितुमुपक्रमते। अनयोस्त्वित्यादिना॥ तत्र वा कथमज्ञत्वमवगम्यत इत्याशङ्क्याह। मन एवेति॥ जाया मे स्यादथ प्रजायेयाऽथ वित्तं मे स्यादथ कर्म्म कुर्वीयेति कामयमानस्य वाह्या जायादिर्यदा न सम्पद्यते तदाध्यात्मं जायादिसम्पत्तिं दर्शयति। मन इत्यादिना॥ एतच्चाज्ञत्वलिङ्गं मनआदिष्वात्मत्वाद्यभिमानस्याज्ञानकर्म्मत्वात्। यथा वा वाह्यकामिन्यलाभे सुप्ता मनोविजृम्भितकामिनीमुपभुञ्जानोऽज्ञः प्रसिद्धस्तद्वदयमपीत्यर्थः॥ तेषाञ्च कर्म्मणां फलं संसाराग्निरेवेत्यपि दर्शितमित्याह। तथा चेति॥ एकं साधारणमन्नं यदिदमद्यते द्वे देवानां हुतप्रहुते दर्शपौर्णमासौ

भा० इत्यादि। कथं पुनरेवमवगम्यते न तु सर्व्वेषामित्युच्यते। अकामिनः साध्यसाधनभेदोपमर्द्देन। यस्मिन्सर्व्वाणि भूतानि आत्मैवाभूद्विजानतः। तत्र को मोहः कः शोक एकत्वमनुपश्यतः। यदात्मैकत्वविज्ञानं तत्र केनचित्कर्म्मणा ज्ञानान्तरेण वा वाह्यमूढः समुच्चिचीषति। इह ग्रन्थे तु समुच्चिचीषयाऽविद्वदादिनिन्दा क्रियते। तत्र च यस्य येन समुच्चयः सम्भवति न्यायतः शास्त्रतो वा तदिहोच्यते। तद्दैवं वित्तं देवतादिज्ञानं कर्म्मसम्बन्धित्वेनोपन्यस्तं न परमात्मज्ञानं। विद्यया देवलोक इति पृथक्फलश्रवणात्। तयोर्ज्ञानकर्म्मणोरिहैकैकानुष्ठाननिन्दा समुच्चिचीषया न निन्दापरैवैकैकस्य पृथक्फलश्रवणात्।

---

आ० वा त्रीण्यस्य भोगसाधनानि मनोवाक्प्राणलक्षणानि पश्वर्थमेकं पय इति सप्तान्नसर्गो दर्शितः। श्रुत्या यत्सप्तान्नानि मेधया तपसा जनयतीत्यादिना। अत्रैकैको यजमान एवं विहितप्रतिषिद्धज्ञानकर्म्मानुष्ठानात्सर्व्वस्य संसारस्य साक्षात्पारम्पर्य्याभ्यां जनकत्वात्पितोच्यते। स्रष्टेष्वेतेषु तस्य पितुरहं ममेदमित्यात्मत्वाध्यासेन मनआदिष्वितरेषु च सम्बन्धाध्यासेनावस्थानं संसारः प्रसिद्ध इत्यर्थः॥ एवं मन्त्रप्रदर्शिते निष्ठाद्वये ब्राह्मणसम्मतिं दर्शयित्वा प्रकरणविभागं दर्शयति। ये तु ज्ञाननिष्ठा इत्यादिना॥ अत्याश्रमिभ्य इति उत्तमाश्रमिभ्य इत्यर्थः। साध्यसाधनभेदोपमर्द्देन यदात्मैकत्वविज्ञानं यस्मिन् सर्व्वाणि भूतान्यात्मैवाभूदित्यवधारणेनोक्तं पूर्व्वार्द्धेनोत्तरार्द्धेन च संसारनिवृत्तिफलकमुक्तं तत्र केनचिदमूढः समुच्चिचीषति। अन्धन्तम इत्यादौ तु समुच्चिचीषया विद्वदादिनिन्दा दृश्यते। ततः किमित्यत आह। तत्र च यस्येति॥ कस्य तर्हि ज्ञानस्य कर्म्मसमुच्चयः सम्भवतीत्यत आह। तद्दैवं वित्तमिति॥ यथोक्तं भास्करेण। ईशावास्यमिति मन्त्रे ब्रह्म-

भा० विद्यया तदारोहन्ति। विद्यया देवलोकः। न तत्र दक्षिणा यान्ति। कर्मणा पितृलोक इति। न हि शास्त्रविहितं किञ्चिदकर्त्तव्यतामियात्तत्र। अन्धन्तमः अदर्शनात्मकं तमः प्रविशन्ति। के। येऽविद्यां विद्याया अन्याऽविद्या तां कर्मेत्यर्थः। कर्मणो विद्याविरोधित्वात्। तामविद्यामग्निहोत्रादिलक्षणामेव केवलामुपासते तत्पराः सन्तोऽनुतिष्ठन्तीत्यभिप्रायः। ततस्तस्मादन्धात्मकात्तमसो भूय इव बहुतरमेव तमः प्रविशन्ति। कर्म हित्वा ये उ विद्यायामेव देवताज्ञाने रताः। तत्रावान्तरफलभेदं विद्याकर्मणोः

---

आ० विद्यायाः प्रक्रान्तत्वात्तस्या एव समुच्चिचीषया निन्दोच्यत इति। तदसत्। न हि प्रकृतमित्येतावता सम्बध्यते किन्तु सम्बन्धयोग्यं। शुद्धब्रह्मात्मैकत्वविद्यायास्त्वध्यासोपमर्दकत्वान्नास्ति कर्मसम्बन्धयोग्यता। किञ्च यस्मिन्निष्पन्नेऽपि फलस्य व्यवधानं सम्भाव्यते तस्यैव सहकारिसमुच्चय इष्यते। दर्शनादेरिवैहैकत्वमनुपश्यतः को मोहः कः शोक इत्येकत्वदर्शनसमकालं मोहादिनिवृत्त्यभिधानान्न कालान्तरीयफलं। ततो न सहकारिसमुच्चिचीषा। किञ्चास्या मन्त्रोपनिषदो ब्राह्मणा विविदिषन्ति यज्ञेनेत्यादौ तृतीयाश्रुत्या यज्ञादेरिष्यमाणवेदनकरणत्वेन सम्बन्धः प्रतीयते। तत्कथं दुर्बलेन प्रकरणेन सहकारिसम्बन्धः कल्प्यते। प्रधानस्य च विद्यायाः सहकारिसम्बन्धविधित्सया निन्देत्यप्ययुक्तं। अत एवाग्नीन्धनाद्यनपेक्षेतिसूत्रविरोधश्च समसमुच्चयस्य परेणापि नेष्यते। विरोधेन च परिजह्रे तस्मात्कर्माविरुद्धदेवताज्ञानस्यैव समुच्चयो विधीयते॥ ननु देवताज्ञानस्य कर्मफलातिरिक्तफलाभावात्समुच्चयो न सम्भवतीत्यत आह। विद्ययेति॥ ननु समुच्चिचीषया निन्देति किमिति व्याख्यायते अध्ययनविधेर्मोक्षादर्वाक्पर्यवसानानुपपत्तेर्देवलोकादिप्राप्तेः फलाभासत्वात्प्रशंसार्थैव निन्दा किं नेष्यते तत्राह। तयोर्ज्ञानकर्मणोरिति॥ फलशब्दो मोक्षे रूढो

उ॰ अन्यदेवाहुर्विद्ययाऽन्यदेवाहुरविद्यया इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १० ॥

विद्याञ्चाविद्याञ्च यस्तद्वेदोभयꣳ सह। अवि-

---

भा॰ समुच्चयकारणमाह । अन्यथा फलवदफलवतोः सन्निहितयोरङ्गाङ्गितया जामितैव स्यादित्यर्थः ॥ ९ ॥

अन्यत्पृथगेव विद्यया क्रियते फलमित्याहुर्वदन्ति। अन्यदाहुरविद्यया कर्म्मणा क्रियत इति । तथोक्तं कर्म्मणा पितृलोको विद्यया देवलोक इति । एवं शुश्रुमः श्रुतवन्तो वयं धीराणां धीमतां वचनं । ये आचार्य्या नोऽस्मभ्यं तत्कर्म्म च ज्ञानञ्च विचचक्षिरे व्याख्यातवन्तस्तेषामयमागमः पारम्पर्य्यागत इत्यर्थः ॥ १० ॥

यत एवं विद्याञ्चाविद्याञ्च देवताज्ञानं कर्म्म चेत्यर्थः । यस्तदेतदुभयं सहैकेन पुरुषेणानुष्ठेयं वेद तस्यैवं समुच्चयकारिण एकपुरुषार्थसम्बन्धः क्रमेण स्यादित्युच्यते । अविद्यया कर्म्मणाऽग्निहोत्रादिना मृत्युं स्वाभाविकं कर्म्म ज्ञा-

---

आ॰ मोक्षमनिच्छतामपि समीहिते फलव्यवहारदर्शनात्ततो यो देवलोकादिमुपादित्सते तस्य तदपि फलं भवत्येवेत्यर्थः ॥ ९ ॥

चित्तत्त्वा माया परमेश्वरस्योपाधिः । मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरमित्यादिश्रुत्यन्तरप्रसिद्धात्रासम्भूतिशब्देनोच्यते न ब्रह्म । तस्य निर्विकारस्य साक्षात्प्रकृतितत्त्वत्वानुपपत्तेः । भास्कराभिमतस्तु परिणामवादस्तत्त्वालोके निरस्त एवास्माभिः सांसारिकदुःखानुभवाभावने च सुषुप्तिवत्प्रकृतिलयस्य पुरुषेणार्थ्यमानताऽप्युपपद्यते। फलञ्च कर्म्मोपासन इव प्रकृत्युपासनेऽपि परमेश्वर एव दास्यति। ततो जडत्वात्प्रकृतेः फलदत्वानुपप-

उ॰ द्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥ ११ ॥

अन्धन्तमः प्रविशन्ति येऽसम्भूतिमुपासते ।

ततो भूय इव ते तमो य उ सम्भूत्याꣳ रताः॥ १२॥

अन्यदेवाहुः सम्भवादन्यदाहुरसम्भवात् ।

---

भा॰ नन्तु मृत्युशब्दवाच्यमुभयं तीर्त्वा अतिक्रम्य विद्यया देवताज्ञानेनामृतं देवतात्मभावमश्नुते प्राप्नोति। तद्ध्यमृतमुच्यते यद्देवतात्मगमनं ॥ ११ ॥

अधुना व्याकृताव्याकृतोपासनयोः समुच्चिचोषया प्रत्येकं निन्दोच्यते। अन्धन्तमः प्रविशन्ति ये असम्भूतिं सम्भवनं सम्भूतिः सा यस्य कार्यस्य सा सम्भूतिः तस्यान्या असम्भूतिः प्रकृतिः कारणमव्याकृताख्यं तामसम्भूतिमव्याकृताख्यं प्रकृति कारणमविद्यां कामकर्मवीजभूतामदर्शनात्मिकामुपासते ये ते तदनुरूपमेवान्धतमोऽदर्शनात्मकं प्रविशन्ति॥ ततस्तस्मादपि भूयो बहुतरं तमः प्रविशन्ति ये सम्भूत्यां कार्य्यब्रह्मणि हिरण्यगर्भाख्ये रताः॥ १२ ॥

अधुनोभयोरुपासनयोः समुच्चयकारणमवयवफलभेदमाह। अन्यदेव पृथगेवाहुः फलं सम्भवात्सम्भूतेः कार्य्यब्रह्मोपासनादणिमाद्यैश्वर्य्यलक्षणमाख्यातवन्त इत्यर्थः ।

---

श्रा॰ त्तेरुपास्यत्वाऽनुपपत्तिरित्यपि कुचोद्यमेव ॥ १० । ११ । १२ ॥ विस्तरेणोक्तमर्थज्ञानं सङ्क्षिप्योपसंहरति। मानुषदैववित्तसाध्यमित्यादिना ॥ शरीरपाटवं गोभूहिरण्यादिसाधनसम्पत्तोस्व मानुषं वित्तं। दैवं वित्तं देवताज्ञानमुत्तरग्रन्थस्य सम्बन्धाभिधित्सयार्थं ॥

उ० इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥१३॥

सम्भूतिञ्च विनाशञ्च यस्तद्वेदोभयꣳ स ह ।

---

भा० तथा चान्यदाहुरसम्भवादसम्भूतेरव्याकृतादव्याकृतोपासनाद्यदुक्तमन्धन्तमः प्रविशन्तीति प्रकृतिलय इति च पौराणिकैरुच्यते इति एवं शुश्रुम धीराणां ये नस्तद्विचचक्षिरे व्याकृताव्याकृतोपासनफलं व्याख्यातवन्त इत्यर्थः ॥ १३ ॥

यत एवमतः समुच्चयः सम्भूत्यसम्भूत्युपासनयोर्युक्त एकपुरुषार्थत्वाच्चेत्याह । सम्भूतिं च विनाशञ्च । यस्तद्वेदोभयं सविनाशो धर्म्मो यस्य कार्य्यस्य स तेन धर्म्मिणाऽभेदेनोच्यते । विनाश इति तेन तदुपासनेनाऽनैश्वर्य्यमधर्म्मकामादिदोषजातञ्च मृत्युं तीर्त्वा हिरण्यगर्भोपासनेन ह्यणिमादिप्राप्तिः फलं । तेनानैश्वर्य्यादिमृत्युमतीत्यासम्भूत्या अव्याकृतोपासनया अमृतं प्रकृतिलयलक्षणमश्नुते । सम्भूतिञ्च विनाश-

---

आ० विशेषमनुवदति । तत्र निषेकादीति ॥ तदुक्तमिति प्रत्युक्तमन्त्रेण ॥ विद्याञ्चेत्यादित्रिकामृतत्वं फलमित्युक्तमस्माभिरिति योजना । व्याहृत्यवयव इति तस्य भूरिति शिरो भुव इति बाहू स्वरिति प्रतिष्ठे पादावित्यर्थः । मन्त्रान्पदशो व्याख्याय सङ्क्षेपतो विचारमारभते । अविद्यया मृत्युं तीर्त्वेत्यादिना ॥ अमृतत्वञ्चेत्यमृतत्वञ्च मुख्यमेव कस्मान्न गृह्यते इति सम्बन्धः । शास्त्रीययोर्ज्ञानकर्म्मणोर्विरोधाविरोधौ शास्त्रीयावेव ग्राह्यौ न तर्कमात्रेणेति परेणोक्तं ॥ सिद्धान्ती शास्त्रसिद्ध एव विरोध इत्याह । दूरमेत इति ॥ विषूची नानागती विद्याऽविद्ये दूरं विपरीतेऽतिशयेन विरुद्धे इत्यर्थः । सहसम्भवानुपपत्तेरिति कानुपपत्तिः । काठके विरोधश्रवणात् । तद्गतविद्याऽविद्ययोर्विरोधोऽस्ति हेत्वविरोधश्रुत्या

उ॰ विनाशेन मृत्युं तीर्त्वा सम्भूत्यामृतमश्नुते ॥ १४ ॥
हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखं ।

भा॰ इत्यत्रावर्णलोपेन विनिर्द्देशो द्रष्टव्यः । प्रकृतिलयफलं श्रुत्यनुरोधात् । मानुषदैववित्तसाध्यं फलं शास्त्रलक्षणं प्रकृतिलयान्तं । एतावती संसारगतिः । अतः परं पूर्व्वोक्त-मात्मैवाऽभूद्विजानत इति सर्व्वात्मभाव एव सर्व्वैषणास-न्यासज्ञाननिष्ठाफलं एवं द्विप्रकारः प्रवृत्तिनिवृत्ति-लक्षणो वेदार्थोऽत्र प्रकाशितः । तत्र प्रवृत्तिलक्षणस्य वेदार्थस्य विधिप्रतिषेधलक्षणस्य कृत्स्नस्य प्रकाशने प्रवर्ग्यान्तं ब्राह्मणमुपयुक्तं । निवृत्तिलक्षणस्य प्रकाशनेऽत ऊर्द्धं बृह-दारण्यकं तत्र निषेकादिश्मशानान्तं कर्म्म कुर्वन् जिजीवि-षेत् यो विद्यया सहापरब्रह्मविषयया । तदुक्तं विद्याञ्चा-विद्याञ्च यस्तद्वेदोभयꣳ सह ॥ १४ ॥

अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुत इत्युक्तं तत्र केन मार्गेणामृतत्वमश्नुत इत्युच्यते । तद्यत्तत्सत्यमसौ स आदित्य य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणे-ऽक्षन्पुरुष एतदुभयꣳ सत्यं ब्रह्मोपासीनो यथोक्तकर्म्मकृच्च यः सोऽन्तकाले प्राप्ते सत्यात्मानमात्मनः प्राप्तिद्वारं याचते

आ॰ दविरोधो भविष्यतीति न वाच्यं विरोधाविरोधयोः सिद्धत्वेन विकल्पसम्भवादुदितानुदितहोमयोर्हि पुरुषतन्त्रत्वाद्युक्तो वि-कल्प इत्युक्तं तर्ह्यविरोध एवास्तु समुच्चयविधिबलादितिचेन्न। मुख्यब्रह्मविद्याविद्ययोः शुक्तिविद्याविद्ययोरिव सहसम्भवानुप-पत्तेः समुच्चयविधिरसिद्धः । सिद्धे समुच्चयविधौ तद्बलादवि-

उ० तत्त्वम्पूषन्नपावृणु सत्यधर्म्माय दृष्टये ॥ १५ ॥
पूषन्नेकर्षे यम सूर्य्य प्राजापत्य व्यूह रश्मीन्

---

भा० हिरण्मयेन पात्रेण। हिरण्मयमिव हिरण्मयं ज्योतिर्म्मय-मित्येतत् । तेन पात्रेणेवापिधानभूतेन सत्यस्यादित्य-मण्डलस्थस्य ब्रह्मणोऽपिहितं छादितं मुखं द्वारं तत्त्वं हे पूषन् अपावृणु सत्यधर्म्माय तव सत्यस्योपासनात् सत्यं धर्म्मो यस्य मम सोऽहं सत्यधर्म्मा तस्मै मह्यं अथवा यथाभूतस्य धर्म्मस्यानुष्ठात्रे दृष्टये तव सत्यात्मन उप-लब्धये ॥ १५ ॥

हे पूषन् जगतः पूषणात्पूषा रविस्तथैक एव ऋषति गच्छतीत्येकर्षिः । हे एकर्षे । तथा सर्वस्य संयमनाद्यमः । हे यम। तथा रश्मीनां प्राणानां रसानां स्वीकरणात्सूर्य्यः। हे सूर्य्य। प्रजापतेरपत्यं प्राजापत्यः। हे प्राजापत्य । व्यूह विगमय रश्मीन् स्वान्। समूह एकीकुरु उपसंहर ते तेजस्तापकं ज्योतिः। यत्ते तव रूपं कल्याणतममत्यन्तशो-भनं तत्ते तवात्मनः प्रसादात्पश्यामि। किञ्चाहं न तु त्वां

---

व्या० रोधसिद्धिरविरोधावगमाच्च समुच्चयसिद्धिरित्यन्योन्याश्रयः स्या-दित्यर्थः । सहसम्भवानुपपत्तावपि क्रमेणैकाश्रयविद्याविद्ये स्यातामिति चेत् यदि पूर्व्वमविद्या पश्चात्तु विद्येति क्रमस्तर्ह्नि-ष्यत एव यदि पश्चात्तर्ह्यसम्भव इत्याह । न विद्योत्पत्ताविति ॥ पूर्व्वसिद्धाया अविद्यायाः प्रध्वस्तत्वादन्यस्याश्चोत्पत्तौ कारणा-सम्भवान्मूलाभावेन भ्रमसंशयाग्रहणानामपि विदुषोऽनुपपत्ति-रित्यर्थः । विद्योत्पत्तौ माभूदविद्या कामकर्म्म तु भविष्यति

उ॰ समूह। तेजो यत्ते रूपङ्कल्याणतमन्तत्ते पश्यामि योऽसावसौ पुरुषः सोऽहमस्मि ॥ १६ ॥

वायुरनिलममृतमथेदं भस्मान्तꣳ शरीरं। ॐ क्रतो स्मर कृतꣳ स्मर क्रतो स्मर कृतꣳ स्मर ॥ १७ ॥

---

भा॰ भृत्यवद्याचे योऽसावादित्यमण्डलस्थो व्याहृत्यवयवपुरुषः पुरुषाकारत्वात् पूर्णं। अनेन प्राणबुद्ध्यात्मना जगत्समस्तमिति पुरुषः पुरिशयनाद्वा पुरुषः सोऽहमस्मि भवामि॥ १६ ॥

अथेदानीं मम मरिष्यतो वायुः प्राणोऽध्यात्मपरिच्छेदं हित्वाऽधिदेवतात्मानं सर्वात्मकमनिलममृतं सूत्रात्मानं प्रतिपद्यतामिति वाक्यशेषः। लिङ्गञ्चेदं ज्ञानकर्म्मसंस्कृतं उत्क्रामत्विति द्रष्टव्यं। मार्गयाचनसामर्थ्यादथेदं शरीरमग्नौ हुतं भस्मान्तं भूयात्॥ ओमिति यथोपासनं ॐप्रतीकात्मकत्वात्सत्यात्मकमग्न्याख्यं ब्रह्म भेदेनोच्यते। हे क्रतो सङ्कल्पात्मक स्मर यन्मम स्मर्त्तव्यं तस्य कालोऽयं प्रत्युपस्थितोऽतः स्मर एतावन्तं कालं भावितं कृतमग्ने स्मर यन्मया बाल्यप्रभृत्यनुष्ठितं कर्म्म तच्च स्मर क्रतो स्मर। कृतं स्मरेति पुनर्वचनमादरार्थं॥ १७ ॥

---

व्या॰ विदुषोऽपि व्याख्यानभिक्षाटनादिदर्शनादित्याशङ्क्याह। अविद्यासम्भवादिति ॥ चोदनाप्रयुक्तानुष्ठानं हि कर्म्म ज्ञानेन सह तव समुच्चिचीषितं ब्रह्मात्मैकत्वं साक्षादनुभवतो न चोदना सम्भवति कामाभावात्कामिनो हि सर्वाश्चोदनाः। अकामतः क्रियाः काश्चिद्दृश्यन्ते न हि कस्यचित्। यद्यद्धि कुरुते

उ॰ अग्ने नय सुपथा राये अस्मान् विश्वानि देव

भा॰ पुनरन्येन मन्त्रेण मार्गं याचते। हे अग्ने नय गमय सुपथा शोभनेन मार्गेण। सुपथेति विशेषणं दक्षिणमार्गनिवृत्त्यर्थं। निर्व्विण्णोऽहं दक्षिणेन मार्गेण गतागतलक्षणेनातो याचे त्वां पुनः पुनर्गमनागमनवर्जितेन शोभनेन पथा नय। राये धनाय कर्म्मफलभोगायेत्यर्थः। अस्मान्यथोक्तधर्म्मफलविशिष्टान् विश्वानि सर्व्वाणि हे देव वयुनानि कर्म्माणि प्रज्ञानानि वा विद्वान् जानन्। किञ्च युयोधि वियोजय विनाशय अस्मदस्मत्तो जुहुराणं कुटिलं वञ्चनात्मकमेनः पापं। ततो वयं विशुद्धाः सन्त इष्टं प्राप्स्याम इत्यभिप्रायः। किन्तु वयमिदानीं ते न शक्नुम परिचर्य्यां कर्त्तुं भूयिष्ठां बहुतरां। ते तुभ्यं नमउक्तिं नमस्कारवचनं विधेम तव नमस्कारेण परिचरेम इत्यर्थः। अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते। विनाशेन मृत्युं तीर्त्वा सम्भूत्याऽमृतमश्नुत इति श्रुत्वा केचित्संशयं कुर्व्वन्ति अतस्तन्निर्द्धारणार्थं सङ्क्षेपतो विचारणां करिष्यामः। तत्र तावत् किंनिमित्तः संशय इत्युच्यते। विद्याशब्देन मुख्या परमात्मविद्यैव कस्मान्न गृह्यतेऽमृतत्वञ्च। ननूक्तायाः परमात्मविद्यायाः कर्म्मणश्च विरोधात्समुच्चयानुपपत्तिः। सत्यं।

---

आ॰ जन्तुस्तत्तत्कामस्य चेष्टितमिति स्मरणात्। विद्वच्छरीरस्थितिस्तु विद्यालेशाश्रया। कर्म्मशेषनिमित्तं तु विदुषो भिक्षाटनादि न कर्म्मचोदनाभावात्किन्तु यावत्प्राणशरीरसंयोगभावितकर्म्मा-

उ० वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो

भा० विरोधोऽस्तु नावगम्यते विरोधाविरोधयोः शास्त्रप्रमाणकत्वात्। यथाऽविद्यानुष्ठानं विद्योपासनञ्च शास्त्रप्रमाणकं तथा तद्विरोधाऽतद्विरोधावपि। यथा च न हिंस्यात्सर्वाभूतानि इति शास्त्रावगतं पुनः शास्त्रेणैव बाध्यतेऽध्वरेऽपि हिंसा स्यादिति । एवं विद्याविद्ययोरपि स्यात्। विद्याकर्म्मणोश्च समुच्चये न दूरमेते विपरीते विषूची अविद्या या च विद्येति श्रुतेः। विद्याञ्चाविद्याञ्चेति वचनादविरोध इति चेन्न। हेतुस्वरूपफलविरोधात्। विद्याविद्याविरोधाविरोधयोर्विकल्पासम्भवादविरोध एवेति चेन्न। सहसम्भवानुपपत्तेः । क्रमेण स्यातां विद्याविद्ये इति चेन्न। विद्योत्पत्तौ तदाश्रयेऽविद्यानुपपत्तेः । न ह्यग्निरुष्णः प्रकाशश्चेति विज्ञानोत्पत्तौ यस्मिन्नाश्रये तदुत्पन्नं तस्मिन्नेवाश्रये शीतोऽग्निरप्रकाशो वेत्यविद्याया उत्पत्तिर्नापि संशयोऽज्ञानं वा। यस्मिन् सर्व्वाणि भूतानि आत्मैवाऽभूद्विजानतस्तत्र को मोहः कः शोक एकत्वमनुपश्यत इति शोकमोहाद्यसम्भवश्रुतेः । अविद्यासम्भवात्तदुपादानस्य कर्म्मणोऽप्यनुपपत्तिमवोचाम। अमृतमश्नुत इत्यापेक्षिकममृतं विद्याशब्देन परमात्मविद्याग्रहणे हिरण्मयेत्यादिना

व्या० भासं तच्च विद्वान्न स्वगतं मन्यते कर्म्माध्यासोपादानाविद्याया असम्भवान्नैव किञ्चित्करोमीति प्रत्ययाच्चेति भावः। यदुक्तममृतशब्देन मुख्यमेवामृतत्वं किं न गृह्यते। विद्याशब्देन च परमात्म-

उ० भूयिष्ठान्ते नमउक्तिं विधेम ॥ १८ ॥ इति वाजसनेयसंहितोपनिषत्सम्पूर्णा ॥

भा० द्वारमार्गयाचनमनुपपन्नं स्यात्तस्माद्यथाऽस्माभिर्व्याख्यात एव मन्त्राणामर्थ इत्युपरम्यते ॥ १८ ॥ इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्य्यस्य श्रीशङ्करभगवतः कृतौ वाजसनेयसंहितोपनिषद्भाष्यं सम्पूर्णं ॥*॥

॥ ॐ तत्सत् ॥

व्या० विद्येति तत्राह। अमृतमिति॥ मुख्यामृतत्वग्रहणे हिरण्मयादिमन्त्रेण द्वारमार्गयाचनमनुपपन्नं स्यात्तस्य न प्राणा उत्क्रामन्त्यत्र ब्रह्म समश्नुते इत्यादिश्रुतेः। ततो मुख्यार्थबाधाद्गौणार्थग्रहणं युक्तमित्यर्थः। यस्मादर्थान्तरं न सङ्गच्छते तस्मादित्युपसंहारः॥ ॥ १३ । १४ । १५ । १६ । १७ । १८ ॥ ईशाप्रभृतिभाष्यस्य शाङ्करस्य परात्मनः। मन्दोपकृतिसिद्ध्यर्थं प्रणीतं टिप्पणं स्फुटं॥ इति श्रीपरमहंसपरिव्राजकाचार्य्यश्रीशुद्धानन्दभगवत्पूज्यपादशिष्यभगवदानन्दज्ञानकृता वाजसनेयसंहितोपनिषद्भाष्यटीका समाप्ता ॥ ॐ तत्सत् ॥

ॐ तत्सत् ॥

## सामवेदीयतलवकारोपनिषद्भाष्यं ॥

भा० ॐ परमात्मने नमः । केनेषितमित्याद्योपनिषत्परब्रह्मविषया वक्तव्येति नवमस्याध्यायस्यारम्भः ॥ प्रागेतस्मात्कर्म्माण्यशेषतः परिसमापितानि समस्तकर्म्माश्रयभूतस्य च प्राणस्योपासनान्युक्तानि कर्म्माङ्गसामविषयाणि च । अनन्तरञ्च गायत्रसामविषयदर्शनं वंशान्तमुक्तं कार्य्यं सर्व्वमेतद्यथोक्तं कर्म्म च ज्ञानञ्च सम्यगनुष्ठितं निष्कामस्य मुमुक्षोः सत्त्वशुद्ध्यर्थं भवति। सकामस्य तु ज्ञानरहितस्य केवलानि श्रौतानि स्मार्त्तानि च कर्म्माणि दक्षिणमार्गप्रतिपत्तये पुनरावृत्तये च भवन्ति । स्वाभाविक्या

---

व्या० ॐ परमात्मने नमः ॥ ॐ ॥ यच्छ्रोत्रादेरधिष्ठानश्चक्षुर्वागाद्यगोचरं । स्वतोऽध्यक्षं परं ब्रह्म नित्यमुक्तं भवामि तत् ॥ १ ॥

केनेषितमित्यादिकां तलवकारशाखोपनिषदं व्याचिख्यासुर्भगवान् भाष्यकारोऽहंप्रत्ययगोचरस्यात्मनः संसारित्वादसंसारिब्रह्मभावस्योपनिषत्प्रतिपाद्यस्यासम्भवान्निर्विषयत्वादव्याख्येयत्वमित्याशङ्क्याहङ्कारसाक्षिणः संसारित्वग्राहकप्रमाणाविषयत्वाद्ब्रह्मत्वप्रतिपादने विरोधासम्भवात्सविषयत्वाद्व्याख्येयत्वं प्रतिजानीते, केनेषितमित्याद्येति ॥ कस्तर्हि नवमस्याध्यायस्याष्टाध्याय्या सह नियतपूर्व्वोत्तरभावानुपपत्तिलभ्यः सम्बन्ध इत्याशङ्क्य हेतुहेतुमद्भावलक्षणसम्बन्धं दर्शयितुं वृत्तमनुवदति। प्रागेतस्मादित्यादिना ॥ कर्म्माङ्गसाम पाञ्चभक्तिकं साप्तभक्तिकञ्च तद्विषयाण्युपा-

भा० त्वशास्त्रीयया प्रवृत्त्या पश्वादिस्थावरान्ता अधोगतिः स्यात्। तथैतयोः पथोर्न कतरे च न तानीमानि क्षुद्राण्यस-कृदावर्त्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयं-स्थानमिति श्रुतेः। प्रजा ह तिस्रोऽत्यायमीयुरिति मन्त्र-वर्णाद्विशुद्धसत्त्वस्य तु निष्कामस्यैव वाह्यादनित्यात्साध्य-साधनसम्बन्धादिह कृतात्पूर्व्वकृताद्वा संस्कारविशेषोद्भवा-द्विरक्तस्य प्रत्यगात्मविषया जिज्ञासा प्रवर्त्तते तदेतद्वस्तु प्रश्नप्रतिवचनलक्षणया श्रुत्या प्रदर्श्यते केनेषितमित्याद्यया। काठके चोक्तं। पराञ्चि खानि व्यतृणत्स्वयम्भूस्तस्मात्पराङ् पश्यति नान्तरात्मन्। कश्चिद्धीरः प्रत्यगात्मानमैक्षदा-वृत्तचक्षुरमृतत्वमिच्छन्नित्यादि परीक्ष्य लोकान् कर्म्मचि-तान् ब्राह्मणो निर्व्वेदमायान्नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमि-

---

आ० सनानि पृथिव्यादिदृष्ट्योक्तानि। प्राणदृष्ट्या गायत्रसामोपासनञ्च। शिष्याचार्य्यसन्तानाविच्छेदो वंशस्तदवसानेन ग्रन्थेन कार्य्यरूप-मेव वस्तूक्तञ्चेत्तर्हि प्राणाद्युपासनसहितस्य कर्म्मणः संसारफलत्वात् ब्रह्मज्ञानानुपयोगात्कथं हेतुहेतुमद्भावः सम्बन्धो विधित्सित इत्या-शङ्क्य नित्यकर्म्मणां तावज्ज्ञानोपयोगित्वं कथयति। सर्व्वमेत दिति॥ काम्यानां प्रतिषिद्धानाञ्च फलं तद्दोषदर्शनेन वैराग्यार्थं कथयति। सकामस्य त्विति॥ एतयोः पथोर्ज्ञानकर्म्मणोर्मध्ये केनापि मार्गेण येन प्रवृत्तास्ते प्रतिषिद्धानुष्ठायिन इत्यर्थः। जायस्व म्रियस्वेति पुनःपुनर्जायन्ते म्रियन्ते चेत्यर्थः। तिस्रः प्रजाः स्वेदजाण्डजोद्भिज्जलक्षणाः। पितृयानदेवयानलक्षणमार्गगमन-द्वयमतीत्य कष्टामेव गतिमीयुः प्राप्ता इत्यर्थः॥ एवं कर्म्मफलमुक्त्वा ततो विरक्तस्य विशुद्धसत्त्वस्य ब्रह्मज्ञानेऽधिकार इति दर्शयन् हेतुहेतुमद्भावमाह। विशुद्धसत्त्वस्य त्विति॥ साध्यसधनसम्बन्धा-

भा॰ त्यादि। आथर्व्वणे च॥ एवं हि विरक्तस्य प्रत्यगात्मविषयं विज्ञानं श्रोतुं मन्तुं विज्ञातुञ्च सामर्थ्यमुपपद्यते नान्यथा। एतस्माच्च प्रत्यगात्मब्रह्मविज्ञानात्संसारबीजमज्ञानं कामकर्म्मप्रवृत्तिकारणमशेषतो निवर्त्तते। तत्र को मोहः कः शोक एकत्वमनुपश्यत इति मन्त्रवर्णात्। तरति शोकमात्मविद्भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व्वसंशयाः। क्षीयन्ते चास्य कर्म्माणि तस्मिन्दृष्टे परावर इत्यादिश्रुतिभ्यश्च। कर्म्मसहितादपि ज्ञानादेतत्सिध्यतीति चेन्न। वाजसनेयके तस्यान्यकारणत्ववचनाज्जाया मे स्यादिति प्रस्तुत्य पुत्रेणायं लोको जय्यो नान्येन कर्म्मणा कर्म्मणा पितृलोको विद्यया देवलोक इत्यात्मनोऽन्यस्य लोकत्रयस्य कारणत्वमुक्तं। वाजसनेयके तत्रैव च पारिव्राज्यविधाने हेतुरुक्तः। किं प्रजया करिष्यामो येषां नोऽयमात्मा नायं लोक इति

---

आ॰ विरक्तस्येति सम्बन्धः॥ तत्र निमित्तस्यादृष्टस्यानियतत्वमाह। इह कृतादिति॥ कर्म्मफलाद्विरक्तस्य ब्रह्मजिज्ञासा भवतीत्यत्र संवादमाह। काठके चेति। आवृतचक्षुरिति साध्यसाधनभावादुपरतकरणग्रामश्चक्षुर्ग्रहणस्योपलक्षणार्थत्वात्॥ अन्वयव्यतिरेकसिद्धत्वञ्चाह। एवं हीति॥ नान्यथेत्यविरक्तस्य बहिर्विषयाक्षिप्तचेतस आत्मजिज्ञासैवानुपपन्ना कथञ्चिज्जातापि न फलावसाना स्यात् शूद्रयागादिवदित्यर्थः। यद्यप्येवमुपनिषदः कर्म्मकाण्डसम्बन्धोऽस्ति तथाप्युपनिषज्जन्यज्ञानस्य निष्प्रयोजनत्वान्नोपनिषदो व्याख्यारम्भः सम्भवतीत्याशङ्क्याह। एतस्माच्चेति॥ समुच्चयवादिनोऽभिप्रायं शङ्कते। कर्म्मसहितादपीति॥ एकाध्ययनविधिपरिगृहीतत्वात्कर्म्मज्ञानकाण्डयोरेकं फलं वाच्यं ततः कर्म्मसमुच्चिताज्ज्ञानात्सनिदानसंसारनिवृत्तिलक्षणं फलं सिध्यतीति न कर्म्मसु विरक्तस्योपनिषदारम्भ इत्यर्थः॥ अध्ययन-

भा० तत्रायं हेत्वर्थः । प्रजाकर्म्मतत्संयुक्तविद्याभिर्मनुष्यपितृदेवलोकत्रयसाधनैरनात्मलोकप्रतिपत्तये कारणैः किं करिष्यामो न चास्माकं लोकत्रयमनित्यं साधनसाध्यमिष्टं येषामस्माकं स्वाभाविकोऽजोऽजरोऽमृतोऽभयो न वर्द्धते कर्म्मणा नो कनीयान् नित्यश्च लोक इष्टः । स च नित्यत्वान्नाविद्यानिवृत्तिव्यतिरेकेणान्यसाधननिष्पाद्यस्तस्मात्प्रत्यगात्मब्रह्मविज्ञानपूर्व्वकः सर्व्वैषणासन्न्यास एव कर्त्तव्य इति । कर्म्मसहभावित्वविरोधाच्च प्रत्यगात्मब्रह्मविज्ञानस्य । न ह्युपात्तकारकफलभेदविज्ञानेन कर्म्मणा प्रत्यस्तमितसर्व्वभेददर्शनस्य प्रत्यगात्मब्रह्मविषयस्य सहभावित्वमुपपद्यते । वस्तुप्राधान्ये सत्यपुरुषतन्त्रत्वाद्ब्रह्मविज्ञानस्य । तस्माद्दृष्टादृष्टेभ्यो वाह्यसाधनसाध्येभ्यो विरक्तस्य प्रत्यगात्मविषया ब्रह्मजिज्ञासेयं केनेषितमित्यादिश्रुत्या

---

आ० विधिपरिग्रहमात्रेण कर्म्मकाण्डस्य न मोक्षफलत्वं कल्पयितुं शक्यं फलान्तरावगमविरोधादित्याह । वाजसनेयक इति ॥ किञ्च यदि श्रुतेः कर्म्मसमुच्चिताज्ज्ञानं विवक्षितं स्यात्तदा पारिव्राज्यं नोपदिश्येत ॥ श्रुत्या हेत्वभिधानेन ततो न समुच्चयः श्रुत्यर्थ इत्याह । तत्रैव चेति ॥ प्रजाशब्दस्योपलक्षणार्थत्वमादाय हेत्वर्थमाह । तत्रायमिति ॥ किं करिष्यामो न किमप्यात्मकामत्वादेवेति शेषः ॥ तत्फलं भुक्त्वा क्रमेण मोक्षसम्भवात्किमिति प्रजादिष्वनादर इत्याशङ्क्याह । न चेति ॥ इष्टोऽप्ययमात्मलोकः कर्म्मणा विना न लभ्यते फलत्वान्मोक्षस्यान्यथा स्वभावमुक्तत्वे बन्धमोक्षावस्थयोरविशेषापातादित्याशङ्क्याह । स चेति ॥ कर्म्ममोक्षे कार्य्यस्योत्पाद्यादेरसम्भवात्सम्यग्ज्ञानादविद्यानिवृत्त्या फलप्रसिद्ध्युपपत्तेर्न कर्म्मकार्य्यो मोक्ष इत्यर्थः । ब्रह्मज्ञानस्यानुभवावसानासिद्धये परोक्षनिश्चयपूर्व्वकः सन्न्यासः कर्त्तव्यः । सिद्धे चानु-

ॐ तत्सत् ॥

सामवेदीयतलवकारोपनिषत् ॥

उ० ॐ केनेषितं पतति प्रेषितं मनः केन प्राणः

भा० प्रदर्श्यते ॥ शिष्याचार्य्यप्रश्नप्रतिवचनरूपेण कथनन्तु सूक्ष्मवस्तुविषयत्वात्सुखप्रतिपत्तिकारणं भवति । केवलतर्कागम्यत्वञ्च दर्शितं भवति । नैषा तर्केण मतिरापनीयेति । श्रुतेश्च आचार्य्यवान्पुरुषो वेद आचार्य्याद्धैव विद्या विदिता साधिष्ठं प्रापदिति । तद्विद्धि प्रणिपातेनेत्यादिश्रुतिस्मृतिनियमाच्च । कश्चिद्गुरुं ब्रह्मनिष्ठं विधिवदुपेत्य प्रत्यगात्मविषयादन्यत्र शरणमपश्यन्नभयं नित्यं शिवमचलमिच्छन्पप्रच्छेति कल्प्यते । केनेषितमित्यादि ॥ केनेषितमिति केन कर्त्रा ईषितमिष्टमभिप्रेतं सन्मनः पतति स्वविषयं प्रति गच्छति इति सम्बध्यते । ईषेराभीक्ष्ण्यार्थस्य गत्यर्थस्य चेहासम्भवादिच्छार्थस्यैवैतद्रूपमिति गम्यते । ईषितमितीट्प्रयोगस्तु छान्दसस्तस्यैव प्रपूर्व्वस्य नियोगार्थे प्रेषितमित्येतत् । तत्र प्रेषितमित्येवोक्ते प्रेषयितृप्रेषण-

---

आ० भावावसाने ब्रह्मात्मज्ञाने स्वभावाप्राप्तः सन्न्यास इति द्रष्टव्यः । इतश्च न कर्म्मब्रह्मात्मतानिश्चयसमुच्चयः शास्त्रार्थ इत्याह । कर्म्मसहभावित्वेति ॥ ननु कर्म्मवद्ब्रह्मज्ञानस्य विधितोऽनुष्ठेयत्वाद्विधेश्च विनियोज्यादिभेदापेक्षितत्वात्कथं सर्व्वभेददर्शनं प्रध्वस्तमुच्यते ॥ ब्रह्मज्ञाने सतीत्याशङ्क्याह । वस्तुप्राधान्ये सतीति ॥ विधिजन्यं प्रयत्नं भाव्यो हि विधिविषय उच्यते ज्ञानं न तथेति तद्विधेरसिद्धिरित्यर्थः । यस्मात्प्रत्यगात्मनो ब्रह्मतानिश्चयस्य

उ० प्रथमः प्रैति युक्तः। केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रं क उ देवो युनक्ति ॥ १ ॥

भा० विशेषविषयाकाङ्क्षा स्यात्। केन प्रेषयितृविशेषेण। कीदृशं वा प्रेषणमिति। ईषितमिति तु विशेषणे सति तदुभयं निवर्त्तते। कस्येच्छामात्रेण प्रेषितमित्यर्थविशेषनिर्द्धारणाद्ययेषोऽर्थोऽभिप्रेतः स्यात्केनेषितमित्येतावतैव सिद्धत्वात्प्रेषितमिति न वक्तव्यं। अपि च शब्दाधिक्यादर्थाधिक्यं युक्तमितीच्छया कर्म्मणा वाचा वा केन प्रेषितमित्यर्थविशेषोऽवगन्तुं युक्तः। न प्रश्नसामर्थ्याद्देहादिसङ्घातादनित्यात्कर्मकार्य्याद्विरक्तोऽतोऽन्यत्कूटस्थं नित्यं वस्तु बुभुत्समानः पृच्छतीति सामर्थ्यादुपपद्यते। इतरथेच्छावाक्कर्म्मभिर्देहादिसङ्घातस्य प्रेरयितृत्वं प्रसिद्धमिति प्रश्नोऽनर्थकः स्यात्। एवमपि प्रेषितशब्दस्यार्थेन प्रदर्शित एव न संशयवतोऽयं प्रश्न इति प्रेषितशब्दस्यार्थ-

आ० परोक्षस्यापरोक्षस्य वा कर्म्मणा समुच्चयो न प्रामाणिकस्तस्मादित्युपसंहरति। तस्मादिति॥ प्रश्नप्रतिवचनरूपेण प्रतिपादनस्य तात्पर्य्यमाह। शिष्याचार्य्येति॥ आपनीया प्रापणीया छन्तव्या वा न भवतीत्यर्थः। साधिष्ठं शोभनतमं फलं प्रापयतीत्यर्थः॥ ईष आभीक्ष्ण्ये गतौ वेति धात्वन्तरसम्भवे कथमिच्छार्थस्यैव व्याख्यानमित्याशङ्क्याह। ईषेरिति॥ आभीक्ष्ण्यं पौनःपुन्यं तद्विषयतया गतिविषयतया वा मनसोऽनभिप्रेतत्वान्मनःप्रवर्त्तकविशेषस्यैव बुभुत्सितत्वादित्यर्थः। इट्प्रयोगे सति मतिगुणेन भवितव्यं। तदा एषितव्यमिति स्यात्तदभावाच्छान्दसत्वाभिधानं न तु धातोरनिट्त्वादनुबन्धस्य विकल्पविधानाद-

भा० विशेष उपपद्यते। किं यथा प्रसिद्धमेव कार्य्यकारणसङ्घातस्य प्रेषयितृत्वं किं वा सङ्घातव्यतिरिक्तस्य स्वतन्त्रस्येच्छामात्रेणैव मनआदिप्रेषयितृत्वमित्यस्यार्थस्य प्रदर्शनार्थं केनेषितं पतति। प्रेषितं मन इति विशेषणद्वयमुपपद्यते। न तु स्वतन्त्रं मनः स्वविषये स्वयं पततीति प्रसिद्धं। तत्र कथं प्रश्न उपपद्यत इत्युच्यते। यदि स्वतन्त्रं मनः प्रवृत्तिनिवृत्तिविषये स्यात्तर्हि सर्व्वस्यानिष्टचिन्तनं न स्यादनर्थं च जानन् सङ्कल्पयति। अत्युग्रदुःखे च कार्य्ये वार्य्यमाणमपि प्रवर्त्तत एव मनस्तस्माद्युक्त एव केनेषितमित्यादिप्रश्नः। केन प्राणो युक्तो नियुक्तः प्रेरितः सन् प्रैति गच्छति स्वव्यापारं प्रति प्रतस्थे इति प्राणविशेषणं स्यात्तत्पूर्व्वकत्वात्सर्व्वेन्द्रियवृत्तीनां। केनेषितां वाचमिमां शब्दलक्षणां वदन्ति लौकिकाः। तथा चक्षुश्श्रोत्रञ्च स्वे स्वे विषये क उ देवो द्योतनवान् युनक्ति युङ्क्ते प्रेरयति॥ १॥

---

आ० न्वेषितमन्विष्टं वेति वैकल्पिकप्रयोगादर्शनादिति इषितमिति पदद्वयस्यार्थवत्त्वमाह। तत्र प्रेषितमित्यादिना॥ इच्छामात्रेणेति॥ प्रपतनमन्तरेण सन्निधिमात्रेणेति व्याख्यातं नेदं व्याख्यानमपि शोभते। अपर्य्यायशब्दभेदस्यार्थभेदव्यभिचारादित्याह। अपि चेति॥ त्वदुक्तोऽयमर्थविशेषो न घटते सङ्घातस्यैवेच्छादिभिः प्रवर्त्तकत्वसिद्धेः प्रश्नानुपपत्तिप्रसङ्गादित्याह। न प्रश्नेति॥ मनसः स्वातन्त्र्यात्स्वव्यतिरिक्तप्रवर्त्तकसम्भावनाभावात्प्रश्नो न घटत इत्याक्षिप्य समाधत्ते। ननु स्वतन्त्रमित्यादिना॥ अत्युग्रदुःखे चेति॥ १॥

उ॰ श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं स

---

भा॰ एवं पृष्टवते योग्यायाह गुरुः शृणु त्वं यत्पृच्छसि। मनआदिकरणजातस्य को देवः स्वविषयं प्रति प्रेरयिता कथं वा प्रेरयतीति। श्रोत्रस्य श्रोत्रं शृणोत्यनेनेति श्रोत्रं शब्दस्य श्रवणं प्रति करणं शब्दाभिव्यञ्जकं श्रोत्रमिन्द्रियं तस्य श्रोत्रं स यस्त्वया पृष्टश्चक्षुः श्रोत्रं क उ देवो युनक्तीति। असावेवंविशिष्टः श्रोत्रादीनि नियुङ्क्त इति वक्तव्ये न त्वेतदननुरूपं प्रतिवचनं श्रोत्रस्य श्रोत्रमिति। नैष दोषः। तस्यान्यथाविशेषानवगमात्। यदि हि श्रोत्रादिव्यापारव्यतिरिक्तेन स्वव्यापारेण विशिष्टः श्रोत्रादिनियोक्ताऽवगम्येत दात्रादिप्रयोक्तृवत्तदिदमननुरूपं प्रतिवचनं स्यात्। न त्विह श्रोत्रादीनां प्रयोक्ता स्वव्यापारविशिष्टो लवित्रादिवदधिगम्यते। श्रोत्रादीनामेव तु संहतानां व्यापारेणालोचनसङ्कल्पाध्यवसायलक्षणेन फलावसानलिङ्गेनावगम्यते। अस्ति हि श्रोत्रादिभिरसंहतो यत्प्रयोजनप्रयुक्तः श्रोत्रादिकलापो गृहादिवदिति संहतानां परार्थत्वादवगम्यते श्रोत्रादीनां प्रयोक्ता। तस्मादननु-

---

व्या॰ अद्यतनीनदुःखे द्यूतादिकार्य्ये प्रतिवचनस्य प्रश्नाननुरूपत्वमाशङ्क्य समाधत्ते। असावेवंविशिष्ट इत्यादिना॥ श्रोत्रादयः स्वविलक्षणशेषाः संहतत्वाद्गृहादिवदित्यनुमानेन श्रोत्रादिशेषी तावदवगम्यते सोऽपि संहतः स्यात् तर्हि गृहादिवदचेतनः स्यात्। ततस्तस्याप्यन्यः शेषी कल्प्यस्तस्याप्यन्य इत्यनवस्थाप्रसङ्गपरिहारायासंहतश्चेतनो गम्यते। अतः सर्व्वसाक्षिणं लक्षयितुं युक्तमेव

उ० उ प्राणस्य प्राणश्चक्षुषश्चक्षुरतिमुच्य धीराः प्रेत्या स्माल्लोकादमृता भवन्ति ॥ २ ॥

---

भा० रूपमेवेदं प्रतिवचनं श्रोत्रस्य श्रोत्रमित्यादिकं। पुनरत्र पदार्थः श्रोत्रस्य श्रोत्रमित्यादेः। न ह्यत्र श्रोत्रस्य श्रोत्रान्तरेणार्थः। यथा प्रकाशस्य प्रकाशान्तरेण। नैष दोषोऽयमत्र पदार्थः। श्रोत्रं तावत्स्वविषयव्यञ्जनसमर्थं दृष्टं। तच्च स्वविषयव्यञ्जनसामर्थ्यं श्रोत्रस्य चैतन्ये ह्यात्मज्योतिषि नित्ये संहते सर्व्वान्तरे सति भवति नासतीत्यतः श्रोत्रस्य श्रोत्रमित्याद्युपपद्यते। तथा च श्रुत्यन्तराण्यात्मनैवायं ज्योतिषस्ते तस्य भासा सर्व्वमिदं विभाति। येन सूर्य्य स्तपति तेजसेद्ध इत्यादीनि। यदादित्यगतं तेजो जगद्भासयतेऽखिलं। क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारतेत्यादिगीतासु। काठके च। नित्योनित्यानां चेतनश्चेतनानामिति। श्रोत्राद्येव सर्व्वस्यात्मभूतं चेतनमिति प्रसिद्धं तदिह निवर्त्त्यते। अस्ति किमपि विद्वद्बुद्धिगम्यं सर्व्वान्तरतमं कूटस्थमजरममृतमभयमजं श्रोत्रादेरपि श्रोत्रादि तत्सामर्थ्यमिति प्रतिवचनं। शब्दार्थश्चोपपद्यत एव। तथा मनसोऽन्तःकरणस्य मनो नह्यन्तःकरणमन्तरेण चैतन्य-

---

व्या० प्रतिवचनमित्यर्थः। फलावसानं फलनिष्पत्तिलिङ्गं। यस्मिन्नवगता हि करणस्य व्यापारो लिङ्गत्वे नित्यावगतिव्यञ्जकत्वाद्वा फलावसानलिङ्गव्यापारस्तेन तच्छेषी लक्ष्यत इत्यर्थः। प्रतिवचनस्य सङ्क्षेपतस्तात्पर्य्यमाह। श्रोत्राद्येव सर्व्वस्येति॥ यस्मा-

उ० यदा सर्व्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ १४ ॥

---

भा० आत्मनस्तत्त्वभावो विदिताविदिताभ्यामन्योऽद्वयस्वभावो नेति नेत्यस्थूलमनण्वह्रस्वमदृश्येऽनात्म्येऽनिलय इत्यादिश्रुतिनिर्द्दिष्टः प्रसीदत्यभिमुखीभवति आत्मनः प्रकाशनाय पूर्व्वमस्तीत्युपलब्धवत इत्येतत् ॥ १३ ॥

एवं परमार्थदर्शिनः यदा यस्मिन् काले सर्व्वे कामाः कामयितव्यस्यान्यस्याभावात्प्रमुच्यन्ते विशीर्य्यन्ते येऽस्य प्राक् प्रतिबोधाद्विदुषो हृदि बुद्धौ श्रिता आश्रिताः। बुद्धिर्हि कामानामाश्रयो नात्मा कामः सङ्कल्प इत्यादिश्रुत्यन्तराच्च। अथ तदा मर्त्यः प्राक् प्रबोधादासीत् स प्रबोधोत्तरकालमविद्याकामकर्म्मलक्षणस्य मृत्योर्विनाशादमृतो भवति गमनप्रयोजकस्य वा मृत्योर्विनाशाद्गमनानुपपत्तेः। अत्रेहैव प्रदीपनिर्व्वाणवत्सर्व्वबन्धनोपशमाद्ब्रह्म समश्नुते ब्रह्मैव भवतीत्यर्थः ॥ १४ ॥ कदा पुनः कामानां मूलतो विनाश इत्युच्यते। यदा सर्व्वे प्रभिद्यन्ते भेदमुपयान्ति विनश्यन्ति हृदयस्य बुद्धेरिह जीवत एव ग्रन्थयो ग्रन्थिवद्दृढबन्धनरूपा अविद्याप्रत्यया इत्यर्थः। अह-

---

व्या० मुपाधिर्यस्य कारणत्वस्य तत्कृतो योऽस्तित्वप्रत्ययः कारणत्वादस्ति पर आत्मेति तेनोपलब्धस्येति योजना ॥ १३ ॥

सर्व्वे कामा इति। प्रवृत्तफलकर्म्मोपस्थापित शरीरस्थिति निमित्तान्नपानादौ प्रवृत्तिकरणेच्छाव्यतिरिक्ताः सर्व्वे कामाः काम्येन ज्योतिष्टोमादिना स्वर्गं प्राप्स्यामि त्वं पुत्राराधनेन जनं

उ॰ यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः । अथ
मर्त्योऽमृतो भवत्येतावदनुशासनं ॥ १५ ॥
शतञ्चैका च हृदयस्य नाड्यस्तासाम्मूर्द्धानम-

भा॰ मिदं शरीरं ममेदं धनं सुखी दुःखी चाहमित्येवमा-
दिलक्षणास्तद्विपरीतब्रह्मात्मप्रत्ययोपजननाद्ब्रह्मैवाहमस्म्य-
संसारीति विनष्टेष्वविद्याग्रन्थिषु तन्निमित्ताः कामा मूलतो
विनश्यन्ति । अथ मर्त्योऽमृतो भवत्येतावद्ध्येतावदेवैता-
वन्मात्रं नाधिकमस्तीत्याशङ्का कर्त्तव्या । अनुशासनमनुशि-
ष्टिरुपदेशः सर्व्ववेदान्तानामिति वाक्यशेषः ॥ १५ ॥

निरस्तशेषविशेषव्यापिब्रह्मात्मप्रतिपत्त्या प्रभिन्नसम-
स्ताविद्यादिग्रन्थेर्जीवत एव ब्रह्मभूतस्य विदुषो न गति-
र्विद्यत इत्युक्तं । अत्र ब्रह्म समश्नुत इत्युक्तत्वान्न तस्य प्राणा
उत्क्रामन्ति । ब्रह्मैव सन् ब्रह्माप्येतीति श्रुत्यन्तराच्च । ये
पुनर्मन्दब्रह्मविदो विद्यान्तरशालिनश्च ब्रह्मलोकभाजो
ये तद्विपरीताः संसारभाजस्तेषामेष गतिविशेष उच्यते ।
प्रकृतोत्कृष्टब्रह्मविदो विद्याफलस्तुतये । किञ्चान्यदग्नि-

आ॰ वशीकरिष्यामीत्येवमादयः स्वर्गादिदेहेष्वप्यहमेव तिष्ठामि ।
तद्भोगाश्च प्राप्ता एवाप्राप्तविषयस्य कामो व्यर्थो मिथ्या चासा-
विति विचारेण विशीर्य्यन्त इत्यर्थः । कामाश्रय आत्मेति वैशेषि-
कमतं श्रुतिवाह्यत्वान्नादरणीयमेवेत्याह । बुद्धिरिति ॥ कामप्र-
विषयस्य सुषुप्तेऽपि भावादमृतत्वविरुद्धत्वं भवतीति मत्वाह ।
कदा पुनरिति ॥ १४ ॥ १५ ॥

प्रकरणविच्छेदेनोक्तस्य सम्बन्धं दर्शयति । निरस्ताशेषे-
त्यादिना ॥ पदभाष्यभाष्यकारेण प्रकरणाद्ब्रह्मविद्विषयैवेयं गति-

उ॰ भिनिःसृतैका । तयोर्द्ध्वमायन्नमृतत्वमेति विष्व-
ङ्ङन्या उत्क्रमणे भवन्ति ॥ १६ ॥

अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां

---

भा॰ विद्या पृष्टा प्रत्युक्ता च। तस्याश्च फलप्राप्तिप्रकारो वक्तव्य इति मन्त्रारम्भः। तत्र शतञ्च शतसङ्ख्याका एका च सुषुम्ना नाम पुरुषस्य हृदयाद्विनिःसृता नाड्यः शिरास्तासां मध्ये मूर्द्धानं भित्त्वाऽभिनिःसृता निर्गता एका सुषुम्ना नाम तयाऽन्तकाले हृदये आत्मानं वशीकृत्य योजयेत्। तया नाड्योर्द्ध्वमुपर्य्यायन् गच्छन्नादित्यद्वारेणामृतत्वममरणधर्म्मत्वमापेक्षिकं। आभूतसंप्लवं स्थानममृतत्वं हि भाष्यत इति स्मृतेः। ब्रह्मणा वा सह कालान्तरेण मुख्यममृतत्वमेति भुक्त्वा भोगाननुपमान् ब्रह्मलोकगतान् विष्वक् नानाविधगतयोऽन्या नाड्य उत्क्रमणे निमित्तं भवन्ति संसारप्रतिपत्त्यर्था एव भवन्तीत्यर्थः ॥ १६ ॥

इदानीं सर्व्ववल्ल्यर्थोपसंहारार्थमाह। अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां सम्बन्धिनि हृदये सन्निविष्टो यथा व्याख्यातस्तं स्वादात्मीयाच्छरीरात्प्रवृहेदुद्य-

---

आ॰ रिति तदसङ्गतिश्रवणेन लिङ्गेन परिच्छिन्नं चासामनयोर्ग्येऽस्या गतेः सम्बन्धागमे सुदुर्बलेन प्रकरणेन प्रकृतब्रह्मविद्यासम्बन्धानुपपत्तेः। नाड्यन्तराणामपि तत्सम्बन्धप्रसङ्गाच्छ्रुतिविरुद्धप्रसङ्गाच्च। विस्तरस्य प्रकटार्थं द्रष्टव्यः ॥ १६ ॥

आत्मानं देहमधिकृत्य वर्त्तत इत्यध्यात्मं प्रत्यक्स्वरूपमेव ब्रह्म ।

उ॰ हृदये सन्निविष्टः । तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकां धैर्य्येण । तं विद्याच्छुक्रममृतं तं विद्याच्छुक्रममृतमिति ॥ १७ ॥ मृत्युप्रोक्तान्नचिकेतोऽथ लब्ध्वा विद्यामेतां योगविधिञ्च कृत्स्नं । ब्रह्मप्राप्तो विरजोऽभूद्विमृत्युरन्योऽप्येवं यो

भा॰ च्छेन्निःकर्षेण पृथक्कुर्य्यादित्यर्थः । किमिवेत्युच्यते । मुञ्जादिवेषीकां अन्तस्थां धैर्य्येणाप्रमादेन । तं शरीरान्निष्कृष्टं चिन्मात्रं विद्याद्विजानीयाच्छुक्रं शुद्धममृतं यथोक्तं ब्रह्मेति। तं विद्याच्छुक्रममृतमिति द्विर्वचनमुपनिषत्समाप्त्यर्थमिति ॥ ॥ १७ ॥ विद्यास्तुत्यर्थोऽयमाख्यायिकार्थोपसंहारोऽधुनोच्यते। मृत्युप्रोक्तां यमोक्तामेतां विद्यां ब्रह्मविद्यां योगविधिञ्च कृत्स्नं समस्तं सोपकरणं सफलमित्येतन्नाचिकेतोऽथ वरप्रदानान्मृत्योर्लब्ध्वा प्राप्येत्यर्थः । किञ्च ब्रह्मप्राप्तोऽभून्मुक्तोऽभवदित्यर्थः । कथं विद्याप्राप्त्या विरजो विगतधर्म्माधर्म्मो विमृत्युर्विगतकामाविद्यश्च सन् पूर्व्वमित्यर्थः। न केवलं नचिकेता एव अन्योऽपि य एवं नचिकेतोवदध्यात्ममेवं निरुपचरितं प्रत्यक्स्वरूपं प्राप्य तमेवेत्यभिप्रायः । नान्यद्रूपमप्रत्यग्रूपं तदेवमध्यात्ममेवमुक्तप्रकारेण यो वेद विजानाति एवंवित्सोऽपि विरजः सन् ब्रह्मप्राप्त्या विमृत्युर्भवतीति वाक्यशेषः ॥ १८ ॥

आ॰ प्राप्य विमृत्युर्भवति॥ नान्यद्रूपमर्च्चिरादिमार्गगम्यं प्राप्य, संयोगस्य विमियोगवासनात्वादित्यर्थः। एवंशब्दस्य विच्छब्देन सह सम्बन्ध

उ० विद्ध्यात्ममेव ॥ १८ ॥ सहनाववतु सह नौ भुनक्तु सह वीर्य्यं करवावहै तेजस्वि नावधीतमस्तु मा विद्विषावहै ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ हरिः ॐ ॥ १९ ॥ इति कठोपनिषदि द्वितीयाध्याये षष्ठी वल्ली समाप्ता ॥ ६ ॥ ॐ तत्सत् ॥ ॐ ॥

भा० अथ शिष्याचार्य्ययोः प्रमादकृतान्यायेन विद्याग्रहणप्रतिपादननिमित्तदोषशमनार्थेयं शान्तिरभिधीयते। सह नावावामवतु पालयतु विद्यास्वरूपप्रकाशनेन । कः । स एव परमेश्वर उपनिषत्प्रकाशितः । किञ्च सह नौ भुनक्तु तत्फलप्रकाशनेन नौ पालयतु । सहैवावां विद्याकृतं वीर्य्यं सामर्थ्यं करवावहै निष्पादयावहै । किञ्च तेजस्वि नौ तेजस्विनोरावयोर्यदधीतं तत्स्वधीतमस्तु। अथ वा तेजस्वि नावावाभ्यां यदधीतं तदधीव तेजस्वि वीर्य्यवदस्त्वित्यर्थः। मा विद्विषावहै शिष्याचार्य्यावन्योन्यं प्रमादकृताभ्यामध्ययनाध्यापनदोषनिमित्तं द्वेषं मा करवावहा इत्यर्थः ॥ शान्तिः शान्तिः शान्तिरिति त्रिर्व्वचनं सर्व्वदोषोपशमनार्थं ॥ इत्युपनिषत्समाप्त्यर्थः ॥१९॥ इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्य्यस्य श्रीमच्छङ्करभगवतः कृतौ काठकभाष्ये द्वितीयाध्याये षष्ठी वल्ली समाप्ता ॥ ६ ॥ इति कठोपनिषद्भाष्यं सम्पूर्णं ॥ ॐ तत्सत् ॐ ॥

---

षा० एवंविधः। एवंविदिति ॥ इति श्रीमच्छङ्करस्य कठोपनिषद्भाष्यटीका श्रीमदानन्दज्ञानकृता समाप्ता ॥१०॥१८॥ ॐ हरिः ॐ ॥

## अथर्व्ववेदीयप्रश्नोपनिषद्भाष्यं ॥

भा॰ ॐ नमः परमात्मने नमः। मन्त्रोक्तस्यार्थस्य विस्तरानुवादीदं ब्राह्मणमारभ्यते। ऋषिप्रश्नप्रतिवचनाख्यायिका तु विद्यास्तुतये एवं संवत्सरब्रह्मचर्य्यसंवासादियुक्तैस्तपोयुक्तैर्ग्राह्या पिप्पलादादिवत्सर्व्वज्ञकल्पैराचार्य्यैर्वक्तव्या च। न सा येन केनचिदिति विद्यां स्तौति। ब्रह्मचर्य्यादिसाधनसूचनाच्च तत्कर्त्तव्यता स्यात्॥

---

आ॰ ॐ परमात्मने नमः ॥ अथर्व्वणे ब्रह्म देवानामित्यादिमन्त्रैरेवात्मतत्त्वस्य निर्णीतत्वात्तत्रैव ब्राह्मणेन तदभिधानं पुनरुक्तमित्याशङ्क्य तस्यैवेह विस्तरेण प्राणोपासनादिसाधनसाहित्येनाभिधानान्न पौनरुक्त्यमिति वदन् ब्राह्मणमवतारयति। मन्त्रेति॥ विस्तरेति॥ मन्त्रे हि द्वे विधे वेदितव्ये परा चैवापरा चेति उक्त्वा तत्रापरा ऋग्वेदाद्यभिधेयेत्युक्तं। सा चाविद्याकर्म्मरूपोपासनारूपा च। तत्र द्वितीया द्वितीयतृतीयप्रश्नाभ्यां विव्रीयते। आद्या कर्म्मकाण्डे विवृतेति नेह विव्रीयते। उभयोः फलन्तु ततो वैराग्यार्थं प्रथमप्रश्ने स्पष्टीक्रियते। परविद्या च अथ परा यया तदक्षरमधिगम्यत इत्युपक्रम्य कृत्स्नेन मुण्डकेन प्रतिपादिता। तत्रापि यथा सुदीप्तादित्यादिमन्त्रद्वयोक्तार्थस्य विस्तरार्थं चतुर्थः प्रश्नः। प्रणवो धनुरित्यत्रोक्तस्यार्थस्य स्पष्टीकरणार्थः षष्ठः प्रश्न इतीदं ब्राह्मणं तद्विस्तरानुवादीत्यर्थः। अत एव विषयप्रयोजनादिकं तत्रैवोक्तमिति नेह पुनरुच्यत इति बोध्यः॥ आख्यायिकायाः ब्रह्मचर्य्यतपआदिसाधनविधानं पुराकल्पस्वरूपेण प्रयोजनान्तरञ्चास्तीत्याह। ब्रह्मचर्य्यादिसाधनेति॥

॥ अथर्व्ववेदीयप्रश्नोपनिषदारम्भः ॥

उ॰ ॐ नमःपरमात्मने ॥ हरिः ॐ ॥ सुकेशा च भारद्वाजः शैब्यश्च सत्यकामः सौर्य्यायणी च गार्ग्यः कौशल्यश्चाश्वलायनो भार्गवो वैदर्भिः कवन्धी कात्यायनस्ते हैते ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणा एष ह वै तत्सर्वं वक्ष्यतीति

---

भा॰ सुकेशा च नामतः भरद्वाजस्यापत्यं भारद्वाजः । शैब्यश्च शिबेरपत्यं शैब्यः सत्यकामो नामतः । सौर्य्यायणी सूर्य्यस्यापत्यं सौर्य्यस्तस्यापत्यं सौर्य्यायणिश्छान्दसः सौर्य्यायणीति गार्ग्यः गर्गगोत्रोत्पन्नः । कौशल्यश्च नामतः अश्वलस्यापत्यमाश्वलायनः । भार्गवो भृगोर्गोत्रापत्यं भार्गवः वैदर्भिर्विदर्भेः प्रभवः । कवन्धी नामतः कत्यस्यापत्यं कात्यायनः । विद्यमानप्रपितामहो यस्य सः । युवार्थप्रत्ययः । ते हैते ब्रह्मपरा अपरं ब्रह्म परत्वेन गतास्तदनुष्ठाननिष्ठाश्च ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणाः

---

• सौर्य्यायणिरिति वक्तव्ये दैर्घ्यं छान्दसमित्यर्थः । युवप्रत्यय इति कत्यस्य युवापत्ये विवक्षिते फक्प्रत्यये तस्यायनादेशे च कात्यायन इति सिद्ध्यतीत्यर्थः ॥ ब्रह्मपराणां पुनर्ब्रह्मान्वेषणमयुक्तमित्यत आह । अपरं ब्रह्मेति ॥ नन्वपरब्रह्मान्वेषणेनैव पुरुषार्थसिद्धेः किं परब्रह्मान्वेषणेनेत्याशङ्क्यते । किन्तदिति ॥ तस्य कोऽतिशय इत्यर्थः । तस्यानित्यत्वेन तत्प्राप्तेरप्यनित्यहेतुत्वेनापुरुषार्थत्वात् परस्यैव नित्यत्वात्तत्प्राप्तेस्तज्ज्ञानमात्रसाध्यत्वेनापि नित्यत्वाच्च तस्यैवान्वेषणीयत्वमिति परस्वरूपकथनायाह । यदिति ॥ पर-

उ० ते ह समित्पाणयो भगवन्तं पिप्पलादमुप-
सन्नाः ॥ १ ॥

तान् ह स ऋषिरुवाच भूय एव तपसा ब्रह्म-
चर्य्येण श्रद्धया संवत्सरं संवत्स्यथ यथाकामं

---

भा० किञ्च । यन्नित्यं विज्ञेयमिति तत्प्राप्त्यर्थं यथाकामं
यतिष्याम इत्येवं तदन्वेषणं कुर्व्वन्तस्तदधिगमाय एष ह वै
तत्सर्व्वं वक्ष्यतीत्याचार्य्यमुपजग्मुः । कथं । ते ह समित्पाणयः
समिद्भारगृहीतहस्ताः सन्तो भगवन्तं पूजावन्तं पिप्पला-
दमाचार्य्यमुपसन्ना उपजग्मुः ॥ १ ॥

तानेवमुपगतान् स ह किल ऋषिरुवाच भूयः पुनरेव
यद्यपि पूर्व्वं तपस्विन एव तपसेन्द्रियसंयमेन तथापीह
विशेषतो ब्रह्मचर्य्येण श्रद्धया चास्तिक्यबुद्ध्याऽऽदरवन्तः
संवत्सरं कालं संवत्स्यथ सम्यग्गुरुशुश्रूषापराः सन्तो
वत्स्यथ । ततो यथाकामं यो यस्य कामस्तमनतिक्रम्य

---

आ० ब्रह्मान्वेषमाणानां कोऽतिशय इत्यत आह । तत्प्राप्त्यर्थमिति ॥
तत्प्राप्त्यर्थं तदधिगमाय तदन्वेषणं कुर्व्वन्तो यथाकामं यतिष्याम
इत्येवमभिप्रायेणेत्यन्वयः ॥ समिदिति ॥ समिद्ग्रहणं यथायोग्यं
हस्तकाष्ठाद्युपहारोपलक्षणार्थं ॥ १ ॥

तथापीत्यस्य तपसेत्यतः पूर्व्वमन्वयः । विशेषत इत्यस्य पूर्व्वेणा-
न्वयः ॥ निष्कृष्टमर्थमाह । यद्विषय इति ॥ अज्ञानाद्यर्थत्वा-
भावे हेतुमाह । प्रश्नेति । अत्र इतिशब्दोऽध्याहार्य्यः । सर्व्व-
प्रश्नानां निर्णयाद्ज्ञानाद्यसम्भवादित्यर्थः । परब्रह्मान्वेषमाणा
इत्युपक्रान्तेऽस्मिन् ब्रह्मप्रकरणे प्रजापतिकर्त्तृकप्रजासृष्टिविषय-

उ॰ प्रश्नान् पृच्छथ यदि विज्ञास्यामः सर्व्वं ह वो वक्ष्याम इति ॥ २ ॥ अथ कबन्धी कात्यायन उपेत्य पप्रच्छ । भगवन् कुतो ह वा इमाः प्रजाः प्रजायन्त इति ॥ ३ ॥

---

भा॰ यद्विषये यस्य जिज्ञासा तद्विषयान् प्रश्नान् पृच्छथ । यदि तद्युष्मत्पृष्टं विज्ञास्यामः । अनुद्धतत्वप्रदर्शनार्थो यदिशब्दो नाज्ञानसंशयार्थः । प्रश्ननिर्णयादवसीयते सर्व्वं ह वो वः पृष्टं वक्ष्याम इति ॥ २ ॥ अथ॰ संवत्सरादूर्द्ध्वं कबन्धी कात्यायन उपेत्यागत्य पप्रच्छ पृष्टवान् । हे भगवन् कुतः कस्माद्ध वै इमा ब्राह्मणाद्याः प्रजाः प्रजायन्ते उत्पद्यन्ते । अपरविद्याकर्म्मणोः समुच्चितयोर्यत्कार्य्यं या गतिस्तद्वक्तव्यमिति तदर्थोऽयं प्रश्नः ॥ ३ ॥

---

आ॰ प्रश्नप्रवृत्तेरसङ्गतिमाशङ्क्य प्रश्नप्रत्युक्तिरूपाया श्रुतेस्तात्पर्य्यमाह । अपरविद्येति । तेषामसौ विरजो ब्रह्मलोक इति समुच्चितकार्य्यस्य ब्रह्मलोकस्याथोत्तरेणेति तद्गतेर्देवयानमार्गस्य चैव वक्ष्यमाणत्वादित्यर्थः । इदमुपलक्षणं केवलकर्म्मसाध्यत्वमपि द्रष्टव्यं ॥ केवलकर्म्मकार्य्यस्यापि चन्द्रलोकस्य तद्गतेः पितृयानस्य च । तेषामेवैष ब्रह्मलोकः । प्रजाकामा दक्षिणं प्रतिपद्यन्त इति वक्ष्यमाणत्वादिति । यद्यपीदमपि परब्रह्मजिज्ञासावसरेऽसङ्गतमेव तथापि केवलकर्म्मकार्य्यात्समुच्चितं कर्म्मकार्य्याच्च विरक्तस्यैव तत्राधिकार इति । ततो वैराग्यार्थमिदमुच्यते । यद्यपि मुखतः सृष्टिः प्रतीयते तथापि तदुक्तौ प्रयोजनाभावात्सृष्ट्युक्तिव्याजेन परविद्याफलमेवात्रोच्यत इति भावः ॥ २ ॥ १ ॥

उ० तस्मै स होवाच प्रजाकामो वै प्रजापतिः स तपोऽतप्यत स तपस्तप्त्वा स मिथुनमुत्पादयते ।

---

भा० तस्मा एवं पृष्टवते स होवाच। तदपाकरणायाह। प्रजाकामः प्रजा आत्मनः सिसृक्षुर्वै प्रजापतिः सर्व्वात्मा सन् जगत् स्रक्ष्यामीत्येवं विज्ञानवान् यथोक्तकारी तद्भावभावितः कल्पादौ निर्वृत्तो हिरण्यगर्भः सृज्यमानानां प्रजानां स्थावरजङ्गमानां पतिः सन् जन्मान्तरभावितं ज्ञानं श्रुतिप्रकाशितार्थविषयं तपोऽन्वालोचयदतप्यत। अथ तु स एवं तपस्तप्त्वा श्रौतं ज्ञानमन्वालोच्य सृष्टिसाधनभूतं

---

आ० प्रश्न इति प्रतिवचनस्येत्यपि द्रष्टव्यं॥ ताभ्यामेव तदुक्तेरिति तस्मै स होवाचेति प्रतिज्ञातं विशेषतो दर्शयति। तदपाकरणायेति॥ आद्यस्य सन्नित्यस्य प्रकाशः सन्नित्यन्वयो यथोक्तकारीति ज्ञानकर्म्मसमुच्चयकारीत्यर्थः। तद्भावभावित इति प्रजापतिरहं सर्व्वात्मेत्युपासनकालीनप्रजापतिभावनायुक्त इत्यर्थः। पूर्व्वकल्पीयतद्भावभावित एतत्कल्पादौ हिरण्यगर्भात्मना निर्वृत्तः प्रजापतिः सन् पश्चात्प्रजाकामः सन् तपो जन्मान्तरभावितं ज्ञानं श्रुतिप्रकाशितार्थं विषयमाप्यत अन्वालोचयन्नित्यादिना तत्संस्कारमुद्बोध्य ज्ञानमुत्पादितवानित्यन्वयः। तत्र प्रथममादित्यचन्द्रोत्पादनेन तद्भावमापद्य पश्चाच्चन्द्रादित्यसाध्यसंवत्सरभावमापद्य एवमेव तदवयवायनद्वयमासपक्षाहोरात्रभावमापद्य ततस्तत्साध्यव्रीह्याद्यन्नभावं रेतोभावञ्चापद्य तेन रेतसा प्रजाः सृजेयमित्येवं निश्चित्य प्रथमं रयिं प्राणशब्दितसूर्य्यचन्द्रद्वन्द्वमुत्पादितवानित्याह। स एवमिति॥ रयिशब्देन धनवाचिना भोज्यजातं लक्षयित्वा भोज्यस्य सोमकिरणामृतयुक्तत्वात्तद्द्वारा सोमो लक्ष्यत इत्याह। रयिञ्चेति॥ एवं प्राणशब्देनापि। अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः। प्राणायामसमायुक्तः

उ॰ रयिञ्च प्राणञ्चेत्येतौ मे बहुधा प्रजाः करिष्यत इति ॥ ४ ॥

आदित्यो ह वै प्राणो रयिरेव चन्द्रमा

---

भा॰ मैथुनमुत्पादयते मिथुनं द्वन्द्वमुत्पादितवान्। रयिञ्च सोममन्नं प्राणञ्चाग्निमत्तारमेतावग्नीषोमावन्नाद्यभूतौ मे मम बहुधाऽनेकधा प्रजाः करिष्यत इत्येवं सञ्चिन्त्याण्डोत्पत्तिक्रमेण सूर्य्याचन्द्रमसावकल्पयत् ॥ ४ ॥

तत्रादित्यो ह वै प्राणोऽत्ता अग्निः। रयिरेव चन्द्रमाः। रयिरेवान्नं सोम एव। तदेतदेकमत्ता चान्नञ्च प्रजापतिरेकं तु मिथुनं। गुणप्रधानकृतो भेदः कथं। रयिर्वै अन्नं वै एतत्सर्व्वं किन्तद्यन्मूर्त्तञ्च स्थूलञ्च अमूर्त्तञ्च सूक्ष्मञ्च मूर्त्तामूर्त्ते

---

आ॰ पचाम्यन्नं चतुर्विधमिति स्मृतेः। अग्नेः प्राणसम्बन्धादग्निर्भोक्ता लक्ष्यत इत्याह। प्राणञ्चेति ॥ अग्नीषोमयोरण्डान्तर्गतत्वेनाण्डोत्पत्त्यनन्तरमुत्पत्तिरित्याशयेनाह। अण्डोत्पत्तीति ॥ उद्यन्तं वाऽऽदित्यमग्निरनुसमारोहतीति श्रुतेः। सूर्य्याग्न्योरेकत्वमभिप्रेत्याग्निसूर्य्यपदेनाह। सूर्य्याचन्द्रमसाविति ॥ ४ ॥

रयिप्राणौ श्रुतिः स्वयमेव व्याचष्ट इत्याह। तत्रादित्य इति ॥ प्रजापतेरेव संवत्सरादि प्रजापर्य्यन्तं स्रष्टृत्वं वक्तुं रयिप्राणयोः संवत्सरस्रष्ट्रोः प्रजापत्युपादानत्वात्प्रजापत्यात्मत्वमाह। तदेतदेकमिति ॥ कथमेकस्यात्तान्नञ्चेति भेद इत्याशङ्क्य तस्यैव गुणभावविवक्षयान्नत्वं प्राधान्यविवक्षया चात्तृत्वमिति भेद इत्याह। गुणेति ॥ रयिप्राणयोः कथं प्रजापत्यात्मत्वमिति पृच्छते। कथमिति ॥ तत्र रयेः सर्व्वात्मकत्वात्प्रजापतित्वमित्याह। रयिरिति ॥ अमूर्त्तस्यापि वाय्वादेः केनचिदद्यमानत्वाद्रयित्वमित्यर्थः। ननु मूर्त्तामूर्त्तयोरत्त्रन्नयोरुभयोरपि रयित्वेऽन्नमेव

उ॰ रयिर्वा एतत्सर्वं यन्मूर्तञ्चामूर्तञ्च तस्मान्मूर्तिरेव रयिः ॥ ५ ॥

अथादित्य उदयन्यत्प्राचीं दिशं प्रविशति तेन प्राच्यान् प्राणान्रश्मिषु सन्निधत्ते । यद्दक्षिणां यत्प्रतीचीं यदुदीचीं यदधो यदूर्द्ध्वं यदन्तरा दिशो

---

भा॰ अत्त्रन्नरूपे रयिरेव । तस्मात्प्रविभक्तादमूर्त्ताद्यदन्यन्मूर्त्तरूपं मूर्त्तिः सैव रयिरमूर्त्तेन अन्नाद्यमानत्वात् ॥ ५ ॥

तथाऽमूर्त्तोऽपि प्राणोऽत्ता सर्व्वमेव यच्चाद्यं । कथं अथ आदित्य उदयन् उद्गच्छन् यत्प्राचीं दिशं प्रविशति तेन तत्प्राचीं दिशं स्वप्रकाशेन प्रविशति व्याप्नोति । तेन स्वात्मव्याप्त्या सर्व्वांस्तत्स्थान् प्राणान् प्राच्यानन्तर्भूतान् रश्मिषु स्वात्मावभासरूपेषु व्याप्तिमत्सु व्याप्तत्वात्प्राणिनः सन्निधत्ते सन्निवेशयति आत्मभूतान् करोतीत्यर्थः । तथैव यत्प्रविशति दक्षिणां यत्प्रतीचीं यदुदीचीमध ऊर्द्ध्वं यत्प्रविशति यच्चान्तरा दिशो कोणदिशोऽवान्तरदिशो यच्चान्यत्सर्व्वं

---

आ॰ रयिरिति कथमुक्तमित्याशङ्क्य मूर्त्तामूर्त्तत्वे विभागमकृत्वा सर्व्वस्य गुणभावमात्रविवक्षया सर्व्वं रयिरित्युच्यते । यदा उभे विभज्य गुणप्रधानभावेन विवक्ष्येते तदाऽमूर्त्तेन प्राणेन मूर्त्तस्याद्यमानत्वान्मूर्त्तस्यैव रयित्वमित्याह । तस्मादिति ॥ ५ ॥

रयिशब्दितस्याप्यस्य प्रजापतित्वार्थं सर्व्वात्मत्वमुक्त्वा प्राणस्यापि तदर्थमेव सर्व्वात्मत्वमुच्यते अथादित्य इति वाक्येनेत्याह । तथेत्यादिना । यच्चाद्यं तदपि प्राणोऽत्ता प्राणोऽपि सर्व्वमेवेति सर्व्वात्मक इत्यर्थः । स्वप्रकाशेनेति स्वकीयप्रकाशेन स्वप्रभयेत्यर्थः ।

उ॰ यत्सर्व्वं प्रकाशयति तेन सर्व्वान् प्राणान् रश्मिषु सन्निधत्ते ॥ ६ ॥ स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते । तदेतदृचाभ्युक्तं ॥ ७ ॥ विश्वरूपं हरिणं जातवेदसं परायणं ज्योतिरेकं तपन्तं ।

---

भा॰ प्रकाशयति तेन स्वप्रकाशव्याप्त्या सर्व्वान् सर्व्वदिक्स्थान् प्राणान् रश्मिषु सन्निधत्ते ॥ ६ ॥ स एषोऽत्ता प्राणो वैश्वानरः सर्व्वात्मा विश्वरूपो विश्वात्मत्वाच्च प्राणोऽग्निश्च स एवाऽत्तोदयते उद्गच्छति प्रत्यहं सर्व्वा दिश आत्मसात्कुर्व्वन् । तदेतदुक्तं वस्तु ऋचा मन्त्रेणाप्यभ्युक्तं ॥७॥ विश्वरूपं सर्व्वरूपं हरिणं रश्मिमन्तं जातवेदसं जातप्रज्ञानं परायणं सर्व्वप्राणाश्रयं ज्योतिरेकं सर्व्वप्राणिनां चक्षुर्भूतमद्वितीयं तपन्तं तापक्रियां कुर्व्वाणं स्वात्मानं सूर्य्यं सूरयो विज्ञातवन्तो ब्रह्मविदः । कोऽसौ यं विज्ञातवन्तः । सहस्र-

---

आ॰ अन्तर्भूतानिति यद्यपि प्राणस्यात्तृत्वमुक्तं तथापि रयिर्व्वा एतत्सर्व्वमित्यत्रामूर्त्तस्य प्राणस्यापि गुणभावविवक्षया अत्तृत्वमुक्तमिति । तथोक्तस्वात्मावभासरूपेष्विति स्वात्मप्रभारूपेषु रश्मिष्वित्यर्थः । व्याप्तत्वादिति सम्बद्धत्वादित्यर्थः ॥ तस्य प्रत्यक्षत्वमाह । स एष इति ॥ वैश्वानर इति नरा जीवा विश्वे च ते नराश्च विश्वानराः स एव वैश्वानरः सर्व्वजीवात्मक इत्यर्थः । विश्वरूपः सर्व्वप्रपञ्चात्मक इति भेदः । उक्तं वक्ष्यति आदित्यस्योक्तं माहात्म्यमित्यर्थः । विश्वरूपमित्यादिद्वितीयान्तानां सहस्ररश्मिरित्यादिप्रथमान्तानां सामानाधिकरण्येनान्वयायोगादध्याहारं कृत्वा वाक्यभेदेन व्याचष्टे । स्वात्मानमित्यादिना ॥ स मिथुनमुत्पादयत इत्युपक्रान्तं मिथुनमुपसंहरति । यश्चासाविति ॥ यश्चासौ चन्द्रमा यश्चामूर्त्तः प्राणस्तदेकं मिथुनं सर्व्व .

उ॰ सहस्ररश्मिः शतधा वर्त्तमानः प्राणः प्रजाना-
मुदयत्येष सूर्य्यः ॥ ८ ॥

संवत्सरो वै प्रजापतिस्तस्यायने दक्षिण-
ञ्चोत्तरञ्च । तद्ये ह वै तदिष्टापूर्त्ते कृतमित्युपा-

---

भा॰ रश्मिरनेकरश्मिः शतधा अनेकधा प्राणिभेदेन वर्त्तमानः
प्रजानामुदयत्येष सूर्य्यः ॥ ८ ॥

यश्चासौ चन्द्रमा मूर्त्तिरन्नममूर्त्तिश्च प्राणोऽत्तादि-
त्यस्तदेतदेकमेतन्मिथुनं कथं सर्व्वं प्रजाः करिष्यत इति ।
उच्यते तदेव । कालः संवत्सरो वै प्रजापतिस्तन्निर्वर्त्य-
त्वात्संवत्सरस्य । चन्द्रादित्यनिर्वर्त्यतिथ्यहोरात्रसमुदायो
हि संवत्सरस्तदनन्यत्वाद्रयिप्राणस्तन्मिथुनात्मक एवेत्यु-
च्यते तत्कथं तस्य संवत्सरस्य प्रजापतेरयने मार्गौ द्वौ
दक्षिणं चोत्तरञ्च। द्वे प्रसिद्धे ह्ययने षण्मासलक्षणे याभ्यां
दक्षिणेनोत्तरेण च याति सविता केवलकर्म्मिणां ज्ञान-
संयुक्तकर्म्मवताञ्च लोकान् विदधत्। कथं तत्र च श्रात्म-

---

आ॰ सर्व्वात्मकमित्यन्वयः। एतौ मे बहुधाः प्रजाः करिष्यत इत्युक्तं
तत्केन प्रकारेणेति पृच्छति। कथमिति ॥ ६ ॥ ७ ॥ ८ ॥

रयिप्राणयोः संवत्सरादिद्वारा प्रजास्रष्टृत्वमित्याह। उच्यत
इति ॥ तदेव मिथुनमेव संवत्सरः कालः। स च प्रजापतिः प्रजा-
पत्यात्मकमिथुनं निर्व्वर्त्यत्यादिनेत्याह। तन्निर्व्वर्त्यत्वादिति ॥ तदु-
पपादयति। चन्द्रेति ॥ चन्द्रनिर्व्वर्त्यास्तिथय आदित्यनिर्व्वर्त्या-
ण्यहोरात्राणीति विभागस्तन्निर्व्वर्त्यत्वेऽपि कालस्य कथं तदात्मते-
त्याशङ्क्य कार्य्यकारणयोरभेदादित्याह। तदनन्यत्वादिति ॥
न केवलं तिथ्यादिद्वारा चन्द्रादिनिर्व्वर्त्यत्वं संवत्सरस्य किन्त्वयन-

उ॰ सते। ते चान्द्रमसमेव लोकमभिजयन्ते। त एव पुनरावर्त्तन्ते तस्मादेते ऋषयः प्रजाकामा दक्षिणं प्रतिपद्यन्ते। एष ह वै रयिर्यः पितृयाणः ॥ ९ ॥

---

भा॰ णादिषु ये वैतदुपासत इति क्रियाविशेषणो द्वितीयस्तच्छब्दः। इष्टञ्च पूर्त्तञ्च इष्टापूर्त्ते इत्यादि कृतमेवोपासते-नाकृतं नित्यं ते चान्द्रमसं चन्द्रमसि भवं प्रजापतेर्मिथुनात्मकस्यांशं रयिमन्नभूतं लोकमभिजयन्ते कृतरूपत्वाच्चान्द्रमसस्य। तएव च कृतक्षयात्पुनरावर्त्तन्ते इमं लोकं हीनतरं वा विशन्तीति ह्युक्तं। यस्मादेवं प्रजापतिमन्नात्मकं फलत्वेनाभिनिर्वर्त्तयन्ति चन्द्रमिष्टापूर्त्तकर्म्मणा ऋषयः स्वर्ग-

---

व्या॰ द्वारापीति वक्तुं तस्यायने इत्यादिवाक्यं तत्प्रश्नपूर्व्वकं व्याचष्टे। तत्कथमिति ॥ चन्द्रादित्यनिर्व्वर्त्यत्वं कुतो हेत्वन्तरादित्यर्थः। केवलकर्म्मिणां लोकान् विदधद्दक्षिणेन याति। ज्ञानयुक्तकर्म्मवतां लोकान् विदधदुत्तरेण यातीत्यन्वयः। सवितेत्युपलक्षणं चन्द्रस्यापि ज्येष्ठादि दक्षिणायनं मार्गशीर्षाद्युत्तरायणमिति श्रुतिषु प्रसिद्धेः। ततश्च कर्म्मिणां लोकान् विधातुं तयोर्दक्षिणोत्तराभ्यां याम्योत्तरलोकाभ्यां गमनात्तन्निमित्तत्वाच्चायनद्वयप्रसिद्धेस्तन्निर्व्वर्त्यत्वं तयोरनयोरिति तद्द्वारा सम्वत्सरस्यापि तन्निर्व्वर्त्यत्वमित्यर्थः ॥ चन्द्रादित्ययोः कथं लोकविधायकत्वमिति पृच्छति। कथमिति ॥ चन्द्रादित्यनिर्व्वर्त्यदक्षिणोत्तरायणद्वारा लोकप्राप्तेः प्राप्यस्य लोकस्यापि चन्द्रादित्यात्मकत्वाच्च तयोस्तद्विधायकत्वमिति तद्ये ह वा इत्यादिवाक्येन परिहरति। तत्रेति ॥ इष्टञ्चेति ॥ अग्निहोत्रं तपः सत्यं वेदानामुपलम्भनं। आतिथ्यं वैश्वदेवश्च इष्टमित्यभिधीयते। वापीकूपतडागादिदेवतायतनानि च। अन्नप्रदानमारामः पूर्त्तमित्यभिधीयत इत्युभयोर्भेदः कृतमित्युपासत इति। कृतशब्दोपरितनमितिशब्दमिष्टा-

उ॰ अथोत्तरेण तपसा ब्रह्मचर्य्येण श्रद्धया विद्यया-
त्मानमन्विष्यादित्यमभिजयन्ते एतद्वै प्राणाना-

---

भा॰ इष्टारः प्रजाकामाः प्रजार्थिनो गृहस्थाः। तस्मात्स्वकृतमेव दक्षिणं दक्षिणायनोपलक्षितं चन्द्रं प्रतिपद्यन्ते। एष ह वै रयिरन्नं यः पितृयाणः पितृयाणोपलक्षितश्चन्द्रः॥ ९॥

अथोत्तरेणायनेन प्राजापत्यं प्राणमत्तारमादित्यमभिजयन्ते। केन। तपसा इन्द्रियजयेन विशेषतो ब्रह्मचर्य्येण श्रद्धया विद्यया च प्रजापत्यात्मविषययात्मानं प्राणं सूर्य्यं जगतस्तस्थुषश्चान्विष्याहमस्मीति विदित्वाऽऽदित्यमभिजयन्तेऽभिप्राप्नुवन्ति एतद्वै आयतनं सर्व्वप्राणानां सामान्यमायतनमाश्रयः एतदमृतमविनाशि अभयं अत एव भय-

---

आ॰ पूर्त्ते इति पूर्त्तशब्दोपर्य्यायकूप्यादिशब्दपर्य्यायतया व्याचष्टे। इत्यादीति॥ दत्तमादिशब्दार्थः। कृतमेवोपासते कार्य्यमेवानुतिष्ठन्तीत्यर्थः। इदञ्च विशेषणं पुनरावृत्तौ हेतुतयोक्तं। कृतरूपेष्ट्यादिजन्यत्वाच्चन्द्रस्यापि कृतत्वेनानित्यत्वात्पुनरावृत्तिरित्याह। कृतरूपत्वादिति॥ पुनरावृत्तौ मन्त्रवाक्यं प्रमाणयति। इमं लोकमिति॥ ९॥

अथेति मार्गान्तरारम्भार्थोऽथशब्दः। प्रजापत्यात्मविषयेति तत्तादात्म्यविषयेत्यर्थः॥ आदित्यमभिजयन्त इति पूर्व्वमन्त्रार्थमुक्तमिदानीं व्याख्यानार्थमिति द्रष्टव्यं। सामान्यमिति समष्टिरूपमित्यर्थः। विद्यावतामिति कर्म्मानधिकारिणां अत एव केवलोपासनवतामित्यर्थः। कर्म्मिणाञ्च ज्ञानवतामिति समुच्चयवतामित्यर्थः। ननु केवलकर्म्मिणामप्यादित्यप्राप्तावपुनरावृत्तिर्भविष्यतीत्याशङ्क्य तेषामादित्यप्राप्तिरेव नास्तीति वक्तुमित्येष इति वाक्यं व्याचष्टे। इति यस्मादिति॥ तस्मात्ते-

उ० मायतनमेतदमृतमभयमेतत् परायणमेतस्मान्न पुनरावर्तन्त इत्येष निरोधस्तदेष श्लोकः ॥ १० ॥
पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे

---

भा० वर्जितं न चन्द्रवत्क्षयवृद्धिभयवदेतत्परायणं परागतिर्विद्यावतां कर्म्मिणाञ्च ज्ञानवतामेतस्मान्न पुनरावर्त्तन्ते यथेतरे केवलकर्म्मिण इति यस्मादेषोऽविदुषां निरोध आदित्याद्धिनिरुद्धा अविद्वांसो नैते संवत्सरमादित्यमात्मानं प्राणमभिप्राप्नुवन्ति । स हि संवत्सरः कालात्माऽविदुषां निरोधः। तत्तत्रास्मिन्नर्थ एष श्लोको मन्त्रः॥ १०॥

पञ्चपादं पञ्चर्त्तवः पादा इवास्य संवत्सरात्मन आदित्यस्य तैरसौ पादैरिवर्त्तुभिर्वर्त्तते । हेमन्तशिशि-

---

व्या० षामादित्यप्राप्तिरनाशङ्क्येति शेषः। यदा तस्यायने इत्यारभ्य इत्येष इति । अतः श्रुतिवाक्यमनयोः रयिप्राणरूपत्वप्रतिपादनपरतया व्याख्येयं । तथाहि संवत्सरस्य रयिप्राणमिथुननिर्व्वर्त्यत्वे रयिप्राणरूपत्वञ्च वक्तव्यं तत्कथमिति पृच्छति । कथमिति ॥ तदवयवयोरनयोस्तद्रूपत्वं वक्तुं तयोः प्रथमं प्रसिद्धिमाह । तस्येति ॥ प्रसिद्धिमेवाह । याभ्यामिति ॥ एवमपि कथं तयोस्तदात्मकत्वमित्याह । कथमिति ॥ दक्षिणायनस्य रयित्वं वक्तुं कर्म्मिणां रयिरूपचन्द्रनिर्व्वर्तकत्वमाह । तत्तत्रेति ॥ लोकमिति सोमरूपं शरीरमित्यर्थः॥ तस्य कर्म्मकृतत्वं पुनरावृत्त्या साधयति । कृतरूपत्वादिति ॥ रयिरूपचन्द्रस्य दक्षिणायनद्वारा प्राप्यत्वात्तस्यायनस्य तदन्तर्भाव इति वक्तुं तस्य कर्म्मिभिः प्राप्यत्वमाह । यस्मादिति ॥ एवञ्चेत्तस्य रयित्वं सिद्धमित्याह एष इति ॥ १० ॥

पितृयाणोपलक्षित इति तत्प्राप्य इत्यर्थः । ततश्च तद्विशेष ॰

उ॰ अर्द्धे पुरीषिणं । अथेमे अन्य उ परे विचक्षणं
सप्तचक्रे षडर आहुरर्पितमिति ॥ ११ ॥

---

भा॰ रावेकीत्यैयं कल्पना। पितरं सर्व्वस्य जनयितृत्वात्पितृत्वं
तस्य द्वादशमासा ऋतवोऽवयवा आकरणं वा अवय-
विकरणमस्य द्वादशमासैस्तं द्वादशाकृतिं दिवः क्व लोका-
त्परे ऊर्द्धे ऊर्द्धस्थाने तृतीयस्यां दिवीत्यर्थः। पुरीषिणं
पुरीषवन्तमुदकवन्तमाहुः कालविदः। विचक्षणं निपुणं
सर्व्वज्ञं सप्तचक्रे सप्तहयरूपे चक्रे सततं गतिकालात्मनि
षडरे षडृतुमति आहुः सर्व्वमिदं जगत्कथयन्ति। अर्पित-
मरा इव रथनाभौ निविष्टमिति। यदि पञ्चपादो द्वाद-

---

आ॰ शस्यायनस्यापि रयित्वमित्यर्थः। इदानीमुत्तरायणस्य प्राणत्व-
माह। अथेति॥ प्राणरूपादित्यप्रापकत्वादुत्तरायणस्य तस्यापि
प्राणत्वमिति संवत्सरस्य रयिप्राणमिथुनात्मकत्वमिति तत्का-
र्य्यत्वं युक्तमिति भावः॥ अस्य कर्म्मसाध्यचन्द्रवैलक्षण्यमाह।
एतदा इति॥ इतरसर्व्वं समानं॥ पञ्चिमन्नर्थे इति संवत्सरस्व-
रूप इत्यर्थः। इयं कल्पनेति पञ्चधा कल्पनेत्यर्थः। जनयितृत्वा-
दिति संवत्सरात्मककालस्य सर्व्वजनकत्वादित्यर्थः॥ सामाना-
धिकरणबहुव्रीहितया व्याख्या व्यधिकरणबहुव्रीहिर्व्वेत्याह।
आकरणं वेति॥ अवयविकरणमित्यवयवित्वेन करणमित्यर्थः।
पक्षद्वयेऽप्येक एवार्थः॥ क्व लोकादिति॥ आकाशरूपादन्तरिक्षलो-
कादित्यर्थः। अन्यथा स्वर्गलोकात्परस्य चतुर्थत्वेन तृतीयस्यामि-
त्यनन्वयापत्तेः। उदकवन्तमिति आदित्याज्जायते वृष्टिरिति
स्मृतेरित्यर्थः। अन्ये इत्यस्य पूर्व्वार्द्धगतेनाहुरित्यनेन सम्बन्धः।
उ इति तु शब्दसमानार्थे निपातः। परे तु तमेव विचक्षणमा-
हुरित्यन्वयः॥ किमाहुरित्यत आह। सप्तचक्र इति॥ तस्मि-
न्निषण्णे सप्तचक्राद्यात्मके सर्व्वमिदं जगदर्पितमित्याहु-

भा॰ शाकृतिर्यदि सप्तचक्रः षडरः सर्व्वथापि संवत्सरः कालात्मा प्रजापतिश्चन्द्रादित्यलक्षणोऽपि जगतः कारणं ॥ ११ ॥

यस्मिन्निदं श्रितं विश्वं स एव प्रजापतिः संवत्सराख्यः स्वावयवे मासे कृत्स्नः परिसमाप्यते। मासो वै प्रजापति-र्यथोक्तलक्षण एव। मिथुनात्मकस्तस्य मासात्मनः प्रजापते-रेको भागः कृष्णपक्षो रयिरन्नं चन्द्रमा अपरो भागः। शुक्लः शुक्लपक्षः प्राण आदित्योऽत्ताग्निर्यस्माच्छुक्लपक्षा-त्मानं प्राणं सर्व्वमेव पश्यन्ति तस्मात्प्राणदर्शिन एते ऋषयः कृष्णपक्षेऽपीष्टं यागं कुर्व्वन्तः शुक्लपक्ष एव कुर्व्वन्ति

आ॰ रित्यर्थः। मतद्वयेऽपि कीदृशोऽर्थभेद इत्यत आह। यदीति॥ पूर्व्वमते ऋतूनां पादत्वकल्पनया मासानामवयवत्वकल्पनया ऽऽदित्यात्मना संवत्सरः काल एवोक्तः। द्वितीये तु हेमन्तशि-शिरौ पृथक्कृत्य षण्णामृतूनामरत्वकल्पनया संवत्सरस्य परिव-र्त्तनगुणयोगेन चक्रत्वकल्पनया कालप्राधान्येन सर्व्वाश्रयत्वेन च स एवोक्तः। पक्षद्वयेऽपि गुणभेदेन कल्पनाभेदेन च भेदो न धर्म्मिभेद इत्यर्थः॥ ११ ॥

कारणत्वे श्लोकोक्तं जगदाश्रयत्वं हेतुमाह। यस्मिन्निति॥ संवत्सरस्यापि मासाहोरात्ररूपव्यतिरेकेणावध्यादिजनकत्वा-भावात्तस्य मासाद्यात्मकत्वमाह। स एवेति॥ यथोक्तेति संव-त्सररूपो रयिप्राणमिथुनात्मक इत्यर्थः। शुक्लकृष्णयोरपि दर्श-पूर्णमासादिकर्म्मानुष्ठानदर्शनात्॥ तस्मादेते ऋषय इत्यादि-वाक्यमनुपपन्नमित्याशङ्क्य शुक्लस्य प्राणात्मत्वज्ञानस्तुतिपरतया व्याचष्टे। यस्मादिति॥ यस्मात्प्राणं सर्व्वमेव सर्व्वात्मकत्वेन पश्यन्ति यस्माच्च प्राणव्यतिरेकेण कृष्णपक्षस्तैर्न दृश्यते तस्मा

उ॰ शुक्लः प्राणस्तस्मादेत ऋषयः शुक्ल इष्टिं कुर्वन्तीतर इतरस्मिन् ॥ १२ ॥

अहोरात्रो वै प्रजापतिस्तस्याहरेव प्राणो रात्रिरेव रयिः प्राणं वा एते प्रस्कन्दन्ति । ये

---

भा॰ प्राणव्यतिरेकेण कृष्णपक्षस्तैर्न दृश्यते यस्मादितरे तु प्राणं न पश्यन्तीत्यदर्शनलक्षणं कृष्णात्मानमेव पश्यन्ति। इतरदितरस्मिन् कृष्णपक्ष एव कुर्व्वन्ति शुक्ले कुर्व्वन्तोऽपि.॥ १२ ॥

सोऽपि मासात्मा प्रजापतिः स्वावयवेऽहोरात्रे परिसमाप्यते। पूर्व्ववत्। तस्याप्यहरेव प्राणोऽत्ताऽग्नीरात्रिरेव रयिः पूर्व्ववत् प्राणमहरात्मानं वै एते प्रस्कन्दन्ति निर्गमयन्ति शोषयन्ति वा स्वात्मनो विच्छिद्याऽपनयन्ति। के। ये दिवाऽहनि रत्या रतिकारणभूतया सह स्त्रिया संयुज्यन्ते मिथुनमैथुनमाचरन्ति मूढाः। यत एवं तस्मात्तन्न

---

आ॰ दित्यन्वयः। प्राणस्य शुक्लपक्षात्मकत्वात्कृष्णपक्षादिसर्व्वजगतः प्राणात्मत्वात्प्राणद्वारा कृष्णपक्षस्यापि शुक्लपक्षत्वे सति कृष्णे कुर्व्वन्तोऽपि प्रकाशात्मके शुक्ल एव कुर्व्वन्तीति शुक्लपक्षे प्राणत्वज्ञानस्य स्तुतिरित्यर्थः॥ एतत्स्तुत्यर्थमेव ज्ञानरहितान्निन्दति। इतरे त्विति॥ ये तु सर्व्वात्मानं प्राणं न पश्यन्त्यज्ञत्वात्तेषां शुक्लपक्षः प्राणत्वेनाज्ञायमानत्वादज्ञानात्मकः सन् कृष्णपक्षत्वमापद्यते अतः शुक्ले कुर्व्वन्तोऽपि अदर्शनात्मकत्वात्प्रकाशरहिते कृष्ण एव कुर्व्वन्तीति ते निन्द्यन्त इत्यर्थः॥ उक्तमर्थं श्रुत्याहृढं करोति। इतर इति॥ १२॥

रयिः पूर्व्ववदिति। रयिरन्नं चन्द्रमा इत्यर्थः। अहः प्राण-

उ॰ दिवा रत्या संयुज्यन्ते ब्रह्मचर्य्यमेव तद्यद्रात्रौ रत्या संयुज्यन्ते ॥ १३ ॥

अन्नं वै प्रजापतिस्ततो ह वै तद्रेतस्तस्मादिमाः प्रजाः प्रजायन्त इति ॥ १४ ॥ तद्ये ह

भा॰ कर्त्तव्यमिति प्रतिषेधः प्रासङ्गिकः। यद्रात्रौ संयुज्यन्ते रत्या ऋतौ ब्रह्मचर्य्यमेव तदिति प्रशस्तत्वादृतौ भार्य्यागमनं कर्त्तव्यमिति। अयमपि प्रासङ्गिको विधिः। प्रकृतन्तूच्यते सोऽहोरात्रात्मकः प्रजापतिर्व्रीहियवाद्यन्नात्मना व्यवस्थितः ॥ १३ ॥

एवं क्रमेणाहोरात्रः प्रजापतिरन्ने विपरिणमते अन्नं वै प्रजापतिः। कथं। ततस्तस्माद्ध वै रेतो नृबीजं तत्प्रजाकारणं तस्माद्योषिति सिक्तादिमा मनुष्यादिलक्षणाः प्रजाः प्रजायन्ते यत्पृष्टं कुतो ह वै प्रजाः प्रजायन्त इति। तदेवं चन्द्रादित्यमिथुनादिक्रमेणाहोरात्रान्तेनान्नरेतोद्वारेणेमाः प्रजाः प्रजायन्त इति निर्णीतं ॥ १४ ॥ तत्रैवं सति ये गृहस्था ह वै इति प्रसिद्धस्मरणार्थौ निपातौ। तत्प्रजा-

व्या॰ त्वोक्तिप्रसङ्गादह्नि मैथुनं निषेधति। प्राणमिति॥ ऋतमिति॥ कुतो ह वा इमाः प्रजाः प्रजायन्त इति पृष्टमित्यर्थः। पूर्व्वोक्तं सर्व्वमेतदुपयोगितयोक्तं न तु साक्षात्प्रकृतमिति भावः॥१३॥

एवं क्रमेणेति रयिप्राणसंवत्सरादिक्रमेण परिणम्य व्रीह्याद्यात्मना व्यवस्थितः सन् अन्नं वै प्रजापतिरन्नात्मको जातः प्रजापतिरित्यन्वयः। कथमिति॥ अन्नरूपत्वेऽपि तस्य कथं प्रजाजनकत्वमित्यर्थः। तत इति भक्षितादन्नादित्यर्थः। रेत इति॥ योषित-

उ० तत्प्रजापतिव्रतं चरन्ति ते मिथुनमुत्पादयन्ते ।
तेषामेवैष ब्रह्मलोको येषां तपो ब्रह्मचर्य्यं येषु
सत्यं प्रतिष्ठितं ॥ १५ ॥ तेषामसौ विरजो

भा० पतेर्व्रतं। ऋतौ भार्य्यागमनं चरन्ति कुर्व्वन्ति तेषां दृष्टफलमिदं। किं। ते मिथुनं पुत्रं दुहितरञ्चोत्पादयन्ते। अदृष्टञ्च फलमिष्टापूर्त्तदत्तकारिणां तेषामेव। एष यश्चान्द्रमसो ब्रह्मलोकः पितृयाणलक्षणो येषां तपः स्नातकव्रतादीनि ब्रह्मचर्य्यं। ऋतावन्यत्र मैथुनासमाचरणं ब्रह्मचर्य्यं। येषु च सत्यमनृतवर्जनं प्रतिष्ठितमव्यभिचारितया वर्त्तते ॥ १५ ॥ यस्तु पुनरादित्योपलक्षित उत्तरायणः प्राणात्मभावो विरजः शुद्धो न चन्द्रब्रह्मलोकवद्रजस्वलो वृद्धिक्षयादियुक्तोऽसौ। केषां तेषामित्युच्यते। यथा गृहस्थानामनेकविरुद्धसंव्यवहारप्रयोजनवत्त्वाज्जिह्मं कौटिल्यं वक्रभावोऽवश्यम्भावि । तथा न येषु जिह्मं। यथा च गृहस्थानां क्रीडादिनिमित्तमनृतमवर्जनीयं तथा न येषु

आ० स्याप्युपलक्षणं तुल्यत्वादिति । प्रजापतिव्रताचरणमात्रेणादृष्टफलं चन्द्रलोकः प्राप्यते मूर्खाणामपि प्रसङ्गादत आह । इष्टापूर्त्तेति ॥ चान्द्रमसो ब्रह्मलोक इत्यपरब्रह्मणः प्रजापतेरंशत्वाद्रयिरूपस्य चन्द्रस्य ब्रह्मलोकत्वमित्यर्थः। इष्टादिकारिणां तप आदिकमपि चन्द्रलोकप्राप्त्यर्थमपेक्षितमित्यत आह । येषां तप इति ॥ १४ ॥ १५ ॥ तेषामसौ विरज इत्यादिवाक्यं व्याचष्टे। यस्त्विति ॥ उत्तरायण इति। तेन प्राप्य इत्यर्थः। प्राणात्मभावोऽपरब्रह्मतयाऽवस्थानमित्यर्थः । असौ केषां तेषामिति तेषामसौ विरज इत्यत्र तेषामित्यनेन केषां निर्देश इति प्रश्नार्थः। न

उ॰ ब्रह्मलोको न येषु जिह्ममनृतं न माया चेति ॥ ॥ १६ ॥ इति प्रथमः प्रश्नः ॥ १ ॥

अथ हैनं भार्गवो वैदर्भिः पप्रच्छ । भगवन् कत्येव देवाः प्रजां विधारयन्ते कतर एतत्

भा॰ तत्तथा माया गृहस्थानामिव न येषु विद्यते । माया नाम वहिरन्यथात्मानं प्रकाश्यान्यथैव कार्य्यं करोति सा माया मिथ्याचाररूपा । मायेत्येवमादयो दोषा येष्वधिकारिषु ब्रह्मचारिवानप्रस्थभिक्षुषु निमित्ताभावान्न विद्यन्ते तत्साधनानुरूपेणैव तेषामसौ विरजो ब्रह्मलोक इत्येषा ज्ञानयुक्तकर्म्मवतां गतिः। पूर्व्वोक्तस्तु ब्रह्मलोकः केवलकर्म्मिणां चन्द्रलोक इति ॥ १६ ॥ इति प्रथम प्रश्नभाष्यं समाप्तं ॥ १ ॥

प्राणोऽत्ता प्रजापतिरित्युक्तं । तस्य प्रजापतित्वमत्तृत्वञ्चास्मिञ्छरीरेऽवधारयितव्यमित्ययं प्रश्न आरभ्यते। अथानन्तरं ह किलैनं भार्गवो वैदर्भिः पप्रच्छ। हे भगवन् कत्येव देवाः प्रजां शरीरलक्षणां विधारयन्ते विशेषेण धार-

या॰ येषु जिह्ममित्यत्र जिह्मादिशब्दं व्यतिरेकप्रदर्शनेन व्याचष्टे । यथेत्यादिना ॥ मायाग्रहणं तादृशानां दोषाणामुपलक्षणमिति वदन् वाक्यार्थं सङ्गृह्य दर्शयति । मायेत्येवमिति ॥ भिक्षुष्विति परमहंसव्यतिरिक्तानां कुटीचराणां ग्रहणं । तेषां ब्रह्मलोकादपि विरक्तत्वेन तत्रानर्थितत्वात् ॥ इतिशब्दार्थमाह । इत्येषेति ॥ ॥ १६ ॥ इति प्रथमः प्रश्नः ॥ १ ॥

प्रश्नान्तरस्यैतेन प्रश्नेन सङ्गतिमाह । प्राणोऽत्तेति ॥ अवधारयितव्यमिति ॥ अत्त्वा विश्वस्य सत्पतिरित्यत्तृत्वमुच्येऽमित्तपतीत्यारभ्यारा इव रथनाभौ प्राणे सर्व्वं प्रतिष्ठितं । प्रजापतिश्चरसि गर्भे त्वमेव प्रतिजायस इत्यादिना च प्रजापतित्वस्योत्तरत्र वक्ष्य-

उ॰ प्रकाशयन्ते कः पुनरेषां वरिष्ठ इति ॥ १ ॥
तस्मै स होवाचाकाशो ह वा एष देवो वायु-
रग्निरापः पृथिवी वाङ्मनश्चक्षुः श्रोत्रञ्च । ते

भा॰ यन्ते । कतरे बुद्धीन्द्रियकर्म्मेन्द्रियविभक्तानामेतत्प्रकाशनं स्वमाहात्म्यप्रख्यापनं प्रकाशयन्ते । कोऽसौ पुनरेषां वरिष्ठः प्रधानः कार्य्यकारणलक्षणानामिति ॥ १ ॥ एवं पृष्टवते तस्मै स होवाच । आकाशो ह वा एष देवो वायुरग्निरापः पृथिवीत्येतानि पञ्च महाभूतानि शरीरारम्भकाणि वाङ्मनश्चक्षुःश्रोत्रमित्यादीनि कर्म्मेन्द्रियबुद्धीन्द्रियाणि च शरीरं धारयन्ते । तन्मध्ये कर्म्मेन्द्रियबुद्धीन्द्रियाणि शरीरे स्वमाहात्म्यख्यापनं प्रकाशयन्ते। कार्य्यलक्षणा

आ॰ माणत्वादित्यर्थः । इदमुपलक्षणं पूर्व्वं गतिश्रवणेन चिरकालयापि चित्तैकाग्र्यं विना वक्ष्यमाणात्मना सिद्धेस्तदर्थे मन्दानां फलविशेषार्थं च प्राणोपासनार्थं प्रश्नद्वयारम्भः । तत्रापि श्रेष्ठत्वात्तत्प्रजापतित्वादिगुणनिर्द्धारणार्थं द्वितीयः प्रश्नः । तदुत्पत्त्यादिनिर्द्धारणपूर्व्वकं तदुपासनविधानार्थं तृतीयः प्रश्न इत्यपि द्रष्टव्यं । प्रजाशब्देन शरीरमेव गृह्यते न जीवस्तस्य प्राणधारकत्वेन तद्धार्य्यत्वाभावादित्याह । शरीरेति ॥ विभक्तानामिति निर्द्धारणे षष्ठी । स्वमाहात्म्यख्यापनमिति अवकाशदानादिकमाकाशादीनां माहात्म्यं तस्य ख्यापने तस्य लोकान् प्रति प्रकटनं तत्प्रकाशयन्ते कुर्व्वन्तीत्यर्थः । पाकं पचतीति वदवकाशदानादिकं स्वस्वकार्य्यं सर्व्वलोकप्रकटनं यथा तथा कतरे कुर्व्वन्तीत्यर्थः ॥ १ ॥ एष देव इति वक्ष्यमाणाभिवदनादिव्यवहारसिद्ध्यर्थं चेतनत्वं सम्भावयितुं देव इति विशेषणं । अभिमानिव्यपदेशस्तु विशेषणानुगतिभ्यामिति न्यायेनाकाशाद्यभिमानिदेवताग्रहणार्थं । तच्च विशेषणं वाय्वादिष्वपि सर्व्वत्र सम्बध्यते ।

उ॰ प्रकाश्याभिवदन्ति वयमेतद्बाणमवष्टभ्य विधारयामः ॥ २ ॥

तान् वरिष्ठः प्राण उवाच । मा मोहमापद्यथाऽहमेवैतत् पञ्चधात्मानं प्रविभज्यैतद्बाणमव-

भा॰ करणलक्षणाश्च ते देवा आत्मनो माहात्म्यं प्रकाश्याभिवदन्ति स्पर्द्धमानाः श्रेष्ठतायै । कथं वदन्ति । वयमेतद्बाणं शरीरं कार्य्यकारणसङ्घातमवष्टभ्य प्रासादमिव स्तम्भादयोऽविशिथिलीकृत्य विधारयामो विस्पष्टं धारयामः । मयैवैकेनायं सङ्घातो ध्रियत इत्येकैकस्याभिप्रायः ॥ २ ॥

तानेवमभिमानवतो वरिष्ठः प्राणो मुख्य उवाचोक्तवान् । मा मैवं मोहमापद्यथ अविवेकतयाऽभिमानं मा कुरुत यस्मादहमेवैतद्बाणमवष्टभ्य विधारयामि पञ्चधाऽऽत्मानं प्रविभज्य प्राणादिवृत्तिभेदं स्वस्य कृत्वा विधार-

आ॰ वाग्ग्रहणं कर्म्मेन्द्रियोपलक्षणार्थं ॥ चक्षुरादिग्रहणं ज्ञानेन्द्रियोपलक्षणार्थमिति मत्वाह । कर्म्मेन्द्रियेति ॥ कार्य्यलक्षणाः शरीराकारेण परिणता आकाशादयः । करणलक्षणानीन्द्रियाणि । माहात्म्यमिति आकाशादीनामवकाशदानादिरूपं शरीरधारणैकदेशात्मकं प्रकाश्यं स्वकार्य्यं प्रकाश्य सर्व्वलोकप्रकटं यथा तथा कृत्वाभिवदन्ति अभितः सर्व्वतः कृत्स्नं शरीरधारणं प्रत्येकं वयमेव कुर्म्म इति वदन्तीत्यर्थः । बाणमिति ॥ वातीति बवयोरभेदाद्वा । अति कुत्सितं गन्धं वहतीति वा । विनाशं गच्छतीति वा । देशाद्देशान्तरं गच्छतीति वा बाणं । बाणमिव बाणं कार्य्यकरणसङ्घातं शरीरमित्यर्थः ॥ २ ॥

कथमेतदिति । एतत्तु अहमेवैतदित्याद्युक्तं । एवं यथाभूतं कथमित्यर्थः ॥ ३ ॥ उत्क्रान्तवानिवेति ॥ अत्यन्तोत्क्रान्त्यभावा-

उ० ष्ट्भ्य विधारयामीति ॥ ३ ॥ तेऽश्रद्दधाना बभूवुः।
सोऽभिमानादूर्ध्वमुत्क्रामत इव तस्मिन्नुत्क्रामत्यथे-
तरे सर्व एवोत्क्रामन्ते तस्मिंश्च प्रतिष्ठमाने सर्व
एव प्रातिष्ठन्ते । तद्यथा मक्षिका मधुकरराजा-
नमुत्क्रामन्तं सर्वा एवोत्क्रामन्ते तस्मिंश्च प्रतिष्ठ-
माने सर्वा एव प्रातिष्ठन्त एवं वाङ्मनश्चक्षुः
श्रोत्रञ्च ते प्रीताः प्राणं स्तुन्वन्ति ॥ ४ ॥

---

भा० यामीति ॥ ३ ॥ इत्युक्तवति चास्मिंस्तेऽश्रद्दधाना अप्रत्यय-
वन्तो बभूवुः कथमेतदेवमिति । स च प्राणः तेषाम-
श्रद्दधानतामालक्ष्याभिमानादूर्ध्वमुत्क्रामत इवोत्क्रामति
इवेदमुत्क्रान्तवानिव सरोषान्निरपेक्षस्तस्मिन्नुत्क्रामति यद्वृत्तं
तद्दृष्टान्तेन प्रत्यक्षीकरोति । तस्मिन्नुत्क्रमति सति अथा-
नन्तरमेवेतरे सर्व्वे एव प्राणाश्चक्षुरादय उत्क्रामन्ते
उत्क्रामन्ति उच्चक्रमुः । तस्मिंश्च प्राणे प्रतिष्ठमाने तूष्णीं
भवत्यनुत्क्रामति सति सर्व्वे एव प्रतिष्ठन्ते तूष्णीं व्यवस्थिता
अभूवन् । तद्यथा लोके मक्षिका मधुकराः स्वराजानं
मधुकरराजानमुत्क्रामन्तं प्रति सर्व्वा एवोत्क्रामन्ते तस्मिंश्च
प्रतिष्ठमाने सर्व्वा एव प्रतिष्ठन्ते प्रतिष्ठन्ति । यथाऽयं
दृष्टान्त एवं वाङ्मनश्चक्षुःश्रोत्रञ्चेत्यादयस्त उत्सृज्याश्र-
द्दधानतां बुद्ध्वा प्राणमाहात्म्यं प्रीताः प्राणं स्तुवन्ति ॥ ४ ॥

---

आ० इवशब्दः । निरपेक्ष इति स्वयमेवेत्यर्थः । दृष्टान्तेनेति तत्र
यथेति वक्ष्यमाणेनेत्यर्थः ॥ ४ ॥

उ॰ एषोऽग्निस्तपत्येष सूर्य्य एष पर्जन्यो मघ-वानेष वायुरेष पृथिवी रयिर्देवः सदसच्चामृ-तञ्च यत् ॥ ५ ॥ अरा इव रथनाभौ प्राणे सर्वं प्रतिष्ठितं । ऋचो यजूंषि सामानि यज्ञः क्षत्रं ब्रह्म च ॥ ६ ॥ प्रजापतिश्चरसि गर्भे त्वमेव प्रति-

---

भा॰ कथमेष प्राणोऽग्निः संस्तपति ज्वलति। तथैष सूर्य्यः सन् प्रकाशते। तथैष पर्जन्यः सन् वर्षति। किञ्च मघवानिन्द्रः सन् प्रजाः पालयति जिघांसत्यसुररक्षांसि। एष वायुरा-वहप्रवाहादिभेदः। किञ्चैष पृथिवी रयिर्देवः सर्व्वस्य जगतः सन् मूर्त्तमसदमूर्त्तञ्चामृतञ्च यद्देवानां स्थितिकारणं किञ्च बहुना ॥ ५ ॥ अरा इव रथनाभौ श्रद्धादिनामान्तं सर्व्वं शरीरं स्थितिकाले प्राणे प्रतिष्ठितं । तथा ऋचो यजूंषि सामानीति त्रिविधा मन्त्रास्तत्साध्यश्च यज्ञः क्षत्रञ्च सर्व्वस्य पालयितृ ब्रह्म च यज्ञादिकर्म्मकर्तृत्वेऽधिकृतञ्चैवैष प्राणः सर्व्वं ॥ ६ ॥ किञ्च। यः प्रजापतिरपि स त्वमेव गर्भे

---

आ॰ सूर्य्यः सन्निति तपतीत्यनुषङ्गः। सन्तापयतीत्यर्थः। आवह-प्रवाहादीत्यावहादयः सप्त वायुगणास्तथा भूतः सन्मेघान् ज्योतिश्चक्रादींश्च वहतीति शेषः। एष देवः पृथिवी सन् सर्व्वस्य जगतो धारयिता। रयिश्चन्द्रः सन् सर्व्वं पुष्णातीत्यर्थः। श्रद्धा-दीति ॥ प्राणाच्छ्रद्धात् खं वायुर्ज्योतिराप इत्यादिना वक्ष्यमाण-षोडशकलात्मक इत्यर्थः ॥ ५ ॥ ब्रह्म चेति ब्राह्मणजातिरित्यर्थः ॥ चशब्दार्थमाह। यज्ञादीति ॥ अधिकृतं सर्व्वमेवेत्यन्वयः ॥ ६ ॥ किञ्चेति यः प्रजापतिर्व्विराट् सोऽपि त्वमेवेत्यन्वयः। पितुर्गर्भे

उ॰ जायसे। तुभ्यं प्राणः प्रजास्त्विमा वलिं हरन्ति
यः प्राणैः प्रतितिष्ठसि ॥ ७ ॥ देवानामसि
वह्नितमः पितॄणां प्रथमा स्वधा। ऋषीणाञ्च-
रितं सत्यमथर्वाङ्गिरसामसि ॥ ८ ॥ इन्द्रस्त्वं

---

भा॰ चरसि पितुर्मातुश्च प्रति प्रतिरूपः सन् प्रतिजायसे प्रजाप-
तित्वादेव प्रागेव सिद्धं तव मातृपितृत्वं सर्व्वदेहदेह्याकृति-
च्छन्न एकः प्राणः सर्व्वात्मासीत्यर्थः। तुभ्यं त्वदर्थाय इमा
मनुष्याद्याः प्रजाः तु हे प्राणश्चक्षुरादिद्वारैर्वलिं हरन्ति।
यस्त्वं प्राणैश्चक्षुरादिभिः सह प्रतितिष्ठसि सर्व्वशरीरेष्वत-
स्तुभ्यं वलिं हरन्तीति युक्तं। भोक्ता हि यस्त्वं तवैवा-
न्यत्सर्व्वं भोज्यं ॥ ७ ॥ किञ्च देवानामिन्द्रादीनामसि
भवसि त्वं वह्नितमः हविषां प्रापयितृतमः। पितॄणां
नान्दीमुखे श्राद्धे या पितृभ्यो दीयते स्वधाऽन्नं सा देव-
प्रदानमपेक्ष्य प्रथमा भवति। तस्या अपि पितृभ्यः प्रापयि-
ता त्वमेवेत्यर्थः। किञ्च ऋषीणां चक्षुरादीनां प्राणानाम-

---

आ॰ रेतोरूपेण मातुर्गर्भे पुत्ररूपेण यश्चरति यश्चानयोरेव प्रति-
रूपः सन् सदृशः सन् यः प्रजायते स त्वमेव प्रजायस इत्य-
न्वयः। प्रतिशब्दार्थ उक्तः प्रतिरूपः सन्निति॥ ननु प्राणस्य
पुत्ररूपत्वमेवोक्तं न तु पितृमातृरूपत्वं तत्कथमादत आह।
प्रजापतित्वादेवेति। तस्य सर्व्वात्मत्वादित्यर्थः॥ निष्कृष्टार्थ-
माह। सर्व्वदेहेति। अत्रापि निष्कृष्टार्थमाह। भोक्ता हीति।
अतस्तवैवेत्यतःशब्दाध्याहारेण योज्यं॥ ७॥ हविषां प्रापयि-
तृतम इति॥ वह्निशब्दो वहनाद्वह्निरिति यौगिक इत्यर्थः।
प्रथमा भवतीति यज्ञादिदेवकर्म्मणि प्रथमं नान्दीमुखश्राद्ध-

उ॰ प्राण तेजसा रुद्रोऽसि परिरक्षिता । त्वमन्त-
रिक्षे चरसि सूर्य्यस्त्वं ज्योतिषाम्पतिः ॥ ९ ॥
यदा त्वमभिवर्षस्यथेमाः प्राण ते प्रजाः । आन-
न्दरूपास्तिष्ठन्ति कामायान्नं भविष्यतीति ॥ १० ॥

---

भा॰ ङ्गिरसामङ्गिरसभूतानामथर्व्वणां तेषामेव प्राणो वा
ऽथर्व्वा इति श्रुतेः । चरितं चेष्टितं सत्यमवितथं देहधा-
रणाद्युपकारलक्षणं त्वमेवासि ॥ ८ ॥ किञ्चेन्द्रः परमे-
श्वरस्त्वं हे प्राण तेजसा वीर्य्येण । रुद्रोऽसि हरन् जगत् ।
स्थितौ च परि समन्ताद्रक्षिता पालयिता परिरक्षिता
त्वमेको जगतः सौम्येन रूपेण । त्वमन्तरिक्षेऽजस्रं चरसि
उदयास्तमयाभ्यां सूर्य्यस्त्वमेव च सर्व्वेषां ज्योतिषाम्पतिः
॥ ९ ॥ यदा पर्जन्यो भूत्वाभिवर्षसि त्वं अथ तदान्नं
प्राप्येमाः प्रजाः प्राणन्ति प्राणचेष्टां कुर्व्वन्तीत्यर्थः । अथवा
प्राण ते तवेमाः प्रजाः स्वात्मभूतास्त्वदन्नसंवर्द्धितास्त्वद-
भिवर्षणदर्शनमात्रेण चानन्दरूपाः सुखं प्राप्ता इव सत्यस्ति-
ष्ठन्ति । कामाय इच्छातोऽन्नं भविष्यतीत्येवमभिप्रायः ॥ १० ॥

आ॰ स्यावश्यकर्त्तव्यत्वात्तस्य प्रथमेत्यर्थः । ऋष गताविति धातोर्ज्ञानार्थ-
त्वादृषिशब्दस्य ज्ञानजनकचक्षुराद्यर्थत्वमित्यर्थः । अङ्गिरस-
भूतानामिति ॥ प्राणाभावेऽङ्गानां शोषदर्शनात्तेषामङ्गिरसत्वमि-
त्यर्थः । मुख्यप्राणस्याथर्व्वत्वं श्रुत्यभिहितं यद्यपि तथापि
चक्षुरादीनामपि तदंशत्वादथर्व्वशब्दार्थत्वमिति भावः । इन्द्र-
शब्देन परमेश्वरत्वमुच्यते मघवानित्यनेन त्विन्द्र उक्त इति
भेदमाह । इन्द्रः परमेश्वर इति ॥ वीर्य्येण संहारसामर्थ्येने-
त्यर्थः । सौम्येनेति विष्ण्वादिरूपेणेत्यर्थः ॥ ८ ॥ ९ ॥ १० ॥

उ॰ व्रात्यस्त्वं प्राणैकऋषिरत्ता विश्वस्य सत्पतिः।
वयमाद्यस्य दातारः पिता त्वं मातरिश्व नः॥
॥ ११ ॥ या ते तनूर्वाचि प्रतिष्ठिता या श्रोत्रे
या च चक्षुषि। या च मनसि सन्तता शिवां तां

भा॰ किञ्च प्रथमजत्वादन्यस्य संस्कर्त्तुरभावादसंस्कृतो व्रात्यस्त्वं स्वभावत एव शुद्ध इत्यभिप्रायः। हे प्राण एकऋषिस्त्वमाथर्व्वणानां प्रसिद्ध एकर्षिनामाऽग्निः सन्नत्ता सर्व्वहविषां। त्वमेव विश्वस्य सर्व्वस्य सतो विद्यमानस्य पतिः सत्पतिः। साधुर्वा पतिः सत्पतिः। वयं पुनराद्यस्य तवादनीयस्य हविषो दातारः। त्वं पिता मातरिश्व नोऽस्माकं। अथवा मातरिश्वनो वायोस्त्वं। अतश्च सर्व्वस्यैव जगतः पितृत्वं सिद्धं॥११॥ किं बहुना। या ते त्वदीया तनूर्व्वाचि प्रतिष्ठिता वक्तृत्वेन वदनचेष्टां कुर्व्वती। या श्रोत्रे या च चक्षुषि या

आ॰ असंस्कृत इति॥ संस्कारहीनो व्रात्य इति स्मृतेरित्यर्थः॥ अनेन स्वतः शुद्धत्वं विवक्षितमित्याह। स्वभावत एवेति॥ मातरिश्वेति मातरिश्व इत्यत्र नलोपश्छान्दस इत्यर्थः। वायोस्त्वमिति पितेत्यनुषङ्गः। अस्मिन्व्याख्याने वायुमात्रपितृत्वादस्मदादिसर्व्वपितृत्वमनुक्तं स्यादत आह। अतश्चेति॥ अस्मदादिसर्व्वजनकत्वाद्वायोस्तज्जनकस्याकाशात्मनः प्राणस्य सर्व्वजनकत्वं सिद्धमित्यर्थः॥ वाचि प्रतिष्ठितेति॥ वाच्यपानरूपा तनूः प्रतिष्ठिता। श्रोत्रे व्यानरूपा। चक्षुषि प्राणरूपा॥ मनसि समानरूपा। स प्राणस्तच्चक्षुः स व्यानस्तच्छ्रोत्रं सोऽपानः सा वाक् स समानस्तन्मन इति श्रुतेरित्यर्थः। उत्क्रमणेनेति प्राणोत्क्रमणे सत्यपानाद्यात्मिका वागादिरूपा तनूः अशिवा कार्य्यायोग्या

उ॰ कुरु मोत्क्रमीः ॥१२॥ प्राणस्येदं वशे सर्वं त्रिदिवे यत्प्रतिष्ठितं। मातेव पुत्रान्रक्षस्व श्रीश्च प्रज्ञाञ्च विधेहि न इति ॥१३॥ इति द्वितीयप्रश्नः ॥२॥

अथ हैनं कौसल्यश्चाश्वलायनः पप्रच्छ। भग-

---

भा॰ मनसि सङ्कल्पादिव्यापारेण सन्तता समनुगता तनूस्तां शिवां शान्तां कुरु मोत्क्रमीरुत्क्रमणेनाशिवां माकार्षीरित्यर्थः ॥ १२ ॥ किं बहुना। अस्मिंल्लोके प्राणस्यैव वशे सर्व्वमिदं यत्किञ्चिदुपभोगजातं त्रिदिवे तृतीयस्यां दिवि च यत्प्रतिष्ठितं देवाद्युपभोगलक्षणं तस्यापि प्राण एव ईशिता रक्षिता। अतो मातेव पुत्रानस्मान्रक्षस्व पालयस्व। त्वन्निमित्ता हि ब्राह्म्यः क्षात्रियाश्च श्रियस्तास्त्वं श्रीश्च प्रज्ञाञ्च त्वत्स्थितिनिमित्तां विधेहि नो विधत्स्वेत्यर्थः। इत्येवं सर्व्वात्मना यो वागादिभिः प्राणैः स्तुत्यागमितमहिमानः स प्रजापतिरेवेत्यवधृतं ॥ १३ ॥ इति द्वितीयप्रश्नभाष्यं ॥ २ ॥

अथ हैनं कौसल्यश्चाश्वलायनः पप्रच्छ। प्राणैर्ह्येवं निर्द्धारिततत्त्व उपलब्धमहिमाऽपि संहतत्वात् स्यादस्य

---

आ॰ स्यादित्यर्थः। ब्राह्म्य इत्युगादिमन्त्ररूपा ब्राह्म्यः श्रियः ऋचः सामानि यजूंषि। सा हि श्रीरमृता सतामिति श्रुतेः। क्षात्र्यः प्रसिद्धा धनाद्यैश्वर्य्यरूपाः। अस्मिन्प्रश्ने निर्द्धारितं गुणं सङ्क्षिप्याह। इत्येवमिति ॥ इदं वरिष्ठत्वादेरुपलक्षणं ॥ ११ ॥ १२ ॥ १३ ॥ इति द्वितीयप्रश्नभाष्यटीका ॥ २ ॥

एवं प्रजापतित्वात्तृत्वादिगुणजातं निर्द्धार्य्य प्राणस्योत्पत्त्यादि निर्द्धारयन् तदुपासनां विधातुं प्रश्नान्तरमवतारयति। अथेति ॥ वैदर्भिप्रश्नानन्तरमित्यर्थः। प्राणैरिति यैर्वागादिप्राणैराकाशादिभिश्च प्राणस्य तत्त्वमुपलब्धं तैरित्यर्थः। प्राणस्य पूर्व्वात्तम-

उ० वन् कुत एष प्राणो जायते कथमायात्यस्मि-
ञ्छरीर आत्मानं वा प्रविभज्य कथं प्रातिष्ठते
केनोत्क्रमते कथं वाह्यमभिधत्ते कथमध्यात्म-
मिति ॥ १ ॥ तस्मै स होवाचाति प्रश्नान् पृच्छसि
ब्रह्मिष्ठोऽसीति तस्मात्तेऽहं ब्रवीमि ॥ २ ॥

---

भा० कार्य्यत्वमतः पृच्छामि । भगवन् कुतः कस्मात्कारणादेष
यथावधृतः प्राणो जायते । जातश्च कथं केन वृत्तिविशेषे-
णायात्यस्मिञ्छरीरे । किन्निमित्तकमस्य शरीरग्रहणमि-
त्यर्थः । प्रविष्टश्च शरीरे आत्मानं वा प्रविभज्य प्रविभागं
कृत्वा कथं केन प्रकारेण प्रातिष्ठते प्रतितिष्ठति । केन वा
वृत्तिविशेषेणास्माच्छरीरादुत्क्रमते उत्क्रामति । कथं वाह्य-
मधिभूतमधिदैवञ्चाभिधत्ते धारयति । कथमध्यात्म-
मिति धारयतीति शेषः ॥ १ ॥ इत्येवं पृष्टस्तस्मै स होवा-
चाचार्य्यः । प्राण एव तावद्दुर्विज्ञेयत्वाद्विषमप्रश्नार्हस्तस्यापि
जन्मादि त्वं पृच्छस्यतोऽतिप्रश्नान् पृच्छसि । ब्रह्मिष्ठो
ऽसीत्यतिशयेन त्वं ब्रह्मविदतस्तुष्टोऽहं तस्मात्ते तुभ्यं
प्रब्रवीमि यत्पृष्टं शृणु ॥ २ ॥

---

आ० हिमत्वादिदेवोत्पत्तिशङ्काभावात्कुत इति प्रश्नानुपपत्तिमाश-
ङ्क्याह । अपि संहतत्वादिति ॥ अनेकात्मकत्वात्सावयवत्वादित्यर्थः ।
शरीरग्रहणमिति शरीरप्रवेश इत्यर्थः । प्रातिष्ठत इत्यङ्प्रश्ले-
षाद्दीर्घत्वं ॥ विषमेति विषमं दुर्घटं यथा प्रश्नार्हमित्यर्थः । अति-
प्रश्नानिति त्वदन्येषां प्रश्नानतिक्रान्तानन्यदीयप्रश्नागोचरान्
सूक्ष्मप्रश्नान् प्रष्टव्यार्थानित्यर्थः । अतिशयेनेत्यपेक्षयाऽतिशयितं
मुख्यं ॥ ब्रह्मविदिति प्रोत्साहनार्थं स्तौतीति भावः ॥ १ ॥ २ ॥

उ॰ आत्मन एष प्राणो जायते । यथैषा पुरुषे छायैतस्मिन्नेतदाततं मनोकृतेनायात्यस्मिञ्छरीरे ॥ ३ ॥ यथा सम्राडेवाधिकृतान्विनियुङ्क्ते । एतान् ग्रामानेतान् ग्रामानधितिष्ठस्वेत्येवमेवैष प्राणः । इतरान् प्राणान् पृथक् पृथगेव सन्नि-

---

भा॰ आत्मनः परस्मात्पुरुषादक्षरात्सत्यादेवैष उक्तः प्राणो जायते । कथमित्यत्र दृष्टान्तः । यथा लोके एषा पुरुषे शिरःपाण्यादिलक्षणे निमित्ते छाया नैमित्तिकी जायते तद्वदेतस्मिन् ब्रह्मण्येतत्प्राणाख्यं छायास्थानीयमनृतरूपं तत्त्वं सत्ये पुरुषे आततं समर्पितमित्येतत् । छायेव देहे मनोकृतेन मनःकृतेन मनःसङ्कल्पेच्छादिनिष्पन्नकर्मनिमित्तेनेत्येतद्वक्ष्यति हि पुण्येन पुण्यमित्यादि ।"तदेव सक्तः सह कर्मणेति च श्रुत्यन्तरात् । आयात्यागच्छत्यस्मिञ्छरीरे ॥ ३ ॥ यथा येन प्रकारेण लोके राजा सम्राडेव ग्रामादिष्वधिकृतान्विनियुङ्क्ते । कथं । एतान् ग्रामानेतान् ग्रामानधितिष्ठस्वेति । एवमेव यथा दृष्टान्तः । एष मुख्यः प्राण इतरान्

---

आ॰ दिव्यो ह्यमूर्त्तः पुरुष अक्षरात्परतः परः । एतस्माज्जायते प्राण इति मन्त्रौ अत्र संवादयितुं तद्गतविशेषणान्याह । परस्मादिति ॥ अत्र दृष्टान्त इति तस्मान्तत्वार्थं दृष्टान्त उच्यते इत्यर्थः । छायेति प्रतिबिम्बादिरूपेत्यर्थः । एतस्मिन्निति प्रकृतजनके आत्मनि ब्रह्मणीत्यर्थः ॥ कथमायातीत्यस्योत्तरमाह । मनोकृतेनेति ॥ सन्धिरार्षः । तदेव सक्त इत्यस्य कर्म्मिणो मनो यस्मिन् फले निषक्तं संसक्तं आसक्तः सन् तदेव फलं कर्म्मणा सह एतीति श्रुतौ च शरीरग्रहणं कर्म्मसाध्यमुक्तमि-

उ० धत्ते ॥ ४ ॥ पायूपस्थेऽपानं चक्षुःश्रोत्रे मुखनासिकाभ्यां प्राणः स्वयं प्रातिष्ठते मध्ये तु समानः । एष ह्येतद्धुतमन्नं समन्नयति तस्मादेताः सप्तार्चिषो भवन्ति ॥ ५ ॥

---

भा० प्राणांश्चक्षुरादीनात्मभेदांश्च पृथक् पृथगेव यथास्थानं सन्निधत्ते विनियुङ्क्ते ॥ ४ ॥ तत्र विभागः । पायूपस्थे पायुश्च उपस्थश्च पायूपस्थं तस्मिन् । अपानमात्मभेदं मूत्रपुरीषाद्यपनयनं कुर्वंस्तिष्ठति सन्निधत्ते । तथा चक्षुःश्रोत्रे चक्षुश्च श्रोत्रञ्च चक्षुःश्रोत्रं तस्मिंश्चक्षुःश्रोत्रे । मुखनासिकाभ्याञ्च मुखञ्च नासिका च मुखनासिके ताभ्यां मुखनासिकाभ्याञ्च निर्गच्छन् प्राणः स्वयं सम्राट्स्थानीयः प्रातिष्ठते प्रतितिष्ठति । मध्ये तु प्राणापानयोः स्थानयोर्नाभ्यां । समानमशितं पीतञ्च समं नयतीति समानः । एष हि यस्माद्यदेतद्धुतं भुक्तं पीतञ्चात्माग्नौ प्रक्षिप्तमन्नं समं नयति तस्मादशित-

---

आ० त्यर्थः ॥ ३ ॥ आत्मानं वा प्रविभज्येत्यस्योत्तरं दृष्टान्तेनाह । यथेति ॥ इतरानिति इतरांश्चक्षुरादीन् यथास्थानं चक्षुरादिगोलकस्थाने सन्निधत्ते सन्निधापयति । आत्मभेदान् मुख्यप्राणस्य वृत्तिभेदान् प्राणापानादीन् पाय्वादिषु नियुङ्क्ते इत्यत्र श्रुत्या नेत्रादीनां चक्षुरादिस्थानानां स्पष्टत्वात्तानि नोक्तानीति द्रष्टव्यं । यः कुर्वंस्तिष्ठति तं सन्निधत्ते विनियुङ्क्ते इत्यर्थः । मध्येति प्राणापानयोर्मध्ये या नाभिस्तस्यां समानः प्रतितिष्ठतीत्यन्वयः ॥ समानशब्दार्थमुक्त्वा श्रुत्यारूढं करोति । एष हीति ॥ आत्माग्नाविति आत्मनि शरीरेऽग्निस्तस्मिन्नित्यर्थः । एवं हुतपदबलादन्नस्य हविष्ट्वं जाठराग्नेराहवनीयत्वं प्रक्षेपस्य होमत्वञ्चोक्त्वा

उ॰ हृदि ह्येष आत्मा । अत्रैतदेकशतं नाडीनां तासां शतं शतमेकैकस्यां द्वासप्ततिर्द्वासप्ततिः प्रति-

भा॰ पीतेन्धनादग्नेरौदर्य्याद्धृदयदेशादेताः सप्तसङ्ख्याका अर्चिषो दीप्तयो निर्गच्छन्त्यो भवन्ति शीर्षण्यः । प्राणद्वारा दर्शन-श्रवणादिलक्षणरूपादिविषयप्रकाश इत्यभिप्रायः ॥ ५ ॥

हृदि ह्येष । पुण्डरीकाकारमांसपिण्डपरिच्छिन्ने हृदयाकाशे एष आत्मा आत्मसंयुक्तो लिङ्गात्मा जीवात्मेत्यर्थः। अत्रास्मिन् हृदये एतदेकशतमेकोत्तरशतं सङ्ख्यया प्रधाननाडीनां भवतीति । तासां शतं शतमेकैकस्यां प्रधाननाड्यां भेदाः । पुनरपि द्वासप्ततिर्द्वासप्ततिर्द्वे सहस्रेऽधिकसप्ततिश्च सहस्राणि । सहस्राणां द्वासप्ततिः प्रतिशाखानाडीसहस्राणि प्रति प्रतिनाडीशतसङ्ख्यया प्रधाननाडीनां सहस्राणि भवन्ति । आसु नाडीपु

आ॰ शीर्षण्यसप्तद्वाराद्विर्गतानां ज्ञानानामर्चिष्ट्वं वक्तुं तस्मादेता इति वाक्यं व्याचष्टे । तस्मादिति ॥ सप्तेति ॥ अग्नेरौदार्य्याद्वेतोः प्राप्तपरिपाकादन्नरसादन्ननाडीद्वारा देहं प्राप्तं नाडीस्थानं हृदयं प्राप्तादन्नरसादिति शेषः ॥ दर्शनद्वयं श्रवणद्वयं प्राणद्वयं-मुखस्यैकं रसनामिति समार्चिषः। जाठराग्निपाकजन्यान्नरसबलेन दर्शनादीनां प्रवृत्तेः। तेषु तदर्चिष्ट्वारोप इत्यर्थः ॥ ४ ॥ ५ ॥

व्यानस्य नाडीरूपं स्थानं दर्शयितुं नाडीनामुत्पत्तिस्थानं वक्तुमाह । हृदीत्यादिना ॥ हृदयस्य लिङ्गात्मस्थानत्वोक्तेः । प्रयोजनन्तु केचिद्योगिनो नाभिकन्दस्य नाड्युत्पत्तिस्थानत्वं वदन्ति । तन्निराकरणं तत्रैव लिङ्गात्मनः सञ्चरणार्थं नाड्यः । नाडीभिः प्रत्यवसृप्येत्यादि श्रुतेः । ततश्च लिङ्गात्मनो हृदयस्थानत्वे तत्सञ्चारमार्गभूतनाडीनामपि तदेवोत्पत्तिस्थानं

उ॰ शाखानाडीसहस्राणि भवन्त्यासु व्यानश्चरति ॥ ६ ॥
अथैकयोर्द्ध्व उदानः पुण्येन पुण्यं लोकं नयति

---

भा॰ व्यानो वायुश्चरति । व्यानो व्यापनात् । आदित्यादिव रश्मयो हृदयात्सर्व्वतो गामिनीभिर्नाडीभिः सर्व्वदेहं संव्याप्य व्यानो वर्त्तते । सन्धिस्कन्धमर्म्मदेशेषु विशेषेणप्राणापानवृत्त्योश्च मध्य उद्भूतवृत्तिर्वीर्य्यवत्कर्म्मकर्त्ता भवति ॥ ६ ॥ अथ या तु तत्रैकशतानां नाडीनां मध्ये ऊर्द्ध्वगा सुषम्ना नाडी तयैकयोर्द्ध्वः सन्नुदानो वायुरापादतलमस्तकवृत्तिः सञ्चरन् पुण्येन कर्म्मणा शास्त्रविहितेन पुण्यं लोकं देवादिस्थानलक्षणं नयति प्रापयति । पापेन तद्विपरीतेन पापं नरकं तिर्य्यग्योन्यादिलक्षणं । उभाभ्यां सम-

---

आ॰ अन्यथा प्रदेशान्तरस्थाननाडीनां तन्मार्गत्वायोगाद्वा सप्ततिसहस्राणि हृदयात्पुरीततमभिप्रतिष्ठतमिति श्रुतेश्चेति लिङ्गशरीरस्यात्मत्वमात्मोपाधित्वेन तद्योगादित्याह । आत्मसंयुक्त इति ॥ यस्माल्लिङ्गात्मा हृदि वर्त्तते तत्सञ्चारमार्गभूतनाडीनामपि तदेव स्थानमित्याह । अत्रेति ॥ नाडीनां शरीरविधारकत्वेन प्रसिद्धत्वं वक्तुमेतदिति विशेषणं। तस्य स्पष्टत्वाद्भाष्येन व्याख्यानं। एकैकस्या नाड्याः शाखानाड्यः शतं शतं भवतीत्याह । तासामिति ॥ ततश्च शतोत्तरमयुतं शाखानाड्य इत्यर्थः । शाखानाडीनां च प्रत्येकं द्व्यधिकसप्ततिसहस्राणि प्रतिशाखानाड्यः सन्तीत्याह । पुनरपीति ॥ सप्ततिरितिपदस्य सङ्ख्याप्रधानत्वे सहस्राणीत्यस्य तेन सामानाधिकरण्यायोगात् षष्ठ्यन्ततया व्याचष्टे। सहस्राणामिति ॥ प्रतिशाखेति ॥ प्रतिशाखाभ्यो निर्गतात्पशाखाः प्रतिशाखाः । द्वासप्ततिरित्यत्र वीप्सार्थमाह । प्रति प्रतीति ॥ प्रतिनाडीशतमित्यनन्तरमेकैकस्या इत्यनुषङ्गः । तथा च प्रतिनाडीशतमेकैकस्या नाड्याः प्रतिशाखानाडीनां

उ० पापेन पापमुभाभ्यामेव मनुष्यलोकं ॥ ७ ॥
आदित्यो ह वै बाह्यः प्राण उदयत्येष ह्येनं चाक्षुषं

भा० प्रधानाभ्यां पुण्यपापाभ्यामेव मनुष्यलोकं नयतीत्यनुवर्त्तते ॥ ७ ॥ आदित्यो ह वै प्रसिद्धो ह्यधिदैवतं बाह्यः प्राणः स एष उदयत्युद्गच्छति। एष ह्येनमाध्यात्मिकं चक्षुषि भवं चाक्षुषं प्राणं प्रकाशेनानुगृह्णानो रूपोपलब्धौ चक्षुष आलोकं कुर्व्वन्नित्यर्थः। तथा पृथिव्यामभिमानिनी या देवता प्रसिद्धा सैषा पुरुषस्यापानमपानवृत्तिमवष्टभ्याकृष्य वशीकृत्याध एवापकर्षणेनानुग्रहं कुर्व्वती वर्त्तत इत्यर्थः। अन्यथा हि शरीरं गुरुत्वात्पतेत्सावकाशे वोद्गच्छेत्।

आ० द्वासप्ततिसहस्राणि भवन्तीत्यर्थः। तथा मूलशाखाप्रतिशाखानाड्यो मिलित्वा द्वासप्तकोटयो द्वासप्ततिलक्षाणि षट्सहस्राणि शतद्वयमेका च भवतीति द्रष्टव्यं॥ एवं नाडीरुक्त्वा व्यानस्य तत्स्थानमाह। आस्विति॥ सूक्ष्मासु नाडीषु विद्यमानस्य व्यानस्य कथं व्यापकत्वमित्याशङ्क्य नाडीनां सर्व्वदेहव्याप्तेस्तत्स्थस्यापि व्यानस्य तद्द्वारा व्याप्तिरित्याह। आदित्यादिवेति॥ यथाऽऽदित्यादिनिर्गत्य रश्मयः सर्व्वतो गतास्तथा हृदयात्सर्व्वतो गामिन्या नाड्यस्ताभिरिति योज्यं॥ सामान्येन सर्व्वशरीरव्यापित्वेऽपि विशेषस्थानमाह। सन्धीति॥ शरीरेऽत्युच्छ्वासनिश्वासयोः प्राणापानवृत्त्योरभावे व्यानवृत्तिरुद्भवतीत्यर्थः। वीर्य्यवदिति अथ यः प्राणापानयोः सन्धिः स व्यान इत्युक्त्वा यानि वीर्य्यवन्ति कर्म्माणि बलवता पुरुषेण साध्यानि धनुरायमनादीनि तान्यप्राणन्ननपानन् करोतीति श्रुत्यन्तरोक्तेरित्यर्थः॥ ६॥ इदानीमुदानस्य स्थानं वदन् केनोत्क्रमत इत्यस्योत्तरमाह या त्विति॥ उभाभ्यां समप्रधानाभ्यामिति॥ अनेन पुण्याधिक्ये देवलोकं पापाधिक्ये नरकलोकं नयतीति पूर्व्वं व्याख्यातं

उ॰ प्राणमनुगृह्णानः । पृथिव्यां या देवता सैषा पुरुषस्यापानमवष्टभ्यान्तरा यदाकाशः स समानो

भा॰ यदेतदन्तरा मध्ये द्यावापृथिव्योर्य आकाशस्तत्स्थो वायुराकाश उच्यते। मञ्चस्थवत्। स समानः समानमनुगृह्णानो वर्त्तत इत्यर्थः। समानस्यान्तराऽऽकाशस्थत्वसामान्यात्। सामान्येन च यो बाह्यो वायुः स व्याप्तिसामान्याद्व्यानो व्यानमनुगृह्णानो वर्त्तत इत्यभिप्रायः ॥ ८ ॥ यद्बाह्यं ह वै प्रसिद्धं सामान्यं तेजस्तच्छरीरे उदानं वायुमनुगृह्णाति स्वेन प्रकाशेनेत्यभिप्रायः। यस्मात्तेजोभावो बाह्यतेजोऽनुगृहीत उत्क्रान्तिकर्त्ता तस्माद्यदा लौकिकः

आ॰ भवति ॥ ७ ॥ कथं बाह्यमभिधत्ते। कथमध्यात्ममित्यस्योत्तरमाह। आदित्य इति॥ या देवता प्रसिद्धेति अग्निदेवता पृथिव्येव यस्यायतनमग्निर्लोक इति श्रुतेरग्निसम्बद्धावगमादित्यर्थः। अवष्टभ्येत्यनन्तरमध्याहारेण वाक्यं पूरयति। अध एवापकर्षणेनेति वृत्त्यर्थं स्तम्भादेरूर्द्धमुखेन निखातस्य परितो विद्यमानरज्जुभिरध एवापकर्षणेन पतनाभाववदध एवापकर्षणेन शरीरस्य पतनाभावः सिद्ध्यतीत्यर्थः। अनुग्रहमिति शरीरधारणलक्षणमित्यर्थः। अन्यथेति पृथिवीदेवताया विधारणाकरणे गुरुत्वादपानेनाध आकर्षणाच्च सावकाशे भूम्यादिपतनप्रतिबन्धकाभावस्थले पतेदित्यर्थः॥ अन्तरा यदाकाश इति वाक्यं व्याचष्टे। यदेतदिति॥ यदिति क्लीवत्वं छान्दसमित्याह। य आकाश इति॥ मञ्चस्थवदिति मञ्चाः क्रोशन्तीत्यत्र मञ्चशब्देन मञ्चस्था यथा लक्ष्यन्ते तथाऽऽकाशशब्देन तत्स्थो वायुर्लक्ष्यत इत्यर्थः। समान इति॥ सामानाधिकरण्यमनुग्राह्यानुग्राहकयोरभेदोपचारादित्याह। समानमनुगृह्णान इति ॥ एवमुत्तरत्रापि अनुग्रहहेतुमाह। समानस्येति॥ शरीरान्तराकाशस्थत्वं

उ॰ वायुर्व्यानः ॥ ८ ॥ तेजो ह वै उदानस्तस्मादु-
पशान्ततेजाः । पुनर्भवमिन्द्रियैर्मनसि सम्पद्य-
मानैः ॥ ९ ॥ यच्चित्तस्तेनैष प्राणमायाति प्राण-

भा॰ पुरुष उपशान्ततेजा भवति । उपशान्तं स्वाभाविकं तेजो
यस्य सः । तदा तं क्षीणायुषं मुमूर्षुं विद्यात् । स पुनर्भवं
शरीरान्तरं प्रतिपद्यते । कथं । सहेन्द्रियैर्मनसि सम्पद्यमानैः
प्रविशद्भिर्वागादिभिः ॥ ९ ॥ मरणकाले यच्चित्तो भवति
तेनैष जीवः चित्तेन सङ्कल्पेनेन्द्रियैः सह प्राणं मुख्यप्राण-
वृत्तिमायाति । मरणकाले क्षीणेन्द्रियवृत्तिः सन्मुख्यया

आ॰ समानस्य द्यावापृथिव्यन्तराकाशस्थत्वं वाह्यवायोरिति अन्त-
राकाशस्थत्वं तयोस्तुल्यमित्यर्थः ॥ वायुर्व्यान इत्यत्र त्वन्तराका-
शस्थत्वविशेषरहितो वायुसामान्येन समुच्चीयत इति न पूर्व्वा-
भेद इत्याह । सामान्येनेति ॥ ८ ॥ तेजो ह वाव इति वाक्यं
व्याचष्टे । यद्वाह्यमिति ॥ पूर्व्वमादित्यात्मकं विशेषतेज उक्तं
अत्र तेजःसामान्यमुच्यत इति न पौनरुक्त्यमित्याह । सामान्यं
तेज इति ॥ एवमादित्यादिना रूपेण मुख्यप्राणस्य प्राणापान
समानोदानव्यानानुग्राहकत्वोक्त्या ऽध्यात्मं प्राणादिवृत्त्यनुग्राहकत्व-
मुक्तं । आदित्याग्न्याकाशसामान्यवायुतेजोरूपी सन् वाह्यमधिदै-
वमादित्यात्मकं धारयतीत्युक्तं । तद्रूपेणावस्थानमेव तद्धारणं
प्राणापानाद्यनुग्रहेण चक्षुराद्यनुग्रहोक्तेस्तद्द्वारा तद्वाह्याधिभू-
तविधारकत्वमुक्तं ॥ स प्राणस्तच्चक्षुः सोऽपानः सा वाक् स
व्यानस्तच्छ्रोत्रं स समानस्तन्मनः स उदानः स वायुरिति श्रुत्यन्तरे
चक्षुरादीनां प्राणाद्यात्मत्वोक्तेश्चक्षुराद्यनुग्राहकत्वोक्त्या चक्षुरा-
दिरूपाध्यात्मविधारकत्वस्योक्तमिति कथं वाह्यमभिधत्ते । कथ-
माध्यात्ममिति । अस्योत्तरमुक्तमिति द्रष्टव्यं ॥ तेजस उदानवा-
य्वनुग्राहकत्वं व्यतिरेकप्रदर्शनेन साधयति । यस्मादिति ॥ यस्मा-

उ॰ स्तेजसा युक्तः । सहात्मना यथा सङ्कल्पितं लोकं नयति ॥ १० ॥

---

भा॰ प्राणवृत्त्यैवावतिष्ठत इत्यर्थः । तदा हि वदन्ति ज्ञातय उच्छ्वसिति जीवतीति । स च प्राणस्तेजसोदानवृत्त्या युक्तः सन् सहात्मना स्वामिना भोक्त्रा स एवमुदानवृत्त्यैव युक्तः प्राणस्तं भोक्तारं पुण्यपापकर्मवशाद्यथासङ्कल्पितं यथाऽभिप्रेतं लोकं नयति प्रापयति ॥ १० ॥

---

ष्टा॰ त्तेजःस्वभाव उत्क्रान्तिकृदप्युदानवायुर्बाह्यतेजोऽनुगृहीतः सन्नेव शरीरे वर्त्तते तस्माज्जीवजीवनहेतुकर्म्मोपरमे वाह्यतेजोऽनुग्रहाभावेनोपशान्ततेजा मुमूर्षुर्भवतीत्यन्वयः ॥ स्वाभाविकमिति जाठराग्निकृतं हस्तादिना स्वशरीरस्पर्शे सत्युष्णत्वेनोपलभ्यमानं तेज इत्यर्थः ॥ भवत्युत्पद्यत इति भवः शरीरमित्यर्थः ॥ शरीरान्तरप्रतिपत्तिरात्मनोऽक्रियस्य न सम्भवतीति शङ्कते । कथमिति ॥ इन्द्रियोपाधिवशादित्याह । सहेति ॥ मनसि सम्पद्यमानैरिन्द्रियैः सह शरीरान्तरं प्रतिपद्यत इति पूर्व्वेणान्वयः । उक्तशरीरान्तरप्राप्तिमेवोत्क्रान्तिक्रमप्रदर्शनेन स्पष्टीकर्त्तुं यच्चित्त इत्यादि वाक्यं तदपेक्षिताध्याहारं कुर्व्वन् व्याचष्टे । मरणेति ॥ यच्चित्त इति यदेव तिर्य्यगादिशरीरं सम्यगिति चित्ते यस्य स यच्चित्त इत्यर्थः । प्राणं प्रत्यागमनं लोकव्यवहारेण प्रथयति । तदेति । तेजसा तेजोऽनुगृहीतयोदानवृत्त्येत्यर्थः । एवम्भूतो भोक्त्रोदानसंयुक्तः प्राणः कं नयतीत्यपेक्षायां तमेव भोक्तारं नयतीति वदन् वाक्यार्थमाह । स एवमिति ॥ एवकारस्य तमेवेत्यन्वयः । यथा सङ्कल्पितमिति कर्म्मज्ञानादिसाधनानुष्ठानदशायां सङ्कल्पितं मरणकाले वासनारूपेण पुनरभिव्यक्तं लोकं देवादिशरीरमित्यर्थः ॥ ९ ॥ १० ॥

उ॰ य एवंविद्वान् प्राणं वेद । न हास्य प्रजा हीयतेऽमृतो भवति तदेष श्लोकः ॥ ११ ॥ उत्पत्तिमायतिं स्थानं विभुत्वञ्चैव पञ्चधा । अध्यात्मञ्चैव प्राणस्य विज्ञायामृतमश्नुते विज्ञायामृतमश्नुत इति ॥ १२ ॥ इति तृतीयप्रश्नः ॥ ३ ॥

---

भा॰ यः कश्चिदेवंविद्वान् यथोक्तविशेषणैर्विशिष्टमुत्पत्त्यादिभिः प्राणं वेद जानाति तस्येदं फलमैहिकमामुष्मिकञ्चोच्यते । न हास्य नैवास्य विदुषः प्रजाः पुत्रपौत्रादिलक्षणा हीयते हीयन्ते छिद्यन्ते । पतिते च शरीरे प्राणसायुज्यतयाऽमृतोऽमरणधर्मा भवति तदेतस्मिन्नर्थे सङ्क्षेपाभिधायक एष श्लोको मन्त्रो भवति ॥ ११ ॥ उत्पत्तिपरमात्मनः प्राणस्यायतिमागमनं मनोकृतेन मनःकृतेन नास्मिञ्छरीरे

---

व्या॰ एवं प्राणस्वरूपं निर्द्धार्य्य तदुपासनं विधत्ते । यः कश्चिदिति ॥ उत्पत्त्यादिभिर्यथोक्तविशेषणैर्विशिष्ट आत्मनः प्राणो जायते मनः कृताभ्यां धर्म्माधर्म्माभ्यां शरीरं गृह्णाति । आत्मानञ्च पञ्चधा विभज्य पायूपस्थयोरपानं स्वस्वरूपं । प्राणं चक्षुःश्रोत्रयोः । नाभौ समानं । नाडीममृहे व्यानं । उदानञ्च सुषुम्णायां स्थापयति । उदानेनोत्क्रामन्ति वाह्यः प्राणापानसमानव्यानोदानानुग्राहकैरादित्यपृथिवीदेवताकाशवायुतेजोरूपैरधिदैवमादित्यादिकमादित्यादिकृतानुग्रहैरध्यात्मं चक्षुर्वाक्श्रोत्रमनस्त्वक्चक्षुरादिग्राह्यमधिभूतञ्च धारयति । स एवोदानवृत्त्या भोक्ता च युक्तो भोक्तारं लोकान्तरं नयति स एव च वरिष्ठः प्रजापतिरत्ताऽरे इत्येवं प्राणं वेद इत्यर्थः ॥ ऐहिकफलमुक्त्वाऽऽमुष्मिकफलमाह । पतित इति ॥ अमृतत्वं नात्र मुख्यं किन्तु प्राणसायुज्यमेवेत्याह ।

उ॰ अथ हैनं सौर्य्यायणी गार्ग्यः पप्रच्छ। भगव-

भा॰ स्थानं स्थितिञ्च पायूपस्थादिस्थानेषु विभुत्वं च स्वाम्यमेव समाडिव प्राणवृत्तिभेदानां पञ्चधा स्थापनं। वाह्यमादित्यादिरूपेणाध्यात्मञ्चैव चक्षुराद्याकारेणावस्थानं विज्ञायैवं प्राणममृतमश्नुत इति। विज्ञायामृतमश्नुत इति द्विर्वचनं प्रश्नार्थपरिसमाप्त्यर्थं ॥१२॥ इति तृतीयप्रश्नभाष्यं ॥३॥

अथ हैनं सौर्य्यायणी गार्ग्यः पप्रच्छ प्रश्नत्रयेणापरविद्यागोचरं सर्व्वं परिसमाप्य संसारं व्याकृतविषयं साध्यसाधनलक्षणमनित्यं। अथेदानीमसाधनलक्षणमप्राणममनोगोचरमतीन्द्रियमविषयं शिवं शान्तमविकृतमक्षरं

आ॰ प्रणेति॥ इदन्तु कामिनः निष्कामस्य तु चित्तैकाग्र्ये तच्छुद्धिद्वारा मुख्यमेवामृतत्वं भवतीति द्रष्टव्यं। आयतिमिति आयातिमित्यर्थः। ह्रस्वं छान्दसं॥ ११ ॥ १२ ॥ प्रश्नभाष्यविवरणे तृतीयः समाप्तः ॥ ३ ॥

एवं कर्म्मविद्यागतिश्रवणेन विरक्तस्य प्राणविद्यया चित्तैकाग्र्यं तच्छुद्धिमतोऽत एव साधनचतुष्टयवता मुख्याधिकारिणः परविद्यार्थं प्रश्नत्रयमारभ्यते। अथ हैनमिति॥ पूर्व्वं विद्ययैवामृतत्वोक्तेरुत्तरप्रश्नारम्भो व्यर्थ इत्यत आह। प्रश्नत्रयेणेति॥ संसारमित्यतो न तन्मुख्यममृतत्वमित्यर्थः॥ तस्य संसारत्वे व्याकृतत्वं हेतुमाह। व्याकृतविषयमिति॥ व्याकृताश्रयं तदन्तर्गतमित्यर्थः। साध्यसाधनलक्षणमिति साध्यसाधनसम्बन्धेन लक्ष्यतेऽभिव्यज्यते उत्पद्यत इति तथा। यद्वाऽपरब्रह्मणः प्राणस्य साध्यसाधनोभयात्मकत्वाद्वा तथा तस्मादनित्यमित्यतोऽपि संसारत्वमित्यर्थः॥ वक्ष्यमाणात्मा तु न तथेत्याह। असाध्येत्यादिना॥ अतीन्द्रियमविषयमिति इन्द्रियविषयत्वमतिक्रान्तमित्यव्याकृतमकार्य्यमित्यर्थः॥ तत्र हेतुः। अप्राणमिति॥ प्राणगोचरत्वेन तदात्म-

उ॰ नैतस्मिन् पुरुषे कानि स्वपन्ति कान्यस्मिन् जा-

भा॰ सत्यं परविद्यागम्यं पुरुषाख्यं सबाह्याभ्यान्तरमजं वक्तव्य-
मित्युत्तरं प्रश्नत्रयमारभ्यते। तत्र सुदीप्तादिवाग्नेर्यस्मा-
त्परादक्षरात्सर्व्वे भावा विस्फुलिङ्गा इव जायन्ते तत्रैवापि
यन्तीत्युक्तं। द्वितीये मुण्डके के ते सर्व्वभावा अक्षरादि-
भज्यन्ते। कथं वा विभक्ताः सन्तस्तत्रैवापि यन्ति। किंलक्षणं
वा तदक्षरमिति। एतद्विवक्षयाऽधुना प्रश्नानुद्भावयति।
भगवन्नेतस्मिन् पुरुषे शिरःपाण्यादिमति कानि करणानि
स्वपन्ति स्वापं कुर्व्वन्ति स्वव्यापारादुपरमन्ते। कानि

व्या॰ कर्मेन्द्रियागोचरत्वं मनोऽगोचरत्वेन ज्ञानेन्द्रियागोचरत्वमुक्तं।
सुखरूपतामाह। शिवमिति॥ निवृत्तानर्थत्वमाह। शान्तमिति।
तत्र भावविकाररहितत्वं हेतुमाह। अविकृतमिति॥ अने-
नोत्पत्तिपरिणामवृद्धयो निषिद्धाः। अक्षरमित्यपक्षयविनाशौ
निषिद्धौ। उत्पत्तिनिषेधेन तदनन्तरभाव्यस्तित्वं निषिद्धं। अत्र
सर्व्वत्र हेतुः। सत्यमिति। कालत्रयेऽप्येकरूपमित्यर्थः॥ तत्र अथ
परा यया तदक्षरमधिगम्यत इत्यादि वाक्यं मानमाह। परवि-
द्यागम्यमिति। दिव्यो ह्यमूर्त्तः पुरुष इति मन्त्रमप्याह। पुरुषाख्य-
मिति॥ कथं पुरुषशब्दोदितं पूर्णत्वं वाह्याभ्यन्तरवस्तुभेदादत
आह। सबाह्येति॥ स एव वाह्याभ्यन्तरात्मकस्तद्व्यतिरेकेण तदुभयं
नास्तीत्यर्थः। प्रश्नत्रयमिति॥ यद्यपि पञ्चमः प्रश्नोऽपरविद्या-
विषय एव प्रणवोपासनविषयत्वात्तथापि तस्य क्रममुक्तिफल-
त्वेन निर्विशेषात्ममेव सविशेषब्रह्मप्राप्तिद्वारा पर्य्यवसाना-
त्सोऽपि परविषय एवेति भावः। एवं सामान्येन प्रश्नत्र-
यस्यापि सम्बन्धमुक्त्वा चतुर्थप्रश्नस्य प्रातिस्विकसम्बन्धमाह।
तत्रेति॥ यस्मादित्यस्य किं वा तदक्षरमिति तच्छब्देनान्वयः।
उक्तमिति यथा प्रदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ति

उ० यति कतर एष देवः स्वप्नान् पश्यति कस्यैतत

भा० चास्मिन् जाग्रति जागरणमनिद्रावस्थाव्यापारं कुर्व्वन्ति। स्वव्यापारान् कुर्व्वन्तीत्यर्थः। कतरः कार्य्यकरणलक्षणानां य एष देवः स्वप्नान् पश्यति। स्वप्नो नाम जाग्रद्दर्शनान्निवृत्तस्य जाग्रद्वदन्तःशरीरे यद्दर्शनं। तत्किं कार्य्यलक्षणेन देवेन निर्व्वर्त्त्यते किं वा करणलक्षणेन केनचिदित्यभिप्रायः। उपरते च जाग्रत्स्वप्नव्यापारे यत्प्रसन्नं निरायासलक्षणमनाबाधं सुखं कस्यैतद्भवति। तस्मिन् काले जाग्रत्स्वप्नव्यापारादुपरताः सन्तः कस्मिन् उ सर्व्वे सम्यगेकीभूताः सम्प्रतिष्ठिताः। मधुनि-

आ० रूपाः तथाऽक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापि यन्तीति मन्त्रेणेत्यर्थः॥ एतद्विवक्षयेति॥ मन्त्रोक्तार्थविस्तरानुवादित्वादस्य ब्राह्मणस्येति भावः। अत्राक्षरस्वरूपस्यैव विवक्षितत्वात्तन्निर्णयार्थं कानि स्वपन्तीत्यादिप्रश्नः जागरितादिना धर्म्मविशेषनिर्द्धारणार्थः अन्यथा तेषामात्मधर्म्मत्वशङ्कायां तन्निर्व्विशेषत्वनिर्णयासिद्धेः। भावानां स्वरूपविभागादिविवक्षा तु ताः पुनरुदयतः प्रचरन्तीति दृष्टान्तबलाद्यत्रैकीभावः ततो विभागेन निर्गमनमित्यक्षरे एकीभूतानां पृथिव्यादिकार्य्यकारणानामक्षरादविभागप्रतीतेस्तावन्मात्रेण भाष्ये उक्तेति द्रष्टव्यं॥ तत्राद्यप्रश्नेन जागरितस्य धर्म्मी पृष्टः। स्वप्ने यस्य व्यापारोपरमे जागरितं नास्ति स तस्य धर्म्मी इति निश्चेतुं शक्यत्वात्। द्वितीयेनावस्थात्रयेऽपि शरीररक्षणं कस्य धर्म्म इति पृष्टं। जाग्रतोऽनुपरतव्यापारस्य प्राणस्य देहरक्षकत्वोपपत्तेः। तृतीयेन स्वप्नस्य धर्म्मी पृष्टः। चतुर्थेन सुषुप्तिधर्म्मी सुखमहमस्वाप्समिति सुप्तोत्थितस्य परामर्शे सुखस्य सुषुप्तिसम्बन्धावगमात्। पञ्चमप्रश्नेनावस्थात्रयविनिर्म्मुक्तमवस्थात्रयपर्य्यवसानभूमि-

उ॰ सुखं भवति कस्मिन्नु सर्वे सम्प्रतिष्ठिता भवन्तीति ॥ १ ॥

---

भा॰ रथवत्समुद्रं प्रविष्टनद्यादिवच्च विवेकानर्हाः प्रतिष्ठिता भवन्ति सङ्गताः सम्प्रतिष्ठा भवन्तीत्यर्थः । ननु न्यस्तदात्रादिकरणवत्स्वव्यापारादुपरतानि पृथक् पृथगेव स्वात्मन्यवतिष्ठन्त इत्येतद्युक्तं कुतः प्राप्तिः सुषुप्तपुरुषाणां करणानां कस्मिंश्चिदेकीभावगमनाशङ्कायाः । प्रष्टुः युक्तैवन्त्वाशङ्का । यतः संहतानि करणानि स्वाम्यर्थानि परतन्त्राणि च जाग्रद्विषये तस्मात्स्वापेऽपि संहतानां पार-

---

व्या॰ रूपं तुरीयमक्षरं पृष्टमिति विवेकः । कार्य्येति कार्य्यं शरीरं प्राणो वा । करणानि मनआदीनि ॥ पदार्थानुक्त्वा वाक्यार्थं पिण्डीकृत्याह । तत्किमिति ॥ तत्पदं पूर्व्वापरयोः सम्बध्यते । प्रसन्नमिति विषयसम्पर्कात्कालुष्यराहित्यं । निरायासेन विज्ञेया भावमात्रेण । लक्ष्यतेऽभिव्यज्यते । निर्वातस्थापितदीपालोकवदनावाधं विनाशरहितं सत्यमात्मस्वरूपमित्यर्थः । एतदिति सुषुप्ते प्रकाशमानं सुखमहमस्वाप्समिति परामर्शमूलभूतमित्यर्थः ॥ तस्मिन् काले इति यद्यपि पञ्चमेन प्रश्नेन तुरीयं पृच्छ्यते न सुषुप्तिस्तथापि संसारदशायां । सर्व्वोपाधिरहिततुरीयावस्थाभावे कुत एव तस्य प्रदर्शनीयत्वात्तत्सुषुप्तज्ञाने सत्यपि इतरोपाधिराहित्येन तत्रैव सर्व्वोपाधिविवेककरणेन तुरीयप्रदर्शनस्य सुकरत्वात्तस्मिन् काले तुरीयप्रदर्शनार्थं सर्व्वसम्प्रतिष्ठितोक्तिः । सम्यगेकीभूता इति तदात्मभावप्राप्त्या विलयं गता इत्यर्थः । मधुनिरसवदिति यथा नानापुष्परसा मधुन्येकीभवन्ति तद्वदित्यर्थः । विवेकाभावमात्रेण दृष्टान्तावुक्तौ ॥ तत्र सर्व्वात्मना लयाभावादित्याह । विवेकानर्हा इति । पूर्व्वं विवेकानर्हाः सन्तः पश्चात्सम्प्रतिष्ठिता इत्यर्थः । न चानेनापि

भा० तस्येव कस्मिंश्चि सङ्गतिर्न्याय्येति। तस्मादाशङ्कानुरूप एव प्रश्नोऽयं। अत्र तु कार्य्यकारणसङ्घातो यस्मिंश्च प्रलीनः सुषुप्तप्रलयकालयोस्तद्विशेषं बुभुत्सोः स को नु स्यादिति कस्मिन् सर्व्वे सम्प्रतिष्ठिता भवन्तीति ॥ १ ॥

---

आ० प्रश्नेनाविद्यावासनाभिरविविक्तः सोऽपुप्त एव एष्ट इति शङ्क्यं। परे आत्मन्यक्षरे प्रतिष्ठन्त इति वक्ष्यमाणत्वात्सुप्ते चाज्ञान एव सम्प्रतिष्ठानादेष हि द्रष्टेत्याद्यज्ञानप्रतिबिम्बितस्य भोक्तुरपि प्रतिष्ठाया अभिधास्यमानत्वादक्षायमित्यज्ञानाभावोक्तेश्च तुरीयमेव पृष्टमिति भावः। ननु कार्य्यकारणव्यतिरिक्ते सम्प्रतिष्ठानाधिकरणे सामान्येन कस्मिंश्चिदवगते कस्मिन् सम्प्रतिष्ठिता इति विशेषप्रश्नो घटते। न च तस्यावगतिरस्ति। न च सम्प्रतिष्ठानस्य साधिकरणत्वेन सामान्येनाधिकरणावगतिरस्तीति वाच्यं। तत्तदुपादानानामेवाचेतनानां तदधिकरणत्वेन तदतिरिक्तस्य चेतनस्यासिद्धिरिति शङ्कते। नन्विति॥ दात्रं नाम सस्यादिलवनार्थः शस्त्रविशेषः। स्वात्मनीति सोपादान इत्यर्थः। सुप्तपुरुषाणां करणानामिति सुप्तपुरुषाणां यानि करणानि तेषामित्यर्थः। एष हि द्रष्टेत्यादिना पुरुषाणामप्येकीभावस्य वक्ष्यमाणत्वाद्वा पुरुषाणामित्युक्तं अस्मिन् पक्षे करणानाञ्चेति चकारो द्रष्टव्यः। प्रष्टुः शङ्कायाः कुतः प्राप्तिरित्यन्वयः॥ संहतानां परार्थेन व्याप्तत्वात्संहतत्वेन हेतुना परस्मिंश्चेतने सामान्येनावगते प्रष्टुर्विशेषप्रश्नो युक्त इत्याह। युक्तैव त्विति॥ स्वाम्यर्थानि सङ्घाताभिमान्यर्थानीत्यर्थः। आशङ्कानुरूप इति मनसि विद्यमानाशङ्कानुरूपो वाचिकः प्रश्न इत्यर्थः॥ अत्र सम्प्रतिष्ठानविशिष्ट आत्मा न पृष्टः किन्तु तदुपलक्षितः केवल आत्मा पृष्ट इति वाक्यतात्पर्य्यमाह। अत्र त्विति॥ भवतीत्यनन्तरं पृष्टमिति शेषः। यत्त्वया पृष्टं तच्छृण्वित्यन्वयः। तस्यैवार्कस्य ता मरीचय इत्यर्थः ॥ १ ॥

उ० तस्मै स होवाच । यथा गार्ग्य मरीचयोऽर्कस्यास्तं गच्छतः सर्वा एतस्मिंस्तेजोमण्डल एकीभवन्ति । ताः पुनः पुनरुदयतः प्रचरन्त्येवं ह वै तत्सर्वं परे देवे मनस्येकीभवति । तेन

---

भा० तस्मै स होवाचाचार्यः । शृणु हे गार्ग्य यत्त्वया पृष्टं । यथा मरीचयो रश्मयोऽर्कस्यादित्यस्यास्तमदर्शनं गच्छतः सर्वा अशेषत एतस्मिंस्तेजोमण्डले तेजोराशिरूपे एकीभवन्ति विवेकानर्हत्वमविशेषतां गच्छन्ति ता मरीचयस्तस्यैवाऽर्कस्य पुनः पुनरुदयत उद्गच्छतः प्रचरन्ति विकीर्य्यन्ते । यथाऽयं दृष्टान्तः । एवं ह वै तत्सर्व्वं विषयेन्द्रियादिजातं परे प्रकृष्टे देवे द्योतनवति मनसि चक्षुरादिदेवानां मनस्तन्त्रत्वात् परो देवो मनस्तस्मिन् स्वप्नकाले एकीभवति मण्डले मरीचिवदविशेषतां गच्छति । जिजागरिषोश्च रश्मिवन्मण्डलान्मनस एव प्रचरन्ति स्वव्यापाराय प्रतिष्ठन्ते । यस्मात्स्वप्नकाले श्रोत्रादीनि शब्दाद्युपलब्धिकरणानि मनस्येकीभूतानीव करणव्यापारादुपरतानि तेन तस्मात्तर्हि तस्मिन् स्वापकाले एष देव-

---

व्या० स्वप्नेऽपि चक्षुरादिव्यापारोपलब्धेरेकीभावोऽसिद्ध इत्याशङ्क्य वासनामयेन्द्रियव्यापारोपलब्धावपि बाह्यशब्दादिश्रवणादिव्यापाराभावेन तं साधयितुं तेनेति वाक्यं व्याचष्टे। यस्मादिति ॥ श्रोत्रादीनामेकीभावो नाम स्वस्वव्यापारं विहाय मनस्तन्त्रतयाऽवस्थानमात्रं न तु मुख्यमेकत्वं तेषां मनःप्रकृतिकत्वाभावेनाप्रकृतौ तदनुपपत्तेरित्यभिप्रेत्य इवकारः प्रयुक्तः ।

उ० तर्ह्येष पुरुषो न शृणोति न पश्यति न जिघ्रति न रसयते न स्पृशते नाभिवदते नादत्ते नानन्दयते न विसृजते नेयायते स्वपितीत्याचक्षते ॥ २ ॥ प्राणाग्नय एवैतस्मिन् पुरे जाग्रति । गार्हपत्यो

भा० दत्तादिलक्षणः पुरुषो न शृणोति न पश्यति न जिघ्रति न रसयते न स्पृशते नाभिवदते नादत्ते नानन्दयते न विसृजते नेयायते स्वपितीत्याचक्षते लौकिकाः ॥ २ ॥ सुप्तवत्सु श्रोत्रादिषु करणेष्वेतस्मिन् पुरे नवद्वारे देहे प्राणाग्नयः प्राणादिपञ्चवायवोऽग्नय इवाग्नयो जाग्रति । अग्निसामान्यं ह्याह । गार्हपत्यो ह वा एषोऽपानः । कथमित्याह । यस्माद्गार्हपत्यादग्नेरग्निहोत्रकाले इतरोऽग्निराहवनीयः प्रणीयते प्रणयनात्प्रणीयत अस्मादिति प्रणयनो गार्हपत्योऽग्निर्यथा तथा सुप्तस्यानावृत्तेः

व्या० नेयायत इति इणो गत्यर्थस्य यङ् तस्य रूपमेतत् न गच्छतीत्यर्थः ॥ २ ॥ कानि स्वपन्तीत्यस्य सविषयाणि वाह्यकरणानि स्वपन्त्युपरमन्तेऽतस्तेषामेव जागरणधर्म्म इत्युत्तरमुक्त्वा कानि जाग्रतीत्यस्योत्तरमाह । सुप्तवत्स्विति ॥ प्राणानामग्नित्वं गौणमित्याह । अग्नय इवेति ॥ अपानस्य गार्हपत्यत्वे यद्गार्हपत्यात्प्रणीयते प्रणयनादितीदं वाक्यं व्यवहितमपि हेतुत्वेन योजयति । यस्मादिति ॥ प्रणयनादितिपदं गार्हपत्यविशेषणमित्याह । प्रणयनो गार्हपत्य इति । तत्सादृश्यमाहवनीयः प्राण इति वाक्यसादृश्याभिधानपर्व्वं व्याचष्टे । तथेति ॥ गार्हपत्यत्वेनोक्तेऽपानेऽन्तर्गच्छति सति वहिर्गच्छन् प्राण आहवनीय इत्यर्थः ॥ परित्यक्तं व्यानोऽन्वाहार्य्यपचन इति वाक्यमिदानीं व्याचष्टे । व्यानस्त्विति ॥ छान्दोग्ये गायत्रीविद्यायां तस्य वा एतस्य

उ० ह वा एषोऽपानो व्यानोऽन्वाहार्य्यपचनो यद्गार्हपत्यात्प्रणीयते प्रणयनादाहवनीयः प्राणः ॥ ३ ॥
यदुच्छ्वासनिश्वासावेतावाहुती समं नयतीति

भा० प्रणीयत इव प्राणो मुखनासिकाभ्यां सञ्चरत्याहवनीयस्थानीयः प्राणः। व्यानस्तु हृदयाद्दक्षिणसुषिरद्वारेण निर्गमाद्दक्षिणदिक्सम्बन्धादन्वाहार्य्यपचनो दक्षिणाग्निः ॥ ३ ॥

अत्र च होताग्निहोत्रस्य यद्यस्मादुच्छ्वासनिश्वासावग्निहोत्राहुती इव नित्यं द्वित्वसामान्यादेव तु एताहुती समं साम्येन शरीरस्थितिभावाय नयति यो वायुरग्निस्थानीयोऽपि होता चाहुत्योर्नेतृत्वात्। कोऽसौ स समानः। अतश्च विदुषः स्वापोऽप्यग्निहोत्रहवनमेव। तस्मा-

व्या० हृदयस्य पञ्च देवसुषिरा इत्युपक्रम्याथ योऽस्य दक्षिणः सुषिरः स व्यानस्तच्छ्रोत्रमित्यनेन व्यानस्य दक्षिणसुषिरतो निर्गमनमुक्तमित्यन्वाहार्य्यपचनसादृश्यं दक्षिणदिक्सम्बन्धित्वं व्यानस्येति व्यानोऽन्वाहार्य्यपचन इत्यर्थः ॥ ३ ॥

अत्र चेति ॥ अग्निहोत्रस्य होता होमस्य कर्त्ता ऋत्विगुच्यते उत्तरवाक्येनेति शेषः। अत्रोच्छ्वासनिश्वासयोराहुतित्वस्य पूर्व्वमसिद्धत्वेन सिद्धवन्निर्द्देशायोगात् स समान इति तच्छब्दानन्वयाच्च वाक्यत्रयं कृत्वाऽन्वयत्रयेण योजयति। यद्यस्मादिति ॥ उच्छ्वासनिश्वासावित्यनन्तरमाहुतीति पदं भाष्येऽध्याहृत्यतावुच्छ्वासनिश्वासौ आहुती। आहवनीयाधिकरणाग्निहोत्राहुतीवद्द्वित्वसाम्यादेवेत्येकोऽन्वयः। अनन्तरं भाष्ये तच्छब्दस्यार्थश्रुतिगत इतिशब्दस्तस्मादित्यर्थः। यस्मादेतावाहुती यस्माच्चैता समं नयति शरीरस्थितिभावाय साम्येन नयति प्रवर्त्तयति यो वायुर्यथाऽग्निहोत्रे होमकर्त्ता आहुतिद्वयमाहवनीयं प्रति

उ० स समानः । मनो ह वाव यजमान इष्टफलमेवो-

भा० दिदानानाकर्म्मीत्येवं मन्तव्य इत्यभिप्रायः । सर्व्वदा सर्व्वाणि भूतानि विचिन्वन्नपि स्वपत इति हि वाजसनेयके । अत्र हि जाग्रत्सु प्राणाग्निषूपहृत्य वाह्यकरणानि विषयांश्चाग्निहोत्रफलमिव स्वर्गं ब्रह्म जिगमिषुर्मनो ह वाव यजमानो जागर्ति यजमानवत्कार्य्यकरणेषु प्राधान्येन संव्यवहारात्स्वर्गमिव ब्रह्म प्रतिप्रस्थितत्वाद्यजमानो मनः कल्प्यते । इष्टफलं यागफलमेवोदानो वायुः । उदाननिमित्तत्वादिष्टफलप्राप्तेः । कथं स उदानो मनआख्यं यजमानं स्वप्नवृत्तिरूपादपि प्रच्याव्याहरहः सुषुप्तिकाले स्वर्गमिव ब्रह्माक्षरं गमयति । अतो यागफलस्थानीय उदानः ॥ ४ ॥

---

टी० समं नयति प्रापयति तद्वत् तस्मादाहुत्योर्नेतृत्वात्स वायुर्होतेति यच्छब्द होतृशब्दाध्याहारेण द्वितीयोऽन्वयः । कोऽसौ वायुरिति तद्विशेषप्रश्ने स होता वायुः स समान इति तृतीयान्वय इति विभागः ॥ ननु प्राणाग्नय इत्यत्र सर्व्वेषां प्राणानामग्नित्वोक्तेः कथमिह समानस्य होतृत्वमुच्यत इत्याशङ्क्याह । अग्निस्थानीयोऽपीति । अग्नित्वेनोक्तोऽपीति भावः । होता चेति चकारोऽवधारणे होतैवेत्यर्थः । आहुतिनेतृत्वाद्धोतृत्वे स्थितेऽग्नित्वोक्तिः । छत्रिन्यायेनाऽन्यनग्निसमुदाये लाक्षणिकोऽर्थः । अवस्थात्रयवर्त्तिनामुच्छ्वासनिश्वासप्राणानामाग्निहोत्राऽवयवसम्पादनस्य नोपासनं प्रयोजनं । निर्विशेषात्मप्रकरणत्वात्तद्विध्यदर्शनाच्च किन्त्विन्द्रियाण्युपरमन्ते प्राणा जाग्रतीति ॥ एवं त्वंपदार्थशोधनरूपस्य ज्ञानस्य स्तुतिरेवेत्याह । अतश्चेति ॥ सर्व्वदेति वाजसनेयके हि वाक्यतः प्राणश्चिन्नश्चक्षुश्चेत इत्यादिना सर्व्वप्राणव्यापारेषु प्रत्येकमग्निचितत्वदृष्टिं विधायैवं दृष्टिमतः सर्व्वाणि भूतान्यस्य स्वापकालेऽपि चयनं कुर्व्वन्तीति सद्दृष्टिस्तुता तद्वदिहापीत्यर्थः ॥ अत्र हीति ॥ अत्र मनो

उ॰ दानः स एनं यजमानमहरहर्ब्रह्म गमयति ॥ ४ ॥

भा॰ एवं विदुषः श्रोत्राद्युपरमकालादारभ्य यावत्सुप्तोत्थितो भवति तावत्सर्व्वयागफलानुभवेनाविदुषामिवानर्थायेति विद्वत्ता स्तूयते। न हि विदुष एव श्रोत्रादीनि स्वपन्ति प्राणाग्नयो वा जाग्रति। जाग्रत्स्वप्नयोर्मनः स्वातन्त्र्यमनुभवदहरहः सुषुप्तं वा प्रतिपद्यते। समानं हि सर्व्वप्राणिनां पर्य्यायेण जाग्रत्स्वप्नसुषुप्तिगमनं अतो विद्वत्तास्तुतिरेवेयमुपपद्यते। यत्पृष्टं कतर एष देवः स्वप्नान् पश्य-

व्या॰ यजमानः कल्पित इति व्यवहितान्वयः। तत्कल्पनायां हेतुद्वयमाह। यजमानवदिति॥ हेतुद्वयं साधयति। जाग्रत्स्विति॥ अत्र स्वप्नकाले विषयान् करणानि चोपसंहृत्य मनो जागर्त्ति। प्राधान्येन स्वव्यापारं कुर्व्वन्वर्त्तते। अग्निहोत्रफलं स्वर्गं जिगमिषुर्यजमान इव सुषुप्तिकाले स्वर्गरूपब्रह्म जिगमिषु च मन इत्यन्वयः। भाष्ये यजमान इत्यनन्तरमिवशब्दो द्रष्टव्यः। एवावशब्देन तत्प्रसिद्धमित्युक्तं। इष्टेति उदाननिमित्तकमरणानन्तरं यागादिफलप्राप्तेः। तस्य तन्निमित्तत्वात्कारणे कार्य्योपचारादुदान इष्टफलत्वेन कल्प्यत इत्यर्थः। न केवलं मरणद्वारा यागफलप्रापकत्वमुदानस्य किन्त्वेतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुतेः सर्व्वयागफलानामपि ब्रह्मात्मकत्वाद्ब्रह्मप्रापकत्वादपि॥ अहरहरिष्टफलप्रापकत्वमुदानस्येति प्रश्नपूर्व्वकमाह। कथमिति॥ स्वर्गमिवेति स्वर्गमेवेत्यर्थः। सर्व्वयागफलात्मकस्वरूपमेव ब्रह्माहरहर्गमयतीत्यर्थः। यद्यप्यहरहर्ब्रह्मप्राप्तिर्न यागसाध्या यागरहितानामपि तत्प्राप्तेः तथापि ब्रह्मण एव सर्व्वयागफलत्वेन तत्प्रापकस्योदानस्येष्टफलप्रापकत्वमस्तीति भावः। न चोदानस्य कथं तत्प्रापकत्वमिति शङ्क्यं। तस्य सुषुम्णानाडीचारित्वेन समस्तनाडीः प्रवेशयंस्तं द्रुतं ब्रह्म प्रापयतीत्युपपत्तेः॥ ४॥ ननु गार्ह्यपत्यो वा एषो ऽपान इति श्रुतिमारभ्य मनो ह वाव यजमान इति श्रुत्यन्तेन

उ० अत्रैष देवः स्वप्ने महिमानमनुभवति । यद्दृष्टं

---

भा० तीति तदाह । अत्रोपरतेषु श्रोत्रादिषु देहरक्षायै जाग्रत्सु प्राणादिवायुषु प्राक्सुषुप्तिप्रतिपत्तेः एतस्मिन्नन्तराले एष देवोऽर्करश्मिवत्स्वात्मनि संहृतश्रोत्रादिकरणः स्वप्ने महिमानं विभूतिं विषयविषयिलक्षणमनेकात्मभावगमनमनुभवति प्रतिपद्यते । ननु महिमानुभवने करणं मनोऽनुभवितुस्तत्कथं स्वातन्त्र्येणानुभवतीत्युच्यते स्वतन्त्रोऽपि क्षेत्रज्ञः । नैष दोषः । क्षेत्रज्ञस्य स्वातन्त्र्यस्य मनउपाधिकृतत्वान्न हि क्षेत्रज्ञः परमार्थतः स्वतः स्वपिति जागर्त्ति वा । मन उपाधिकृतमेव तस्य जागरणं स्वप्नश्चेत्युक्तं वाजसनेयके सधीः स्वप्नो भूत्वा ध्यायतीवेत्यादि । तस्मान्मनसो विभूत्यनुभवे स्वातन्त्र्यवचनं न्याय्यमेव । मनउपाधिसहितत्वे स्वप्नकाले क्षेत्रज्ञस्य स्वयं ज्योतिष्ट्वं बाधत इति केचित् । तत्र श्रुत्यर्थापरिज्ञानकृता भ्रान्ति-

---

व्या० प्रश्नेन विद्वान् कर्म्मी न भवतीति स्तूयत इत्युक्तमस्तु । एवं तत्राग्निहोत्रादिकर्म्मप्रतीतेरुदानस्य यागफलस्थानीयत्वात्किन्तु न तत्फलत्वं तत्र कर्म्माप्रतीतेरत आह । एवं विदुष इति ॥ विद्वत्कीति श्रोत्रादीनि स्वप्ने उपरमन्ते प्राणा एव जाग्रतीत्येवंरूपा विद्येत्यर्थः । अस्याश्च विद्याया जागरणं श्रोत्रादिबाह्येन्द्रियधर्म्मः । शरीररक्षणं प्राणधर्म्मो नात्मधर्म्म इत्येव त्वंपदार्थविवेकरूपत्वात् स्तोतव्यत्वोपपत्तिः । अत एव प्राणजागरणस्याविद्वत्साधारणत्वात्कथं विद्वत्स्तुतिरित्यपि शङ्का निरस्ता तस्यैवम्भूतविवेकाभावादिति ॥ ननु विद्याप्रकरणत्वादस्य विदुषः श्रोत्राद्युपरमादिकं सर्व्वं भवतीति विधीयतां किं स्तुत्येत्याशङ्क्य विद्वदविद्वत्साधारणेन

उ० दृष्टमनुपश्यति श्रुतं श्रुतमेवार्थमनुशृणोति देश-

भा० त्वेषां । यस्मात् स्वयंज्योतिष्ट्वादिव्यवहारोऽयामोक्षान्तः सर्व्वोऽविद्याविषय एव मनआद्युपाधिजनितः । यत्र वा अन्यदिव स्यात्तत्रान्योऽन्यत्पश्येन्मात्रं संसर्गस्तस्य भवति। यत्र त्वस्य सर्व्वमात्मैवाभूत्तत्केन कं पश्येदित्यादिश्रुतिभ्यः । अतो मन्दब्रह्मविदामेवेयमाशङ्का न त्वेकात्मविदां । नन्वेवं सत्यत्रायं पुरुषः स्वयं ज्योतिरिति विशेषणमनर्थकमित्युच्यते। अल्पमिदमुच्यते य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेत इति। अन्तर्हृदयपरिच्छेदे सुतरां स्वयं ज्योतिष्ट्वं बाध्यत सत्य-मेवमयं दोषो यद्यपि स्यात्स्वप्ने केवलतया स्वयं ज्योति-

व्या० स्वयमेव भवतो न विधेयत्वमित्याह। न हीति ॥ विद्वत्तास्तुतिरेवेति॥ श्रोत्रादिकं परे देवे मनस्येकीभवति प्राणाग्नय जाग्रतीत्यत्र पदार्थविवेकरूपं ज्ञानं विवक्षितं तज्ज्ञानं गार्हपत्यो वा एषोऽपान इत्यादिना स्तूयते उक्तप्रकारेणेत्यर्थः ॥ तृतीयप्रश्नोत्तरत्वेन कतर एष इत्यादि सर्व्वः पश्यतीत्यन्तं व्याचष्टे। यदिति ॥ कतर इति ॥ अत्रेति श्रोतं पदं गृहीत्वा व्याचष्टे । उपरतेष्वित्यादिना अन्तराले इत्यन्तेन ॥ अनेकेति विषयिविषयाद्यनेकभावगमनमित्यर्थः ॥ इदञ्च महत्त्वव्याख्यानं स्वप्नदृष्टेर्विम्य स्वातन्त्र्यवक्तव्ये देवशब्दितमनसस्तद्दृक्तिः ॥ स्वप्नो मनोधर्म्मो नात्मधर्म्मो। आत्मनि तु तदारोपमात्रं लोकस्येति ख्यापनार्थेति शङ्कापरिहाराभ्यामाह । नन्विति ॥ मनउपाधिकृतमिति बाह्येन्द्रियप्रयुक्तं मनउपाधिकृतं जागरणं केवलमनउपाधिकृतः स्वप्न इत्यर्थः ॥ स्वप्नस्य धीशब्दवाच्यमनःपरिणामत्वात् । स्वप्नो भूत्वेति श्रुतौ सामानाधिकरण्यनिर्द्देश इति द्रष्टव्यं । नन्वियं श्रुतिर्विभूत्यनुभवेन स्वातन्त्र्यं वक्तुं न शक्नोति श्रुत्यन्तरविरोधापत्तेः। अतोऽत्र देवशब्देन क्षेत्रज्ञ एवोच्यते । तस्यैव

उ॰ दिगन्तरैश्च प्रत्यनुभूतं पुनः पुनः प्रत्यनुभवति

---

भा॰ ष्ट्वेनाङ्गुन्तावदपनीतं भारस्येति चेन्न। तत्रापि पुरीतति-
नाडीषु शेत इति श्रुतेः पुरीततिनाडीसम्बन्धात्तत्रापि
पुरुषस्य स्वयंज्योतिष्ट्वेनाङ्गभारापनयाभिप्रायो मृषैव
कथं तर्ह्यत्रायं पुरुषः स्वयंज्योतिरिति। अन्यशाखात्वा-
दनपेक्षा सा श्रुतिरिति चेन्न। अर्थैकत्वस्येष्टत्वादेको ह्यात्मा
सर्व्ववेदान्तानामर्थो विजिज्ञापयिषितो बुभुत्सितश्च। तस्मा-
द्युक्ता स्वप्ने आत्मनः स्वयंज्योतिष्ट्वोपपत्तिर्वक्तुं। श्रुते-
र्यथार्थतत्त्वप्रकाशकत्वात्। एवं तर्हि शृणु श्रुत्यर्थं हित्वा

---

आ॰ स्वतः स्वातन्त्र्यमिति शङ्कते। मन इति॥ स्वयं ज्योतिष्ट्वमिति
स्वयंज्योतिष्ट्वबोधकश्रुतिरित्यर्थः। अन्यथा द्वितीयसत्त्वेऽपि दीपा-
दीनामिव वास्तवस्य तस्य वाधाभावादित्यत्र किं मनसः सत्त्वे
ज्योतिरन्तरस्य मनसो विद्यमानत्वादात्मनः स्वयं ज्योतिष्ट्वबोधनं
न शक्यमिति श्रुतेः कार्य्यस्य बोधनस्य वाधोऽभिप्रेतः उत
तद्बोधनरूपकार्य्यसिद्ध्यर्थं मनसोऽभावोऽपि विवक्षितः श्रुतौ
ततश्च तत्सत्त्वे श्रुत्यर्थवाध इति वा। नाद्यः। मनसि सत्यपि एवं
सर्व्वीति वक्ष्यमाणरीत्या मनसो दृश्यत्वेन ज्योतिष्ट्वायोगेनात्मन एव
स्वयं ज्योतिष्ट्वस्य बोधयितुं शक्यत्वादित्याह। तन्नेति। न द्वितीयः।
तदानीं मनसोऽभावस्तु श्रुत्यर्थ एव न भवतीत्याह। श्रुत्यर्थेति॥
आत्मनो ज्योतिष्ट्वाबोधनात्मकव्यवहारस्य प्रकाश्यादिसापेक्षत्वा-
त्तस्मिन् सत्येवैतद्बोधसाधने मनआदौ च सत्येव तद्बोधयितुं
शक्यते। नान्यथेति॥ मनआद्यभावो न श्रुतौ विवक्षितः तथा-
सति तद्बोधनाशक्तेरित्याह। यस्मादिति॥ तत्र मानमाह।
यत्र वेति॥ द्वितीयाभावे व्यवहारो नास्तीत्यत्रापि मानमाह।
मात्रेति॥ दृश्यमात्राशब्दार्थः असंसर्ग इतिच्छेदः। दृश्यासंसर्गे
सुषुप्तौ विशेषविज्ञानाभावोक्त्या द्वितीयाभावे व्यवहारो नास्ती-

उ॰ दृष्टञ्चादृष्टञ्च श्रुतञ्चाश्रुतञ्चानुभूतञ्चाननुभूतञ्च सर्व्वं पश्यति सर्व्वः पश्यति ॥ ५ ॥

---

भा॰ सर्व्वमभिमानं न त्वभिमानेन वर्षशतेनापि श्रुत्यर्थो ज्ञातुं शक्यते सर्व्वैः पण्डितम्मन्यैः। यथा हृदयाकाशे पुरीतति-नाडीषु च स्वपतस्तत्सम्बन्धाभावात् ततो विविच्य दर्शयितुं शक्यत इति। आत्मनः स्वयं ज्योतिष्ट्वं न बाध्यते। एवं मनस्यविद्याकामकर्म्मनिमित्तोद्भूतवासनावति कर्म्मनिमित्ता वासनाऽविद्ययाऽन्यद्वस्त्वन्तरमिव पश्यतः सर्व्वकार्य्यकर-

---

व्या॰ त्यर्थः ॥ अतो न द्वितीयः कल्पः सम्भवतीत्याह । अत इति॥ ननु यदि स्वयंज्योतिष्ट्वबोधनार्थं मनआद्यभावो नापेक्षितः जागरितेऽपि तर्हि तद्बोधनसम्भवादत्रेति स्वप्नवाचिविशेषणमनर्थकमिति शङ्कते । नन्विति ॥ किं विशेषणबलान्मनसोऽभावः सिषाधयिषितः उत विशेषणस्य गतिमात्रं पृच्छ्यते। नाद्यः । मनसोऽभावाङ्गीकारेऽप्यन्तर्हृदयाकाशस्य तत्कृतपरिच्छेदस्य च श्रुतिसिद्धत्वेन त्वन्मतेऽपि तत्र स्वयंज्योतिष्ट्वबोधनासम्भवात् ॥ विशेषणानर्थक्यं तुल्यमित्याह। अत्रोच्यत इति। परिच्छेदोऽधिकोऽत्रोच्यत इति तैरयं प्रयोगः। स्वयं ज्योतिष्ट्वमिति तद्बोधनमित्यर्थः॥ यथाश्रुते वास्तवस्य तस्य बाधस्यानाशङ्क्यत्वादिति । यद्यपि स्वप्नेऽन्तर्हृदयाकाशसत्त्वात्सम्यक् स्वयं ज्योतिष्ट्वं बोधयितुं न शक्यमिति दोषस्तुल्यस्तथापि स्वप्ने मनसोऽभावेन तद्बोधनप्रतिबन्धकस्याभावादद्दूरविप्रकर्षेण स्वयंज्योतिष्ट्वं स्वप्ने बोधयितुं शक्यमिति तद्विशेषणमर्थवदिति शङ्कते। सत्यमिति॥ स्यादित्यनन्तरं तथापीति शेषः। केवलतयेति मनसोऽभावेनेत्यर्थः । भारस्येति प्रतिबन्धकस्येत्यर्थः। शेषबोधनं तु सुषुप्ते भविष्यतीत्यभिप्रायः। एवं तर्हि सुषुप्ते सर्व्वस्याप्यभावमाश्रित्य सम्यग्बोधनं विवक्षणीयं न च तत्सम्भवति। तत्रापि

भा० एभ्यः प्रविविक्तस्य द्रष्टुर्वासनाभ्यो दृश्यरूपाभ्योऽन्यत्वेन स्वयंज्योतिष्ट्वं सुदर्पितेनापि तार्किकेण न वारयितुं शक्यते। तस्मात्साधूक्तं मनसि प्रलीनेषु करणेष्वप्रलीने च मनसि मनोमयः स्वप्नान् पश्यतीति। कथं महिमानमनुभवतीत्युच्यते। यन्मित्रं पुत्रादि वा पूर्व्वं दृष्टं तद्वासनावासितः पुत्रमित्रादिवासनासमुद्भूतं पुत्रमित्रमिव चाविद्यया

---

आ० बद्धप्रतिबन्धकस्य विद्यमानत्वादित्याह। न तत्रापीति। सुषुप्तेऽपीत्यर्थः। तत्रापीति स्वप्नेऽपीत्यर्थः। सुषुप्ते चेत्सर्व्वभारापनयः स्यात्तदा स्वप्नेऽर्द्धभारापनयाभिप्रायो वर्णयितुं शक्यते न च तदस्ति। अतोऽत्रेतिविशेषणं तदप्यनर्थकमकथनावसरे कैव श्रुतिगतविशेषणस्य गतिर्न वक्तव्या॥ प्रकृतानुपयोगादिति सिद्धान्तैकदेशी कश्चिन्मन्दः शङ्कते। अन्येति॥ सर्व्ववेदान्तप्रत्ययन्यायेनाथर्वश्रुतिविरोधेनैकवाक्यतया श्रुत्यर्थस्य वर्णनीयत्वात्तदविरोधोऽपि वक्तव्य इति पूर्व्ववाद्याह। नार्थैकत्वस्येति॥ तर्हि का एव श्रुतिरर्थाभावात्यज्यतामत आह। श्रुतेर्यथार्थेति॥ स्वाध्यायोऽध्येतव्य इत्यध्ययनविधेरर्थावबोधफलत्वात्तुल्यस्य साम्प्रदायिकमिति न्यायाच्चाक्षरमात्रस्याप्यानर्थक्यायोगादित्यर्थः॥ एवमेकदेशिनि दूषिते सिद्धान्त्युत्तरमाह। एवं तर्हीति॥ तर्ह्याद्वावेव मुख्यश्रुत्यर्थ उच्यतां किं पूर्व्वोक्तरीत्या पक्षान्तराशङ्कातन्निराकरणाभ्यामित्याशङ्क्य पाण्डित्याभिमानवतो यथावदर्थबोधेऽनधिकारात्तस्य तदभिमानावतारचिकीर्षया तदीयनानापक्षा निराकृता इति वक्तुं सर्व्वमभिमानं निरस्येत्याद्युक्तं। स्वयंज्योतिष्ट्वाश्रुतेरनतिशङ्क्यत्वाद्बलात्सप्रादौ हृदयाकाशादिसत्त्वेऽपि तत्सम्बन्धप्रतीत्यभावाद्विद्यमानस्याप्यविद्यमानतुल्यत्वेनात्मनः केवलत्वात्प्रकाशदर्शनाच्च स्वयंज्योतिष्ट्वमिति बोधनीयं मनसोऽभावादिनाप्येवं मनसि सत्यपि तस्य वासनामयगजतुरगादिविषयतया परिणामाद्दृश्यत्वाच्च दृष्टुः। ततो भेदेन विवेकतः श्रुत्या स्वप्रकाशत्वं बोध्यत इत्याह। यथेत्यादिना॥ मनसीति

भा० पश्यतीव मन्यते तथा श्रुतमर्थं तद्वासनयानुश्रृण्वन्नीव देशदिगन्तरैश्च देशान्तरैर्दिगन्तरैश्च प्रत्यनुभूतं पुनः पुनस्तत्प्रत्यनुभवतो वाऽविद्यया तथा दृष्टञ्चास्मिन् जन्मन्यदृष्टञ्च जन्मान्तरदृष्टमित्यर्थः। अत्यन्तादृष्टे वासनानुपपत्तेः। एवं श्रुतञ्चाश्रुतञ्चानुभूतञ्चास्मिन् जन्मनि केवलेन मनसाऽननुभूतञ्च मनसैव जन्मान्तरेऽनुभूतमि-

---

या० सत्यपीति शेषः। ननु मनश्चेदविद्यादिनिमित्तवशाद्गजतुरगादिरूपेणाभिव्यक्तवासनावत्तर्हि जाग्रतीव तस्याश्चेदन्तयैव प्रतीतिः स्यान्नेदन्तयाऽत आह। कर्म्मनिमित्तेति॥ तथा प्रतीतिं विना स्वप्ने भोगासिद्धेः स्वप्नभोगप्रदकर्म्मनिमित्तवशाज्जाग्रति गजादीनामिदन्तयाऽनुभवेन तद्वासनानामपि तथैवानुभवार्हत्वेन तद्वासनारूपाविद्यावशाच्च वासनाश्रयस्य मनस इदन्तयैव वस्त्वन्तरवत्प्रतीतिरित्यर्थः। इदञ्च विशेषणं मनसो विषयत्वेन विषयित्वासम्भवाद्विषयिण आत्मन एव स्वप्रकाशरूपत्वमिति वक्तुं जाग्रत्यादित्यादिकार्य्यं ज्योतिषां चक्षुरादिकरणज्योतिषाञ्च सत्त्वेन तत्संकीर्णत्वेनात्मनः स्वयंज्योतिष्ट्वं दुर्बोधं। स्वप्ने तु तदभावात्सुबोधमिति वक्तुं सर्व्वकार्य्येत्यादिविशेषणं। स्वप्ने च्चादित्यादिकार्य्यकरणज्योतिषां भासमानत्वेऽपि तेषां वासनामात्रत्वाद्दृश्यत्वाच्च विषयप्रकाशनासामर्थ्यमिति वक्तुं वासनाभ्य इति विशेषणं। एतैश्च विशेषणैः स्वप्न एव एवम्भूतस्वयंज्योतिष्ट्वस्य बाधयितुं शक्यत्वादन्यत्रासम्भवादत्रायमिति श्रुतौ स्वप्नविशेषणग्रहणमर्थवदित्युक्तमिति द्रष्टव्यं। स्वयंज्योतिष्ट्वमिति सिद्धमिति शेषः। अतः काण्वश्रुतौ स्वप्ने मनसोऽभावविवक्षाकारणाभावेन तद्विरोधाभावादत्र देवशब्देन परदेवे मनस्यैकीभवतीत्युक्तं॥ मन एवोच्यत इत्युक्तमुपसंहरति। तस्मादिति॥ नन्विन्द्रियाणामुपरतत्वाद्विषयसम्बन्धाभावात् कथं मनसो महिमानुभव इति शङ्कते। कथमिति॥ पूर्व्वं ज्ञातस्यैव स्वप्ने भानात्तस्य वासनामात्रत्वमतो नेन्द्रियापेक्षेत्याह। उच्यत इति॥

उ॰ स यदा तेजसाऽभिभूतो भवति । अत्रैष देवः स्वप्नान्न पश्यत्यथ तदैतस्मिञ्छरीरे एतत्सुखं

---

भा॰ त्यर्थः । सच्च परमार्थोदकादि । असच्च मरीच्युदकादि । किं बहुना उक्तं सर्व्वं पश्यति सर्व्वः पश्यति सर्व्वमनोवासनोपाधिः सन् एवं सर्व्वकरणात्मा मनोदेवः स्वप्नान् पश्यति ॥ ५ ॥

स यदा मनोरूपो देवो यस्मिन् काले सौरेण पित्ताख्येन तेजसा नाडीशये सर्व्वतोऽभिभूतो भवति तिरस्कृतवासनाद्वारो भवति तदा सह करणैर्मनसो रश्मयो हृद्युपसंहृता भवन्ति । तदा मनोदामनो दावाग्नि-

---

आ॰ दिति यन्मित्रं पुत्रं वा पूर्व्वं दृष्टवान् तदेव दृष्टं पुत्रमित्रादिविषयवासनासमुद्भूतं मित्रं पुत्रं वाऽविद्यया पश्यतीति। दृष्टवानित्यादिपदाध्याहारेण वाक्यं योज्यं। अन्यथा पुत्रमिति द्वितीयाया यच्छब्दस्य चानन्वयः स्यादिति। चक्षुरभावे तद्दर्शनायोगान्मन्यत इत्युक्तं। तथेति॥ अत्रापि योऽर्थः श्रुतस्तमेव श्रुतमर्थमित्यध्याहारेणैव श्रुतिर्योज्या। देशो नदीतीरादिः। दिक्प्राच्यादिरिति भेदः। प्रत्यनुभूतं प्रतिवारमनुभूतं पुनः पुनरनेकदिनेष्वनेकस्वप्नेष्वनुभवतीत्यर्थः॥ जन्मान्तरदृष्टमिति व्याख्याने हेतुमाह। अत्यन्तेति॥ अनुभूतस्येत्यस्य प्रत्ययस्य प्रत्यनुभूतमित्यनेन पुनरुक्तिमाशङ्क्याह। केवलेनेति॥ पूर्व्वमिन्द्रियद्वारकानुभव उक्त इत्यसौ पुनरुक्त इत्यर्थः॥ सर्व्वदर्शने हेतुमाह। सर्व्व इति॥ ५॥

कस्यैतत्सुखं भवतीत्यस्योत्तरं तदपेक्षितं वदन्नाह। स यदेति। पित्ताख्येति इदमुपलक्षणं चिद्रूपेण ब्रह्मणा चेत्यपि द्रष्टव्यं। तन्मनः प्राणमेवोपश्रयत इति श्रुत्यन्तरेण प्राणशब्दिते ब्रह्मणि तस्य लयाभिधानात्तिरस्कृतेति वासनाभिव्यक्तौ द्वारं स्वप्नभोगप्रदं कर्म्म

उ० भवति ॥ ६ ॥ स यथा सोम्य वयांसि वासो वृक्षं
सम्प्रतिष्ठन्ते । एवं ह वै तत्सर्वं पर आत्मनि
सम्प्रतिष्ठते ॥ ७ ॥ पृथिवी च पृथिवीमात्रा
चापश्चापोमात्रा च तेजश्च तेजोमात्रा च वायुश्च
वायुमात्रा चाकाशश्चाकाशमात्रा च चक्षुश्च द्रष्टव्यञ्च

---

भा० यदविशेषविज्ञानरूपेण कृत्स्नं शरीरं व्याप्यावतिष्ठते तदा
सुषुप्तो भवति । अथैतस्मिन् काले एष मनआख्यो देवः
स्वप्नान्न पश्यति दर्शनद्वारस्य निरुद्धत्वात्तेजसा । अथ तदैत-
स्मिञ्छरीरे एतत्सुखं भवति यद्विज्ञानं निराबाधमविशे-
षेण शरीरव्यापकं प्रसन्नं भवतीत्यर्थः ॥ ६ ॥ एतस्मिन्
कालेऽविद्याकामकर्म्मनिबन्धनानि कार्य्यकरणानि शा-
न्तानि भवन्ति । तेषु शान्तेष्वात्मस्वरूपमुपाधिभिरन्यथा
विभाव्यमानमद्वयमेकं शिवं शान्तं भवतीत्येतामेवावस्थां
पृथिव्याद्यविद्याकृतमात्रानुप्रवेशेन दर्शयितुं दृष्टान्तमाह ।
स दृष्टान्तो यथा येन प्रकारेण सोम्य प्रियदर्शन वयांसि
पक्षिणो वासार्थं वृक्षं सम्प्रतिष्ठन्ते गच्छन्ति एवं यथा

---

व्या० यत्तत्तिरस्कृतं तच्चोपरतं भवति तेजःशब्दितं ब्रह्मचैतन्यसम्बन्धा-
दित्यरश्मय इति वासनेत्यर्थः । अविशेषविज्ञानेति सामान्यचैत-
न्यरूपेणेत्यर्थः । चेतनाशब्दितसामान्यवृत्तिरूपेण वाऽनेन सुषुप्त-
मुक्तं इत्याह । तदेति ॥ नन्वथैतत्सुखं भवतीत्ययुक्तं जन्यसुखस्य
तदानीमसम्भवात्स्वरूपसुखस्य पूर्व्वमपि समत्वेन तदा भवती-
त्यनुपपत्तेरित्याशङ्क्य स्वरूपसुखमेव विशेषविज्ञानरूपविक्षेपा-
भावे निर्व्वातस्थदीपप्रभावत्सम्यक्प्रकाशते तदपेक्षमेव तद्वचन-

उ॰ श्रोत्रञ्च श्रोतव्यञ्च घ्राणञ्च घ्रातव्यञ्च रसश्च रसयितव्यञ्च त्वक् च स्पर्शयितव्यञ्च वाक् च वक्तव्यञ्च हस्तौ चादातव्यञ्चोपस्थश्चानन्दयितव्यञ्च पायुश्च विसर्जयितव्यञ्च पादौ च गन्तव्यञ्च मनश्च मन्तव्यञ्च बुद्धिश्च बोद्धव्यञ्चाहङ्कारश्चाहङ्कर्त्तव्यञ्च चित्तञ्च

---

भा॰ दृष्टान्तो ह वै तद्वक्ष्यमाणं सर्व्वं परे आत्मन्यक्षरे सम्प्रतिष्ठते ॥ ७ ॥ किन्तत्सर्व्वं। पृथिवी च पृथिवीमात्रा च। आपश्च आपोमात्रा च। तेजश्च तेजोमात्रा च। वायुश्च वायुमात्रा च। आकाशश्चाकाशमात्रा च। स्थूलानि सूक्ष्माणि च भूतानीत्यर्थः। तथा चक्षुरिन्द्रियं द्रष्टव्यञ्च। श्रोत्रञ्च श्रोतव्यञ्च। घ्राणञ्च घ्रातव्यञ्च। रसञ्च रसयितव्यञ्च। त्वक् च स्पर्शयितव्यञ्च। वाक् च वक्तव्यञ्च। हस्तौ चादातव्यञ्च। उपस्थश्चानन्दयितव्यञ्च। पायुश्च विसर्जयितव्यञ्च। पादौ च गन्तव्यञ्च। बुद्धीन्द्रियाणि कर्म्मेन्द्रियाणि तदर्थाश्चोक्ताः। मनश्च पूर्व्वोक्तं। मन्तव्यञ्च तद्विषयः। बुद्धिश्च

---

आ॰ मित्याह। यद्विज्ञानमिति ॥ विज्ञानरूपं स्वरूपसुखमित्यर्थः ॥ ६ ॥ अनेनानन्दमयकोशशब्दितमनभिव्यक्तं मनआदिवासनावज्ज्ञानं सुषुप्तिधर्म्मीत्युक्तं ॥ पञ्चमप्रश्नस्योत्तरं तुरीयस्वरूपं विवेकसौकर्य्यादिविद्यात्रैवोच्यत इत्याह। एतस्मिन्निति ॥ पूर्व्वमन्यथा विभाव्यमानमित्यर्थः। मात्रानुप्रवेशेनेति मात्राणां विवेकताऽक्षरेऽनुप्रवेशेनेत्यर्थः ॥ ७ ॥ आपोमात्रा इत्यत्र विभक्त्यलोपश्छान्दसः। स्थूलानि चेति पञ्चीकृतानि चेत्यर्थः। ततश्च पञ्चीकरणमेतच्छ्रुतिसिद्धमित्युक्तमन्यथा आकाशमात्रयोः एथ

उ० चेतयितव्यञ्च तेजश्च विद्योतयितव्यञ्च प्राणश्च विधारयितव्यञ्च ॥ ८ ॥

एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्त्ता विज्ञानात्मा पुरुषः । स परे

---

भा० निश्चयात्मिका । बोद्धव्यञ्च तद्विषयः । अहङ्कारश्चाभिमानलक्षणमन्तःकरणमहङ्कर्त्तव्यञ्च तद्विषयः । चित्तञ्च चेतनावदन्तःकरणं । चेतयितव्यञ्च तद्विषयः । तेजश्च त्वगिन्द्रियव्यतिरेकेण प्रकाशविशिष्टा या त्वक्तया निर्भास्यो विषयो विद्योतयितव्यं । प्राणश्च सूत्रं यदाचक्षते तेन विधारयितव्यं सङ्ग्रथनीयं सर्व्वं कार्य्यकारणजातं परार्थेन संहतं नामरूपात्मकमेतावदेव ॥ ८ ॥

अतःपरं यदात्मरूपं जगत्कर्तृ सूर्य्यकादिवज्जलोकृत्वकर्तृत्वेनेहानुप्रविष्टं । एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्त्ता विज्ञानात्मा पुरुषो विज्ञानं

---

आ० गुरुत्वनुपपत्तेरिति ॥ यद्यपि मन्तव्यादयो मनआदिचतुष्टयविषया अपि द्रष्टव्यादिविषया एव न पृथक् तथापि मन्तव्यादिरूपेण पृथगिति पृथङ्निर्द्दिष्टा इति द्रष्टव्यं । प्रकाशविशिष्टा या त्वगिति त्वगाश्रयं चर्म्म तत्प्रकाशनिर्भास्यश्च तदेवेत्यर्थः । पृथिवी चेत्यादिना विधारयितव्यञ्चेत्यन्तेनात्मव्यतिरिक्तं तदुपाधिभूतं सर्व्वञ्चोक्तमित्याह । सर्व्वं ह्येति ॥ ८ ॥

एष हि द्रष्टेत्यादिनापहितस्वरूपमुच्यत इत्याह । अतःपरमिति ॥ द्रष्टृत्वपाधिकृतमपि द्रष्टृत्वादिकमुपाधिव्यतिरिक्तेऽनुपहिते आत्मन्यारोपितं स्फटिके लौहित्यवदस्तीत्युपाधिभिन्नोऽप्यात्मा द्रष्टेत्यादिनोक्तः । विज्ञानात्मेत्यत्र द्रष्टृत्वादाविव कर्तृ-

उ॰ ऽक्षरे आत्मनि सम्प्रतिष्ठते ॥ ९ ॥ परमेवाक्षरं प्रतिपद्यते स यो ह वै तदच्छायमशरीरमलोहितं शुभ्रमक्षरं वेदयते यस्तु सोम्य । स सर्व्वज्ञः सर्व्वो भवति तदेष श्लोकः ॥ १० ॥ विज्ञानात्मा सह

---

भा॰ विज्ञायतेऽनेनेति करणभूतं बुद्ध्यादि इदन्तु विजानातीति विज्ञानं कर्तृकारकरूपं तदात्मा तत्स्वभावो विज्ञातृस्वभाव इत्यर्थः । पुरुषः कार्य्यकरणसङ्घातोक्तोपाधिपूर्णत्वात्पुरुषः । स च जलसूर्य्यकादिप्रतिबिम्बस्य सूर्य्यादिप्रवेशवज्जलाद्याधारशेषे परेऽक्षरे आत्मनि सम्प्रतिष्ठते ॥ ९ ॥ तदेकत्वविदः फलमाह । परमेवाक्षरं वक्ष्यमाणविशेषणं प्रतिपद्यत इत्येतदुच्यते । स यो ह वैतत्सर्व्वैषणाविनिर्म्मुक्तोऽच्छायं तमोवर्जितं । अशरीरं नाम-

---

आ॰ वाचकशब्दोऽभावादिज्ञानं यज्ञं तनुत इत्यादाविव बुद्धेरभिधाने पौनरुक्त्यमाशङ्क्याह । विज्ञानमिति ॥ करणभूतमिति विज्ञानमय इत्यादावित्यर्थः ॥ एष हीति हिशब्दस्य शब्दार्थकः स च सम्प्रतिष्ठत इति क्रियानुकर्षणार्थं इति वदन् द्रष्टुरात्मनः पृथिव्यादिवत्स्वरूपेणाक्षरे लयो न सम्भवतीत्याशङ्क्योपाधिलये उपहितरूपाभावमेवास्य लय इत्याह । स चेति ॥ ९ ॥ एवं जाग्रदादीनामन्यधर्म्मत्वोक्त्या शोधिततुर्य्यात्मानुवादेन तस्याक्षरैक्याभिधानपुरःसरं तद्‌ज्ञानस्य फलमुच्यत उत्तरवाक्येनेत्याह । तदेकत्वेति ॥ वक्ष्यमाणलक्षणमक्षरं प्रतिपद्यते इत्येवं रूपं फलमाहेत्यन्वयः । उत्तरवाक्यमिति शेषः । उक्तमर्थं श्रुत्यक्षरारूढमाह । एतदुच्यत इति ॥ स इत्यस्यार्थमाह । सर्व्वेति ॥ अत्राधिकारिणो दुर्लभत्वं स यो ह वा इत्यनेनोक्तं । स यः कश्चिदेवापूर्व्ववदच्छायादिविशेषणमक्षरं वेदयत इत्येकं वाक्यं समापनीयं ।

उ॰ देवैश्च सर्व्वैः प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र।
तदक्षरं वेदयते यस्तु सोम्य स सर्व्वज्ञः सर्व्वमेवा-
विवेशेति ॥ ११ ॥ इति चतुर्थप्रश्नः समाप्तः ॥ ४ ॥

---

भा॰ रूपसर्व्वोपाधिशरीरवर्जितं। अलोहितं लोहितादिवत्सर्व्व-
गुणवर्जितं। यत एवमतः शुभ्रं। सर्व्वविशेषणरहितत्वादक्-
षरं। सत्यं पुरुषाख्यं। अप्राणममनोगोचरं। शिवं शान्तं स-
वाह्याभ्यन्तरमजं वेदयते विजानाति। यस्तु सर्व्वत्यागी सोम्य
स सर्व्वज्ञो न तेनाविदितं किञ्चित्सम्भवति। पूर्व्वमविद्यया
ऽसर्व्वज्ञ आसीत्पुनर्विद्ययाऽविद्यापनये सर्व्वो भवति तदा
तस्मिन्नर्थे एष श्लोको मन्त्रो भवति ॥ १० ॥ उक्तार्थस-
ङ्ग्राहको विज्ञानात्मा सह देवैश्चाग्न्यादिभिः प्राणश्चक्षुरा-
दयो भूतानि पृथिव्यादीनि सम्प्रतिष्ठन्ति प्रविशन्ति। यत्र

---

आ॰ यस्तु वेदयते स सर्व्वज्ञ इति वाक्यान्तरं कार्य्यमन्यथा यच्छब्दस्व-
पानन्वयादाद्यवाक्येऽच्छायादिविशेषणत्रयेण कारणसूक्ष्मस्थूलश-
रीरत्रयनिराकरणेनावस्थात्रयनिराकरणेनावस्थात्रयराहित्यम-
नूद्यते। लोहितादिगुणवर्जितमित्यनेन तद्गुणकस्थूलशरीरव-
र्जितमिति प्रतीतेः शुभ्रमित्यनेन तमेव तुरीयमनूद्य तस्याक्ष-
रसामान्याधिकरण्येनैक्यमुक्तमिति विवेकः। अत्राक्षरमि-
त्यनेनाक्षरं पुरुषं वेद सत्यं सवाह्याभ्यन्तरो ह्यजोऽप्राणो
ह्यमनाः शुभ्र इति मन्त्रोक्तानि सर्व्वाणि विशेषणान्यात्मोपलक्ष-
णान्यात्मोपलक्षणार्थं सङ्गृहीतानीत्याह। सत्यमित्यादिना ॥
यस्तु सर्व्वत्यागीत्यत्रापि वाक्ये वेदयत इत्यस्यानुषङ्गः। अत्र
सर्व्वज्ञ इत्यनेन कस्मिन्नु भगवो विज्ञाते सर्व्वमिदं विज्ञातं
भवतीति प्रतिज्ञातं सर्व्वविज्ञानमुक्तं। सर्व्वात्मत्वस्य ज्ञानजन्य-
त्वेऽनित्यत्वं स्यादत आह। पूर्व्वमिति ॥ एवं चारोपमिदमित्याद्यारा

उ० अथ हैनं शैब्यः सत्यकामः पप्रच्छ । स यो ह

---

भा० यस्मिन्नक्षरे तदक्षरं वेदयते यस्तु सोम्य प्रियदर्शनः स सर्व्वज्ञः सर्व्वमेवाविवेश आविशतीत्यर्थः ॥ ११ ॥ प्रश्नोपनिषद्भाष्ये चतुर्थप्रश्नः समाप्तः ॥ ४ ॥

अथ हैनं शैब्यः सत्यकामः पप्रच्छ । अथेदानीं परापरब्रह्मप्राप्तिसाधनत्वेनोङ्कारस्योपासनविधित्सया प्रश्न आरभ्यते । स यः कश्चिद्ध वै भगवन्मनुष्येषु मनुष्याणां मध्ये तदद्भुतमिव प्रायणान्तं मरणान्तं यावज्जीवमित्येतदोङ्कारमभिध्यायीत आभिमुख्येन चिन्तयेत् । बाह्यविषयेभ्य उपसंहृतकरणः समाहितचित्तो भक्त्यावेशित-

---

आ० ऽभूततद्भावो विवक्षित इत्याह । सर्व्वो भवतीति ॥ अग्न्यादिभिरिति । ततश्च चक्षुश्च इत्यत्रत्वेयचापि चक्षुरादिभिर्देवा अप्युपलक्षिता इति व्याख्यातं ॥ १० ॥ ११ ॥ इति चतुर्थप्रश्नोपनिषद्भाष्यटीका समाप्ता ॥ ४ ॥

एवं चतुर्थप्रश्नोक्तोत्तमाधिकारिणः पदार्थशोधनपूर्व्वकवाक्यार्थज्ञानेनाक्षरप्राप्तिमुक्त्वाऽत्रानधिकारिणो मन्दवैराग्यवत ओमित्येवं ध्यायत आत्मानं प्रणवो धनुरित्यादिमन्त्रसूचितब्रह्मलोकप्राप्तिद्वारा क्रमेणाक्षरप्राप्त्यर्थमोङ्कारोपासनं वक्तुं पञ्चमप्रश्नमवतारयति। अथ हैनमिति ॥ इदानीमिति गार्ग्यप्रश्ननिर्णयानन्तरमित्यर्थः । परेत्यपरब्रह्मलोकप्राप्तिक्रमेण परब्रह्मलोकप्राप्तिसाधनत्वेनेत्यर्थः । तदद्भुतमिवेति तदिति क्रियाविशेषणं तादृशमभिध्यानमिति तेन विशेषणेनाद्भुतत्वं दुष्करत्वं भातीत्यर्थः ॥ अभिध्यानेन तत्पूर्व्वकालीने प्रत्याहारधारणे सूचित इत्याह । बाह्येति ॥ भक्त्याऽऽदरेणोपचारेणवाऽऽवेशित आरोपितो ब्रह्मभावो यस्मिन्नोङ्कारे तस्मिन् समाहितचित्त इत्यन्वयः। अनेन धारणोक्ताऽऽगमशब्दार्थमाह । आत्मेति ॥

उ० वै तद्भगवन्मनुष्येषु प्रायणान्तमोङ्कारमभिध्या-
यीत । कतमं वाव स तेन लोकं जयतीति ॥ १ ॥
तस्मै स होवाच । एतद्वै सत्यकाम परञ्चा-

---

भा० ब्रह्मभावे ॐकारे आत्मप्रत्ययसन्तानाविच्छेदो भिन्न-
जातीयप्रत्ययान्तराखिलीकृतो निर्वातस्थदीपशिखासम-
मोऽभिध्यानशब्दार्थः । सत्यब्रह्मचर्य्याहिंसाऽपरिग्रहत्यागस-
न्न्यासशौचसन्तोषामायावित्वाद्यनेकयमनियमानुगृहीतः स
एवं यावज्जीवव्रतधारणः । कतमं वाव अनेके हि ज्ञान-
कर्म्मभिर्जेतव्या लोकास्तिष्ठन्ति तेषु तेनौङ्काराभिध्यानेन
कतमं स लोकं जयतीति ॥ १ ॥

एवं पृष्टवते तस्मै स होवाच पिप्पलादः । एतद्वै सत्य-
काम । एतद्ब्रह्म वै परञ्चापरञ्च ब्रह्म परं सत्यमक्षरं पुरु-
षाख्यमपरञ्च प्राणाख्यंप्रथमजं यत्तदोङ्कार एवोङ्कारा-

---

आ० सन्तानाविच्छेद इत्यविच्छिन्नसन्तान इत्यर्थः । प्रत्ययान्तरेण विजा-
तीयप्रत्ययेनाखिलीकृतोऽनन्तरितश्चित्तस्यात्मविषयस्यैव सत एक-
देशविक्षेपं वारयति । निर्व्वातेति ॥ ध्यानेनैव यमादिसाधन-
जातमपि सूचितमित्याह । सत्येति ॥ कतममिति डतमचो
ऽर्थं बहुषु निर्द्धारणं दर्शयति । अनेके हीति । ॐकाराभि-
ध्यानत्वाद्दहराद्युपासनवदपरप्राप्तिसाधनमेवोत परप्राप्तिसाधन-
मपीति प्रष्टुरभिप्रायः ॥ १ ॥

तदभिप्रायज्ञः पिप्पलादोऽपरालम्बनतया ध्यानस्येदपरप्राप्ति-
मात्रसाधनं परालम्बनत्वेन च क्रमेण परप्राप्तिसाधनमित्युत्तर-
माह । एतद्वा इति । एतच्छब्दयोर्नपुंसकयोरोङ्कारविशेषणा-
त्वायोगाद्ब्रह्मविशेषणत्वमाह । एतद्ब्रह्मेति ॥ किन्तद्ब्रह्मेत्यत आह ।

उ॰ परञ्च ब्रह्म यदोङ्कारस्तस्माद्विद्वानेतेनैवायतने-

भा॰ त्मकमोङ्कारप्रतीकत्वात्। परं हि ब्रह्मशब्दाद्युपलक्षणानर्हं सर्व्वधर्म्मविशेषवर्जितमतो न शक्यमतीन्द्रियगोचरत्वात्केवलेन मनसाऽवगाहितुमोङ्कारे तु विष्ण्वादिप्रतिमास्थानीये भक्त्यावेशितब्रह्मभावे ध्यायिनां तत्प्रसीदतीत्यवगम्यते शास्त्रप्रामाण्यात्। तथाऽपरञ्च ब्रह्म। तस्मात्परञ्चापरञ्च ब्रह्म यदोङ्कार इत्युपचर्य्यते। तस्मादेवं विद्वानेतेनैवात्म-

व्या॰ परञ्चेति॥ यदेतत्परञ्चापरं ब्रह्मास्ति तदुभयमोङ्कार इति वाक्यान्वय इत्यर्थः। न चैवं ब्रह्मोद्देशेनोङ्कारत्वविधाने ब्रह्मण्योङ्कारदृष्टिः प्रसज्यतेति शङ्क्यं। ब्रह्मदृष्टेरुत्कर्षादितिन्यायेन लोकेषु सामोपासीतेत्यादाविव निकृष्टे ओङ्कारे एव ब्रह्मदृष्टिः सिद्ध्यतीति भावः। तयोर्भेदात्कथमैक्यमित्याशङ्क्योपचारादित्याह। ॐकारप्रतीकत्वादिति॥ अनेन सामानाधिकरण्येनोङ्कारस्य प्रतीकत्वमुपदिश्यत इति भावः। ननु किं प्रतीकोपदेशेन साक्षादेव ब्रह्माभिधीयतामत आह। परं हीति॥ शब्दादीति शब्दादिभिः साक्षाद्बोधनानर्हमित्यर्थः। आदिशब्देनानुमानादि गृह्यते॥ प्रवृत्तिनिमित्तस्य धर्म्मस्य लिङ्गत्वाभावादिति तत्र हेतुमाह। सर्व्वेति॥ न शक्यमित्यवगाहितुमित्यन्वयः। तर्हीन्द्रियैर्मनसा वा तद्ग्राह्योऽस्त्वित्यत आह। अतीन्द्रियेति॥ मनसेन्द्रियैर्वेत्यपि द्रष्टव्यं तर्हि तथाविधस्योङ्कारेऽप्यावेशासम्भवात्किञ्चिद्विशेषमारोप्यावेशो वक्तव्यः। अत एव सूर्य्यान्तर्गतत्वं विशेषं वक्ष्यति॥ ॐकारतादात्म्ये च तत्कथं निर्विशेषलाभ अत आह। ॐकारे त्विति॥ प्रसीदतीति तदुपासनेन चित्तस्य नैर्म्मल्ये सति निर्विशेषं स्वयमेव प्रकाशत इत्यर्थः। तत्र मानमाह। शास्त्रेति। अन्यथा परब्रह्मार्थिनस्तदुक्तिवैयर्थ्यादित्यर्थः। तथाऽपरञ्चेति प्रसीदतीत्यन्वयः। तस्मादिति प्रतीकत्वादित्यर्थः। तस्मादेव विद्वानिति ब्रह्मत्वार्हत्वाद्ब्रह्मत्वार्हमिति

उ० नैकतरमन्वेति ॥ २ ॥ स यद्येकमात्रमभिध्या-
यीत स तेनैव संवेदितस्तूर्णमेव जगत्यामभि-
सम्पद्यते । तमृचो मनुष्यलोकमुपनयन्ते स तत्र

भा० प्राप्तिसाधनेनैव ॐकाराभिध्यानेनैकतरं परमपरमन्वेति
ब्रह्मानुगच्छति नेदिष्ठं ह्यालम्बनमोङ्कारो ब्रह्मणः ॥ २ ॥
स यद्यप्योङ्कारस्य सकलमात्राविभागज्ञो न भवति
तथाप्योङ्काराभिध्यानप्रभावाद्विशिष्टामेव गतिं गच्छति
किन्तर्हि यद्यप्येवमोङ्कारमेकमात्राविभागज्ञ एव केवलो
ऽभिध्यायीतैकमात्रं सदा ध्यायीत स तेनैव मात्रविशिष्ट
ॐकाराभिध्यानेनैव संवेदितः सम्बोधितस्तूर्णं क्षिप्रमेव
जगत्यां पृथिव्यामभिसम्पद्यते किं मनुष्यलोकमनेकानि

आ० विद्वानित्यर्थः । एतेनैवेत्यनन्तरमायतनेनालम्बनेनेति पदद्वयं
प्रमादतो गलितमिति द्रष्टव्यं ॥ तस्य पदस्य विवक्षितार्थमाह ।
ॐकारेति ॥ न त्वेतच्छब्दार्थकथनमेतदिति द्रष्टव्यं ॥ २ ॥ ध्याभि-
ध्यानस्यायतनत्वाभावादितीतरोपासनावदस्याप्युपासनत्वात्परप्रा-
पकत्वं न सम्भवतीत्यत आह । नेदिष्ठमिति । मनस्याद्यपे-
क्षयेदं नेदिष्ठं समीपवर्त्त्यन्तरङ्गं श्रेष्ठमालम्बनमेतदालम्बनं श्रेष्ठ-
मेतदालम्बनं परमित्यादिश्रुतेरित्यर्थः । नेदिष्ठत्वमेव संस्तवमु-
त्तरवाक्येन साधयति । स यदीति ॥ विकल्पस्यापि फलजनक-
त्वान्नेदिष्ठत्वमित्यर्थः । सकलेत्याकारादिमात्रात्रयात्मक ॐकारः
स चोपासितव्य इति न जानाति किन्त्वाकारमात्रमुपासितव्यं
जानातीत्यर्थः । तथाप्येकदेशज्ञानवैगुण्यतया दुर्गतिं न गच्छति
किं तर्ह्योङ्काराभिध्यानप्रभावाद्विशिष्टामेव गतिं गच्छतीत्यन्वयः ।
तात्पर्य्यार्थमुक्त्वेदानीमक्षरार्थमाह । यद्यप्येवमिति ॥ यदिशब्दो
यद्यपीत्यर्थे व्याख्यातः । एवञ्च स तेनैवेत्यतः प्राक्तथापि इतिपदं

उ० तपसा ब्रह्मचर्य्येण श्रद्धया सम्पन्नो महिमानम-
नुभवति ॥ ३ ॥ अथ यदि द्विमात्रेण मनसि

---

भा० जन्मानि जगत्यां तत्र तं साधकं जगत्यां मनुष्यलोक-
मेवोपनयन्ते उपनिगमयन्ति। ऋचो ऋग्वेदरूपा ह्योङ्का-
रस्य प्रथमा एका मात्रा:। तदभिध्यानेन स मनुष्यजन्मनि
द्विजाग्र्यः सन्तपसा ब्रह्मचर्य्येण श्रद्धया च सम्पन्नो महिमानं
विभूतिमनुभवति न वीतश्रद्धो यथेष्टचेष्टो भवति योग-
भ्रष्टः कदाचिदपि न दुर्गतिं गच्छति ॥ ३ ॥ अथ पुन-
र्यदि द्विमात्राविभागज्ञो द्विमात्रेण विशिष्टमोङ्कारम-

---

आ० ष्टव्यं। एकमात्रात्मकमोङ्कारमित्यर्थः। एकमात्राविशिष्टेत्यात्रापि
एकमात्रात्वविशिष्टेत्यर्थः। ओँकारेति तदवयवेत्यर्थः। एकमात्रा-
प्रधानमप्रधानीभूतमात्राद्वयं कृत्स्नमोङ्कारमिति केचिद्व्याचक्षते।
दीपिकायां वाचस्पतिनैवाकारमात्रमित्येव व्याख्यातं। सम्बोधित
इति तन्मात्राध्यानेन तन्मात्रासाक्षात्कारवानित्यर्थः ॥ पृथिव्यां
किमभिसम्पद्यत इति कर्म्माकाङ्क्षते किमिति मनुष्यलोक-
मितिपदमिहाक्षप्याकाङ्क्षां पूरयति। मनुष्येति ॥ मनुष्यश-
रीरमित्यर्थः। पृथिव्यां मनुष्यलोकस्यैव नियमात्तदुक्तिवैयर्थ्य-
मत आह। अनेकानि हीति। पश्वादीनि हीत्यर्थः ॥ तर्हि तस्य
नियमेन कथं मनुष्यत्वप्राप्तिरत आह। तत्र तमिति ॥ ऋग्वे-
दरूपा हीति पृथीव्यकारः स ऋग्वेद इति श्रुतेरकारस्य तद्रूप-
त्वमित्यभिध्यानाकाररूपा मात्रा ऋग्वेदरूपेत्यन्वयः। तेनेति
येन ऋचो मनुष्यलोकमुपानयन्त इत्यर्थः। वीतश्रद्ध इति
श्रद्धाविरहितः सन्नित्यर्थः। योगभ्रष्ट इति एकदेशज्ञानविकल
इत्यर्थः। अनेन न हि कल्याणकृत्कश्चिदिति गीतावाक्यसंवादः
सूचितः। द्विमात्रेण विशिष्टमिति द्वितीयमात्रत्वेन विशिष्ट-
मोङ्कारं तद्रूतमोङ्कारमित्यर्थः। न तु मात्राद्वयमकारस्य पूर्व्वमेवो

उ॰ सम्पद्यते सोऽन्तरिक्षं यजुर्भिरुन्नीयते । स सोम-
लोकं स सोमलोके विभूतिमनुभूय पुनराव-
र्त्तते ॥ ४ ॥

---

भा॰ भिध्यायीत स्वप्नात्मके मनसि मननीये यजुर्मये सोमदै-
वत्ये सम्पद्यते एकाग्रतयात्मभावं गच्छति स एवं सम्पन्नो
मृतोऽन्तरिक्षमन्तरिक्षाधारं द्वितीयरूपं द्वितीयामात्रा-
रूपैरेव यजुर्भिरुन्नीयते सोमलोकं सौम्यं जन्म प्रापयन्ति
तं यजूंषीत्यर्थः । स तत्र विभूतिमनुभूय सोमलोके
मनुष्यलोकं प्रति पुनरावर्त्तते ॥ ४ ॥

---

आ॰ क्षत्वादत एव द्वितीयमात्रारूपमिति वक्ष्यति । श्रुतौ तृतीया
द्वितीयार्थे ॐकारमभिध्यायीतेत्युपक्रमादिति भावः । अत्र मात्रा-
भिधानं तादात्म्याभिमानपर्य्यन्तमिति वक्तुं मनसि सम्पद्यत इति
वाक्यं तत्र साक्षान्मनः सम्पत्ति साधनत्वेन फलत्वेन वाऽन्वया-
त्मनः शब्देन तत्परिणामस्वप्नादिलक्षणाद्वारा स्वप्नयजुराद्यात्म-
त्वेन श्रुत्यन्तरे श्रुतोङ्कार एव लक्ष्यत इत्याह । स्वप्नात्मक इति ॥
ॐकारसम्पत्तिपर्य्यन्तमभिध्यानं यः करोतीति वाक्यार्थ इत्यर्थः ।
अत्र केचित्सपदीत्यादिर्यः पुनरित्यन्तं स्तुतिः । किन्तूक्तफला-
कारे विश्वाभिन्नविराडुपासनमोङ्कारे तैजसाभिन्नहिरण्यगर्भो-
पासनञ्च विवक्षितमित्याहुः । तन्मते मनःशब्देनाण्डपरिणाम-
स्वप्नाभिमानी हिरण्यगर्भ उच्यत इति वक्तुं स्वप्नात्मक इत्यादि-
विशेषणानीति बोध्यं । दीपिकायान्तु मात्राद्वयस्य मिलितस्योपा-
सनं मनसि सम्पत्तिश्च मनसा एकाग्रतया चिन्तनमिति च
व्याख्यातं ॥ १ ॥ ४ ॥

उ॰ यः पुनरेतन्त्रिमात्रेणैवोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्य्ये सम्पन्नः।

भा॰ यः पुनरेतमोङ्कारं त्रिमात्रेण त्रिमात्राविषयविज्ञानविशिष्टेनोमित्येतेनैवाक्षरेण प्रतीकेन परं सूर्य्यान्तर्गतं पुरुषमभिध्यायीत तेनाभिध्यानेन प्रतीकत्वेन त्वालम्बनत्वप्रकृतमोङ्कारस्य परञ्चापरञ्च ब्रह्मेति भेदाभेदश्रुतेरोङ्कारमिति च द्वितीयानेकशः श्रुता बाध्येत अन्यथा यद्यपि तृतीयाभिधानत्वेन करणत्वमुपपद्यते तथापि प्रकृतानुरोधात्त्रिमात्रं परं पुरुषमिति द्वितीयैव परिणेया। त्यजेदेकं कुलस्यार्थेति न्यायेन स तृतीयो मात्रारूपस्तेजसि सूर्य्ये सम्पन्नो भवति ध्यायमानो मृतोऽपि सूर्य्यात् सोमलोकादिवन्न पुनरावर्त्तते किन्तु सूर्य्यसम्पन्नमात्र

व्या॰ एवमोङ्कारं स्तुत्वा तदुपासनं परब्रह्मविषयं विधत्ते यः पुनरिति ॥ विज्ञानविशिष्टेनेति विज्ञानविषयीकृतेनेत्यर्थः। मात्रात्रयात्मकज्ञानेनेति यावत् पूर्व्ववदत्रापि त्रिमात्रेणेत्यत्र तृतीयामात्रामकार उच्यत इति भ्रमं वारयितुमोमित्येतेनैवाक्षरेणेत्युक्तं। पूर्व्वत्र तत्तन्मात्राप्रधानोङ्कार एवोच्यत इति मते इहैवेदं विशेषणमनुपपन्नं। पूर्व्वत्राप्योङ्कारस्यैवोक्तत्वादिति तन्मतमनुपपन्नमिव भातीति त्रिमात्रेणेति तृतीया। श्रवणादोङ्कारो न प्रतीकं तथा सति विषयत्वेन कर्म्मतया] द्वितीया स्यात् किन्त्वभिध्यापकत्वेन करणत्वमेव तृतीयाबलादिति भ्रमं वारयति। प्रतीकेति ॥ तस्य कर्म्मत्वेऽपि कारकत्वेनाभिध्यानक्रियानिर्व्वर्त्तकत्वेन हेतुत्वात्तन्मात्रविवक्षया तृतीयोपपद्यत इत्यर्थः। एवं व्याख्याने हेतुमाह। प्रतीकत्वेनेति ॥ अभेदेति प्रतीकत्वे ह्यधिष्ठानाद्ध्यस्यमानयोस्तादात्म्यारोपादभेदश्रवणमुपप

उ॰ यथा पादोदरस्त्वचा विनिर्म्मुच्यत एवं ह वै स पाप्मना विनिर्म्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं

भा॰ एव। यथा पादोदरः सर्पस्त्वचा विनिर्म्मुच्यते जीर्णत्वग्विनिर्मुक्तः स पुनर्नवो भवति। एवं ह वै एष यथा दृष्टान्तः स पाप्मना सर्पत्वक्स्थानीयेनाशुद्धिरूपेण विनिर्मुक्तः सामभिस्तृतीयमात्रारूपैरूर्द्ध्वमुन्नीयते ब्रह्मलोकं हिरण्यगर्भस्य ब्रह्मणो लोकं सत्याख्यं। स हिरण्यगर्भः सर्व्वेषां संसारिणां जीवानामात्मभूतः। स ह्यन्तरात्मा लिङ्गरूपेण सर्व्वभूतानां तस्मिँल्लिङ्गात्मनि संहताः सर्व्वे जीवाः। तस्मात्स

आ॰ द्यते। करणत्वे तु न तदुपपद्यत इत्यर्थः। अनेकश इत्योङ्कारमभिध्यायीत स यद्येकमात्रमभिध्यायीतेति द्विवारश्रुतेरित्यर्थः। अन्यथेत्यस्य बाध्येतेत्यनेनान्वयः। अथ यदि द्विमात्रेण यः पुनरेतं त्रिमात्रेणेति च तृतीयापि द्विवारं श्रुता हेतुत्वापेक्षया करणत्वेन स्वरसा च कारकविभक्तित्वात्ततस्तस्या अपि बाधो न युक्त इति शङ्कते। यद्यपीति॥ द्वितीयाद्वयस्यापि कर्म्मत्वे स्वारस्यादुपक्रमस्थत्वाच्च तस्यैव प्राबल्यमित्याह। तथापीति॥ प्रकृतेति प्रक्रमानुरोधादित्यर्थः। किञ्च द्वितीयाद्वयमुक्ताभेदश्रुतिः। एतेनैवायतनेनैकतरमन्वेति। आयतनेनैवान्वेतीत्यास्मिन्नवाच्यायतनश्रुतिद्वयञ्चेति बहुश्रुत्यनुरोधेन तृतीयाद्वयं त्याज्यमित्याह। त्यजेदेकमिति॥ तृतीयमात्रारूप इति यद्यपि मात्रात्रयध्यानमात्रात्रयरूपित्वमेव तस्य तथापि तृतीयमात्राया एवं ह्यसाधारण्यात्तत्प्राधान्येन निर्द्देश इति बोध्यं। तृतीयमात्रारूप इति सप्तम्यन्तपाठे तत्पूर्व्वविशेषणं मकारस्यादित्यात्मकत्वादिति। हिरण्यगर्भस्य जीवघनत्वमनागतावेक्षणन्यायेनोपपादयति। स हिरण्यगर्भ इति॥ लिङ्गरूपेणेति समष्टिलिङ्गरूपेणेत्यर्थः॥

उ॰ स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते तदेतौ श्लोकौ भवतः ॥ ५ ॥

तिस्रो मात्रा मृत्युमत्यः प्रयुक्ता अन्योन्यसक्ता अनविप्रयुक्ताः । क्रियासु बाह्याभ्यन्तरमध्यमासु

---

भा॰ जीवघनः स विद्वांस्त्रिमात्रोङ्काराभिज्ञः । एतस्माज्जीवघनाद्धिरण्यगर्भात्परात्परं परमात्माख्यं पुरुषमीक्षते । पुरिशयं सर्व्वशरीरानुप्रविष्टः पश्यति ध्यायमानः । तदेतावस्मिन्यथोक्तार्थप्रकाशकौ मन्त्रौ भवतः ॥ ५ ॥

तिस्रस्त्रिसङ्ख्याका अकारउकारमकाराख्या ॐकारस्य मात्राः । मृत्युर्यासां विद्यते ता मृत्युमत्यः मृत्युगोचरादनतिक्रान्ता मृत्युगोचरा एवेत्यर्थः । ता आत्मनो ध्यानक्रियासु प्रयुक्ताः । किञ्चान्योन्यसक्ता इतरेतरसम्बद्धाः । अनविप्रयुक्ता विशेषेणैकैकविषय एव प्रयुक्ताः । तथा न विप्रयुक्ता अविप्रयुक्ता नाविप्रयुक्ता अनविप्रयुक्ताः । किन्तर्हि

---

आ॰ तस्मिन्निति ॥ समष्टिलिङ्गात्मनि हिरण्यगर्भे व्यष्टिलिङ्गाभिमानिनः सर्व्वे जीवा गोत्वसामान्ये खण्डमुण्डादय इव संहता इत्यर्थः ॥ इदानीं वाक्यं योजयति । स विद्वानिति ॥ स विद्वानिदानीं ध्यायमानः पश्चाद्ब्रह्मलोकं प्राप्तः । तत्र ब्रह्मलोके स्थावरजङ्गमेभ्यः पराज्जीवघनात्परं पुरुषं पश्यति ततो मुक्तो भवतीत्यन्वयः ॥ ५ ॥

यत्र यः पुनरेतमित्यादिनोक्तेऽर्थे आद्यं मन्त्रं योजयति । तिस्र इति ॥ मृत्युगोचरा इति प्रत्येकं ब्रह्मदृष्टिं विना तदुपासकानां । मृत्युर्मनतिक्रमणीय इत्यर्थः ॥ ब्रह्मदृष्ट्या संश्लिष्टत्वेन च सम्भूय च प्रयुक्तास्वेतायं दोष इत्याह । क्रियेति ॥ जाग्रदिति जाग-

उ॰ सम्यक् प्रयुक्तासु न कम्पते ज्ञः ॥ ६ ॥ ऋग्भिरेतं यजुर्भिरन्तरिक्षं स सामभिर्यत्तत्कवयो वेदयन्ते ।

भा॰ विशेषेणैकस्मिन्ध्यानकाले ऽतिसृष्टासु क्रियासु बाह्याभ्यन्तरमध्यमासु जाग्रत्स्वप्नसुषुप्तस्थानपुरुषाभिध्यानलक्षणासु योगक्रियासु सम्यक्प्रयुक्तासु सम्यग्ध्यानकाले प्रयोजितासु न कम्पते न चलते ज्ञः । ज्ञो योगी यथोक्तविभागज्ञ ओँकारस्येत्यर्थः । न तस्यैवंविदश्चलनमुपपद्यते । यस्माज्जाग्रत्स्वप्नसुषुप्तपुरुषाः सह स्थानैर्मात्रात्रयरूपेणोङ्कारात्मरूपेण दृष्टाः ॥ ६ ॥ स ह्येवं विद्वान् सर्व्वात्मभूत ओँकारमयः कुतो वा चलेत्कस्मिन् वा । सर्व्वार्थसङ्ग्रहार्थो द्वितीयो मन्त्रः । ऋग्भिरेतं लोकं मनुष्योपलक्षितं । यजुर्भिरन्तरिक्षं सोमाधिष्ठितं । सामभिर्यत्तद्ब्रह्मलोकमिति तृतीयं कवयो मेधाविनो विद्यावन्त एव नाविद्वांसो वेदयन्ते । तं त्रिविधलोकमोङ्कारेण साधनेनापरब्रह्मलक्षणमन्वेत्यनुगच्छति विद्वान् । तेनैवोङ्कारेण यत्तत्परं ब्रह्मा-

टी॰ पुरुषो वैश्वानराभिन्नो विश्वस्तत्स्थानं स्थूलं शरीरं जागरितञ्च । स्वप्नपुरुषस्तु हिरण्यगर्भाभिन्नस्तैजसस्तत्स्थानं लिङ्गशरीरं स्वप्नश्च । सुषुप्तावीश्वरात्मा प्राज्ञस्तत्स्थानमव्याकृतं सुषुप्तिश्च । तेषामकारादितादात्म्येन यदभिध्यानं तत्तत्पुरुषलक्षणासु योगक्रियासु प्रयुक्तास्वन्योऽन्यसक्ता अनविप्रयुक्तास्तिस्रो मात्राः प्रयुक्तास्तेन कम्पत इत्यन्वयः । अनेन सर्व्वात्मके परमात्मनीश्वरे ओँकाराभेदेन ध्यानमुक्तं । यथोक्तेति । तिस्रो मात्रा इति श्लोकोक्तविभाग इत्यर्थः । कुतो वेति चलनं विक्षेपः तस्य सर्व्वात्मत्वेन सर्व्वव्यतिरिक्ताभावाच्चलनं न सम्भवतीति कुतो हेतोः कस्मिन् वा

उ॰ तमोङ्कारेणैवायतनेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभयं परञ्चेति ॥ ७ ॥ इति पञ्चमप्रश्नः समाप्तः ॥ ५ ॥

अथ हैनं सुकेशा भारद्वाजः पप्रच्छ । भगवन् हिरण्यनाभः कौसल्यो राजपुत्रो मामुपेत्यैतं

भा॰ चरं सत्यं पुरुषाख्यं शान्तं विमुक्तं जाग्रत्स्वप्नसुषुप्त्यादिविशेषसर्व्वप्रपञ्चविवर्जितमत एवाऽजरं जरावर्जितममृतं मृत्युवर्जितमेव । यस्माज्जराविक्रियादिरहितमतोऽभयं । यस्मादेवाभयं तस्मात्परं निरतिशयं । तदप्योङ्कारेणायतनेन गमनसाधनेनान्वेतीत्यर्थः । इतिशब्दो वाक्परिसमाप्त्यर्थः ॥७॥ इति प्रश्नोपनिषद्भाष्ये पञ्चमप्रश्नः समाप्तः ॥५॥

अथ हैनं सुकेशा भारद्वाजः पप्रच्छ समस्तं जगत्कार्य्यकारणलक्षणं सह विज्ञानात्मना परस्मिन्नक्षरे सुषुप्तिकाले सम्प्रतिष्ठित इत्युक्तं । सामर्थ्यात्प्रलयेऽपि तस्मिन्नेवाक्षरे

आ॰ विषयं चलेदित्यर्थः । अपरब्रह्मप्राप्त्यर्थं य ओङ्कारः प्रयुक्तस्तेनैव न पृथक्प्रयुक्तः परमपि प्रैति ब्रह्मलोके । उत्पन्ननिर्विशेषब्रह्मसाक्षात्कारेणोक्तस्योङ्कारस्य क्रममुक्तिफलत्वादित्याह । तेनैवेति ॥ येनापरमन्वेति तेनैव परमस्मानन्वेतीत्येवकारार्थः । तदप्योङ्कारेणेत्यायतनविशेषणार्थं पुनरोङ्कारग्रहणमिति न पुनरुक्तिरिति बोध्यं । ६ ॥ ७ । इति प्रश्नोपनिषद्भाष्यटीकायां पञ्चमप्रश्नः पूर्णः ॥ ५ ॥

गताः कलाः पञ्चदशप्रतिष्ठाः कर्म्माणि विज्ञानमयश्चेति मन्त्रे कर्म्मभिः सह षोडशकलानां परस्मिन् लयमुक्त्वा यथा नद्यः स्यन्दमाना इति मन्त्रेण दृष्टान्तोक्तिद्वारा परप्राप्तिवक्ता तत्र-

उ॰ प्रश्नमपृच्छत । षोडशकलं भारद्वाज पुरुषं वेत्थ तमहं कुमारमब्रुवं नाहमिमं वेद यद्यहमिम- मवेदिषं कथं ते नावक्ष्यमिति समूलो वा एष

भा॰ सम्प्रतिष्ठते जगत् तत एवोत्पद्यत इति सिद्धं भवति । न ह्यकारणे कार्य्यस्य सम्प्रतिष्ठानमुपपद्यते । उक्तञ्चात्मन एष प्राणो जायत इति । जगतश्च यन्मूलं तत्परिज्ञानात्परं श्रेय इति सर्व्वोपनिषदां निश्चितोऽर्थः । अनन्तरञ्चोक्तं स सर्व्वज्ञः सर्व्वो भवतीति । वक्तव्यञ्च क्व तर्हि तदक्षरं सत्यं पुरुषाख्यं विज्ञेयमिति । तदर्थोऽयं प्रश्न आरभ्यते । वृत्तान्ताख्या- नञ्च विज्ञानस्य दुर्लभत्वख्यापनेन तल्लब्ध्यर्थं मुमुक्षूणां यत्न- विशेषोत्पादनार्थं । हे भगवन् हिरण्यनाभो नामतः कोस- लायां भवः कौसल्यो राजपुत्रो जातितः क्षत्रियो मामुपे- त्योपगम्येतमुच्यमानं प्रश्नमपृच्छत । षोडशकलं षोडशस- ङ्ख्याकाः कला अवयवा इवात्मन्यविद्याध्यारोपितरूपा

आ॰ न्वयोर्विस्तराभिधानार्थं षष्ठं प्रश्नमारभते । अथ हैनमिति ॥ तस्य पूर्व्वेण सङ्गतिमुक्त्वाऽर्थानुवादपूर्व्वकमाह । समस्तमि- त्यादिना ॥ अक्षरस्य कारणत्वसिद्ध्यर्थं प्रलयेऽपि तस्मिन्नेव लयमाह । सामर्थ्यादिति ॥ लयाधारत्वेन कारणत्वमाह । तत इति ॥ तदुक्तेः प्रयोजनमाह । जगत इति ॥ यद्यप्यद्वितीयात्म- ज्ञानान्मुक्तिर्न कारणज्ञानात् तथापि तस्य कारणत्वे तद्व्यतिरेकेण कार्य्याभावात्तदद्वितीयत्वज्ञानं सिध्यतीति तादृगात्मज्ञानात्परं श्रेय इति । आत्मा वा इदमेक एव । स एतमेव पुरुषं ब्रह्म तत- मपश्यत् । प्रज्ञानं ब्रह्म । स एतेन प्रज्ञानेनात्मना अमृतः सम- भवत् । सदेवैकमेवाद्वितीयमित्युपक्रम्याचार्य्यवान् पुरुषो वेद

उ० परिशुष्यति योऽनृतमभिवदति तस्मान्नार्हाम्यनृतं वक्तुं स तूष्णीं रथमारुह्य प्रवव्राज। तं त्वा पृच्छामि क्वासौ पुरुष इति ॥ १ ॥ तस्मै स हो-

---

भा० यस्मिन् पुरुषे सोऽयं षोडशकलस्तं षोडशकलं हे भारद्वाज पुरुषं वेत्थ। तमहं राजपुत्रं कुमारं पृष्टवन्तमब्रुवमुक्तवानस्मि नाहमिमं वेद यत्त्वं पृच्छसीति। एवमुक्तवत्यपि मय्यज्ञानमसम्भावयन्तं तमज्ञाने कारणमवादिषं। यदि कथञ्चिदहमिमं त्वया पृष्टं पुरुषमवेदिषं विदितवानस्मि कथमत्यन्तशिष्यगुणवतेऽर्थिने ते तुभ्यं नावक्ष्यं नोक्तवानस्मि न ब्रूयामित्यर्थः। भूयोऽप्यप्रत्ययमिवालक्ष्य प्रत्याययितुमब्रुवं। समूलः सह मूलेन वै एषोऽन्यथा सन्तमात्मानमन्यथा कुर्व्वन्ननृतमयथाभूतार्थमभिवदति यः स परिशुष्यति शोषमुपैतीहलोकपरलोकाभ्यां विच्छिद्यते विनश्यति। यत एवं जाने तस्मान्नार्हाम्यहमनृतं वक्तुं मूढवत्। स राजपुत्र एवं प्रत्यायितस्तूष्णीं व्रीडितो रथमारुह्य प्रवव्राज

---

आ० अथ सम्पत्त्यै तमेवैकं जानथ। अमृतस्यैष सेतुः अहं ब्रह्मास्मीति। तस्मात्तत्सर्व्वमभवदित्यादिषु निश्चितमित्यर्थः। इहापि तादृगात्मज्ञानादेव सर्व्वात्मभावः श्रेय उक्त इत्याह। अनन्तरमिति। वृत्तमनूद्य वर्त्तिष्यमाणमाह। वक्तव्यमिति। तदर्थोऽयमिति तस्य शरीरान्तस्थत्वोक्तिद्वारा तस्य प्रत्यगात्मत्वज्ञानार्थमित्यर्थः। प्रश्नमिति प्रष्टव्यमित्यर्थः। अज्ञाने कारणमिति अज्ञानसम्भावनायां कारणमित्यर्थः। अप्रत्ययमिति अविश्वासमित्यर्थः। अन्यथा सन्तमिति आत्मानं सन्तमन्यथा कुर्व्वन्ननात्मानं कुर्व्वन्ना-

उ॰ वाच । इहैवान्तःशरीरे सोम्य स पुरुषो यस्मि-
न्नेताः षोडशकलाः प्रभवन्तीति ॥ २ ॥
स ईक्षाञ्चक्रे । कस्मिन्नहमुत्क्रान्त उत्क्रान्तो

---

भा॰ प्रगतवान् यथा गतमेव । अतो न्यायत उपसन्नाय योग्याय
जानता विद्या वक्तव्यैव अनृतञ्च न वक्तव्यं सर्व्वास्वप्यव-
स्थास्वित्येतत्सिद्धं भवति । तं पुरुषं त्वा त्वां पृच्छामि मम
हृदि विज्ञेयत्वेन शल्य इव मे हृदि स्थितं क्वासौ वर्त्तते
विज्ञेयःपुरुष इति ॥ १ ॥ तस्मै स होवाच । इहैवान्तः शरीरे
हृदयपुण्डरीकाकाशमध्ये हे सोम्य स पुरुषो न देशान्तरे
विज्ञेयो यस्मिन्नेता उच्यमानाः षोडशकलाः प्राणाद्याः
प्रभवन्त्युत्पद्यन्त इति षोडशकलाभिरुपाधिभूताभिः सकल
इव निष्कलः पुरुषो लक्ष्यते विद्ययेति ॥ २ ॥

तदुपाधिकलाध्यारोपापनयनेन विद्यया स पुरुषः
केवलो दर्शयितव्य इति कलानां तत्प्रभवत्वमुच्यते । प्राणा-

---

आ॰ रोपयन्नित्यर्थः ॥ कथं ते नावक्ष्यमित्यनेन सूचितमर्थमाह । अत
इति ॥ समूलो वा इत्यनेन सूचितमाह । अनृतञ्चेति ॥ स्वल्-
पेऽपि शल्यत्वाभावादाह । विज्ञेयत्वेनेति ॥ यावज्जिज्ञासितं न
ज्ञायते तावत्तद्धृदि शल्यवद्भासत इति शल्यमिवेत्युक्तं । पुरुषस्य
षोडशकलत्वं न साक्षात्सावयवत्वेन किन्तु कलाजनकत्वेन तद्-
पाधिमत्त्वादिति वक्तुं यस्मिन्नेता इति वाक्यमिति तत्तात्पर्य्य-
माह । षोडशकलाभिरिति ॥ १ ॥ २ ॥

ननु केवल आत्मा प्रदर्श्यतां किं वक्ष्यमाणकलोक्त्येत्यत
आह । तदुपाधीति ॥ तथैव स प्रदर्शनीय इत्यत्र हेतुमाह ।
अध्यस्तेति ॥ अविद्याविषया इति अविद्याधीना इत्यर्थः । कालत्र-

उ० भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामीति ॥ ३ ॥

---

भा० दीनामत्यन्तनिर्व्विशेषे ह्यद्वये शुद्धे तत्त्वे न शक्योऽध्यारोपमन्तरेण प्रतिपाद्यप्रतिपादनादिव्यवहारः कर्त्तुमिति कलानां प्रभवस्थित्यप्यया आरोप्यन्ते अविद्याविषयाश्चैतन्याव्यतिरेकेणैव हि कला जायमानास्तिष्ठन्त्यः प्रलीयमानाश्च सर्व्वदा लक्ष्यन्ते। अत एव भ्रान्ताः केचिदग्निसंयोगाद्घृतमिव घटाद्याकारेण चैतन्यमेव प्रतिक्षणं जायते नश्यतीति तन्निरोधे शून्यमिव सर्व्वमिति। अपरे घटादिविषयं चैतन्यं चेतयितुर्नित्यस्यात्मनोऽनित्यं जायते विनश्यतीति। अपरे चैतन्यमभूतधर्म्म इति। लोकायतिकाः अनपायोपजनधर्म्मकचैतन्यमात्मैव नामरूपाद्युपाधि-

---

आ० येऽपि तासाञ्चैतन्यरूपाधिष्ठानाव्यतिरेकाद्रज्जुसर्पवन्मृषात्वमित्यविद्याविषयत्वं साधयति । चैतन्येति ॥ चैतन्याव्यतिरेकेण लक्ष्यमाणत्वं हेतुं विज्ञानवादिभ्रान्त्या दृढीकरोति । अत एवेति ॥ घृतं यथाऽग्निसंयोगाद्द्रवावस्थां प्रतिपद्यते एवंमयि-माकारमालयविज्ञानमेव वासनावशाद्विषयाकारेण जायत इति वदतां तेषां भ्रमो विषयस्य चैतन्याव्यतिरेके प्रत्ययं गमयति अन्यथा तथा भ्रमानुपपत्तेरित्यर्थः । विषयाणां चैतन्याव्यतिरेकेण प्रतीतिनियमादेव विषयविज्ञानरूपेण चैतन्याभावे सुषुप्त्यादौ शून्यभ्रमो जातः केषाञ्चिदिति तदीयभ्रान्त्यापि चैतन्याव्यतिरिक्तप्रतीतिं दृढीकरोति । तन्निरोध इति ॥ चैतन्यस्यानित्यस्य कलारोपाधिष्ठानत्वं न सम्भवति । कलाकार्य्यत्वादिति ॥ नैयायिकपक्षोक्तिव्याजेन शङ्कते । घटादीति ॥ भूतधर्म्म इति देहाकारेण संहतभूतधर्म्म इत्यर्थः । चैतन्यस्यारोपाधिष्ठा-

भा॰ धर्म्मैः प्रत्यवभासते। सत्यं ज्ञानमनन्तं ब्रह्म। प्रज्ञानमानन्दं ब्रह्म। विज्ञानघन एवेत्यादिश्रुतिभ्यः। स्वरूपाव्यभिचारिषु पदार्थेषु चैतन्यस्याव्यभिचारात् यथा यथा यो यः पदार्थो विज्ञायते तथा तथा ज्ञायमानत्वादेव तस्य तस्य चैतन्यस्याव्यभिचारित्वं वस्तु च भवति किञ्चिन्न ज्ञायत इति चानुपपन्नं। रूपञ्च दृश्यते न चास्ति चक्षुरितिवत्। व्यभिचरति तु ज्ञानं ज्ञेयं न व्यभिचरति कदाचिदपि। ज्ञेयाभावेऽपि ज्ञेयान्तरेऽभावाज्ज्ञानस्य। न हि ज्ञानेऽसति ज्ञेयं नाम भवति। कस्यचित्सुषुप्तेऽदर्शनाज्ज्ञानस्यापि सुषुप्तेऽभावाज्ज्ञेयवज्ज्ञानं स्वरूपस्य व्यभिचार इति चेन्न। ज्ञेयावभासकस्य ज्ञानस्यालोकवज्ज्ञेयाभिव्यञ्जकत्वात् स्वव्यङ्ग्याभावे आलो-

---

टी॰ न त्वसिद्ध्यर्थं नित्यत्वमेकत्वञ्च वदन् तन्निराकरोति। अनपायेति॥ प्रत्यवभासत इति॥ नानात्वेन कार्य्यत्वेन चेति शेषः। सत्यं ज्ञानमिति॥ तथा च श्रुतिविरोधात्ते पक्षा हेया इत्यर्थः। किन्त्वज्ञानकाले विषयाणां सद्भावनियमाभावाद्विषयकाले च ज्ञानस्य सद्भावनियमात्तयोर्भेद इति विज्ञानवादिपक्षं निराकुर्व्वन्नव्यभिचारादेव ज्ञानस्य नित्यत्वं साधयन्नैयायिकादिपक्षमपि निराकरोति। स्वरूपेति॥ घटज्ञानकाले पटाभावसम्भवाद्विषयाणां ज्ञानव्यभिचारित्वं ज्ञानस्य तु विषयकालेऽवश्यम्भावनियमादव्यभिचारित्वमित्यर्थः। पटकाले घटज्ञानमपि नास्तीति घटज्ञानस्यापि पटविषयव्यभिचारित्वं तुल्यमित्याशङ्क्य स्वरूपेत्युक्तं। ज्ञानस्य विषयविशिष्टत्वरूपेणैव व्यभिचारः। विषयस्य तु स्वरूपेणैवेति विशेष इत्यर्थः। ज्ञानस्याव्यभिचारित्वमुपपादयति। यथा यथेति॥ ननूत्पन्नविनष्टादेर्मेरुगुहान्तर्वर्त्तिनश्चाज्ञायमानत्वाज्ज्ञानस्यापि ज्ञेयाव्यभिचारोऽसिद्ध इत्याशङ्क्य तस्याज्ञाने तत्सद्भावासिद्धेस्तथाभूतपदार्थोऽसिद्ध इत्याह। वस्तु चेति। अनुपपत्तिमेव दृष्टान्तेन स्फुटीकरोति।

भा॰ काभावानुपपत्तिवत् सुषुप्ते विज्ञानाभावानुपपत्तेः। न ह्यन्ध-
कारे चक्षुषा रूपानुपलब्धौ चक्षुषोऽभावः शक्यः कल्पयितु-
मवैनाशिकेन। वैनाशिको ज्ञेयाभावे ज्ञानाभावं कल्पयत्ये-
वेति चेत् येन तदभावं कल्पयेत्तस्याभावः केन कल्प्यत
इति वक्तव्यं। वैनाशिकेन तदभावस्यापि ज्ञेयत्वाज्ज्ञानाभावे
तदनुपपत्तेः। ज्ञानस्य ज्ञेयाव्यतिरिक्तत्वाज्ज्ञेयाभावे ज्ञा-
नाभाव इति चेत्। न। अभावस्यापि ज्ञेयत्वाभ्युपगमादभा-
वोऽपि ज्ञेयोऽभ्युपगम्यते। वैनाशिकैर्नित्यश्च तदव्यतिरिक्त-
त्वेज्ज्ञानं नित्यं कल्पितं स्यात्तदभावस्य च ज्ञानात्मकत्वा-
दभावत्वं वाङ्मात्रमेव न परमार्थतोऽभावत्वमनित्यत्वं च
ज्ञानस्य। न च नित्यस्य ज्ञानस्याभावनाममात्राध्यारोपे

---

आ॰ रूपस्येति॥ ज्ञेयस्य ज्ञानव्यभिचारित्वं ज्ञानकाले सत्त्वनियमा-
भावरूपं स्पष्टमित्याह। व्यभिचरति त्विति॥ घटज्ञानकाले
कदाचिद्घटाभावादित्यर्थः। पटकाले घटज्ञानस्यापि व्यभिचार-
स्तुल्य इत्याशङ्क्य विशिष्टरूपेण व्यभिचारेऽपि स्वरूपेणाव्यभिचारं
पूर्ववत्सूचितमाह। न व्यभिचरतीति॥ ज्ञानमित्यस्येहाप्यनु-
षङ्गः। पूर्ववाक्ये द्वितीयान्तं इह तु प्रथमान्तमिति विशेषः।
भावादिति स्वरूपेणेत्यर्थः। ज्ञानस्य स्वरूपेण सतामेव ज्ञेयान्त-
रस्य ज्ञेयत्वादेव साधयति। न हीति॥ स्वरूपेणाप्यभावं शङ्कते
सुषुप्त इति॥ किन्तदानीं ज्ञेयाभावेन ज्ञानाभावः साध्यते उत
ज्ञानस्य दर्शनाद्वा आद्येऽपि ज्ञेयस्य व्यस्तत्वात्तदभावाद्वाज्ञा-
भाव इति॥ उभयोरैक्याभाव इतराभाव इति। नाद्यो
व्यभिचारादित्याह। न ज्ञेयेति॥ व्यस्तज्ञानैककल्पस्य व्यस्ताभावे
ऽभाव उच्यते आलोकस्य प्रत्यक्षसिद्धत्वान्नैवमिति। ज्ञानानुमेयत्व-
वादिनं प्रति दृष्टान्तान्तरमाह। न हीति॥ वैनाशिकमते विज्ञा-
नव्यतिरिक्तालोकाद्यभावान्न तत्र व्यभिचार इति शङ्कते। वैना-
शिक इति॥ कल्पयत्येवेत्युक्तव्यभिचारस्यणाभावेन व्यभिचाराभा-

भा॰ किमश्छिन्नं । अथाभावो ज्ञेयोऽपि सन् ज्ञानव्यतिरिक्त इति चेन्न। तर्हि ज्ञेयाभावे ज्ञानाभावः। ज्ञेयं ज्ञानव्यतिरिक्तं न तु ज्ञानं ज्ञेयव्यतिरिक्तमिति चेन्न। शब्दमात्रत्वाद्विशेषानुपपत्तेः। ज्ञेयज्ञानयोरेकत्वञ्चेदभ्युपगम्यते ज्ञेयं ज्ञानव्यतिरिक्तं न ज्ञेयव्यतिरिक्तं ज्ञानं ज्ञेयव्यतिरिक्तं नेति तु शब्दमात्रमेव तद्वह्निरग्निव्यतिरिक्तोऽग्निर्न वह्निव्यतिरिक्त इति यद्वदभ्युपगम्य ज्ञेयव्यतिरेके तु ज्ञानस्य ज्ञेयाभावे ज्ञानाभावानुपपत्तिः सिद्धा । ज्ञेयाभावेऽदर्शनादभावो ज्ञानस्येति चेन्न। सुषुप्तेरित्यभ्युपगमात्। वैनाशिकैरभ्युपगम्यते हि सुषुप्तेऽपि विज्ञानास्तित्वं तत्रापि ज्ञेयत्वमभ्युपगम्यते।

---

आ॰ वादित्यर्थः। एवमपि ज्ञानाभावकल्पकस्य ज्ञेयाभावस्य ज्ञानमङ्गीक्रियते न वा। आद्ये न ज्ञानाभावसिद्धिस्तस्यैवाभावज्ञानस्य सत्त्वादित्याह। येनेति॥ येन ज्ञेयाभावज्ञानेन तदभावं कल्पयेत्तस्य ज्ञानस्याभावः केन कल्प्यते न केनापि कल्पयितुं शक्य इत्यर्थः। न द्वितीय इत्याह। तदभावस्यापीति॥ ज्ञेयाभावस्याप्यज्ञानस्य ज्ञानाभावकल्पकत्वासम्भवादवश्यं ज्ञेयत्वात्तज्ज्ञानाभावे तदनुपपत्तेः कल्पनानुपपत्तेर्ज्ञानानङ्गीकारपक्षो न युक्त इत्यर्थः॥ आद्यकोटौ द्वितीयकल्पं शङ्कते। ज्ञेयेति॥ वैनाशिकमतेऽप्यभावस्य ज्ञेयत्वाभ्युपगमाद्बुद्धिबोध्यं त्रयादन्यत्संस्कृतं क्षणिकं च तदिति प्रतिसङ्ख्यानिरोधादाकाशरूपत्रयव्यतिरिक्तस्यैव क्षणिकत्वेन निरोधशब्दितस्याभावस्य नित्यत्वाङ्गीकारेण तदभिन्नस्य ज्ञानस्यापि सुषुप्ते सत्त्वं नित्यत्वं च प्राप्तमित्याह। नाभावस्येति॥ ज्ञानस्याभावाभिन्नत्वेनाभावत्वमेव स्यान्न तु भावत्वेन सत्त्वं नित्यत्वं च स्यादित्याह। तदभावस्येति॥ अनित्यत्वञ्च ज्ञानस्येति वाङ्मात्रमेव स्यादित्यनुषङ्गः। वाङ्मात्रेणाप्यभावस्याभावत्वेन ज्ञानानित्यत्वेन चास्मत्सिद्धान्तसिद्धिरित्याशङ्क्य नामभात्रेण तेन वास्तवनित्यत्वादिविरोधाभावान्नास्माकं क्षति-

भा॰ ज्ञानस्य स्वेनैवेति चेन्न। भेदस्य सिद्धत्वात्। सिद्धं ह्यभावविज्ञेयविषयस्य ज्ञानस्याभावज्ञेयव्यतिरेकाज्ज्ञेयज्ञानयोरन्यत्वं। न हि तत्सिद्धं मृतमिवोज्जीवयितुं पुनरन्यथा कर्त्तुं शक्यते वैनाशिकशतैरपि ज्ञानस्य ज्ञेयत्वमेवेति। तदप्यन्येन तदप्यन्येनेति त्वत्पक्षेऽतिप्रसङ्ग इति चेन्न। तद्विभागोपपत्तेः। सर्व्वस्य यदा हि सर्व्वं ज्ञेयं कस्यचित्तदा तद्व्यतिरिक्तं ज्ञानं ज्ञानमेवेति द्वितीयो विभाग एवाभ्युपगम्यतेऽवैनाशिकैः। न तृतीयस्तद्विषय इत्यनवस्थानुपपत्तिः। ज्ञानस्य

आ॰ रित्याह। न चेति॥ अभावनामेत्यनित्यनामेत्यपि द्रष्टव्यं। एतद्दोषपरिहारार्थं ज्ञेयस्यापि सतोऽभावस्य ज्ञानाभेदो नाङ्गीक्रियत इति शङ्कते। अथेति॥ तर्हि ज्ञेयाभिन्नत्वेन हेतुना सुषुप्ते ज्ञानाभावो न सिद्ध्यति घटाद्यभावसिद्धावपि अभावज्ञानाभावासिद्धेस्तस्याभिन्नत्वाभावादित्याह। न तर्हीति॥ यद्वाऽभावस्य ज्ञेयस्य ज्ञानाद्भेदे भावस्यापि तथात्वं स्याद्विशेषहेत्वभावात्तथाच न ज्ञेयाभावाज्ज्ञानाभावसिद्धिरित्याह। न तर्हीति॥ ननु ज्ञेयस्य ज्ञानव्यतिरिक्तत्वमङ्गीक्रियते तथाचाभावस्य ज्ञानव्यतिरिक्तत्वादभावत्वादिकं सिद्ध्यति। ज्ञानस्य न ज्ञेयव्यतिरिक्तत्वं। तथाच ज्ञेयाभावे ज्ञानाभावसिद्धिरितिनिरुद्धगतिकः शङ्कते। ज्ञेयमिति॥ ज्ञानज्ञेयाव्यतिरेके ज्ञेयस्यापि तद्व्यतिरेकावश्यम्भावादन्यथोभयोरत्यन्तभेद एव स्यात्। भेदाभेदयोर्विरोधादनुपपत्तेरिति दूषयति। न शब्दमात्रत्वादिति। इदमुपलक्षणं। ज्ञानस्याभावाव्यतिरेकेण नित्यत्वादिकञ्च स्यादेवेत्यपि द्रष्टव्यं। यद्येतद्दोषपरिहाराय तस्यापि भेद एवाङ्गीक्रियते तर्हि न सुषुप्तौ ज्ञानाभावसिद्धिरित्युपसंहरति। ज्ञेयव्यतिरेके त्विति॥ सुषुप्ते ज्ञानस्यादर्शनादेवाभाव इत्याद्यं द्वितीयं शङ्कते। ज्ञेयाभाव इति॥ आलयविज्ञानसन्ततेर्नित्यत्वाङ्गीकारेण त्वया तदापि तदभावो वक्तुं न शक्यत इत्याह। न सुषुप्त इति॥ अस्तित्वमिति तथाच ज्ञानस्यादर्शनमसिद्धं सुषुप्ते

भा॰ स्वेनैवाविज्ञेयत्वे सर्व्वज्ञत्वहानिरिति चेत् सोऽपि दोषस्तस्यै-
वास्तु किन्तन्निवर्त्तनेनास्माकमनवस्थादोषश्च ज्ञानस्य ज्ञेय-
त्वाभ्युपगमादवश्यञ्चैव वैनाशिकानां ज्ञानं ज्ञेयं। स्वात्मना
चाविज्ञेयत्वेनानवस्थाऽनिर्व्वार्य्या। समान एवायं दोष इति
चेन्न। ज्ञानस्यैकत्वोपपत्तेः। सर्व्वदेशकालपुरुषाद्यवस्थमेक-
मेव ज्ञानं नामरूपाद्यनेकोपाधिभेदात् सवित्रादिजलादि-
प्रतिबिम्बवदनेकधावभासत इति। नाऽसौ दोषः। तथा
चेहेदमुच्यते। ननु श्रुतेरिहैवान्तःशरीरे परिच्छिन्नः

---

आ॰ ऽपि तदङ्गीकारादित्यर्थः। ननु ज्ञेयाभावेन त्वन्निरूपितस्य ज्ञान-
स्यादर्शनमित्युच्यते मया सुषुप्ते च स्वस्यैव स्वज्ञेयत्वाज्ज्ञान-
दर्शनमप्युपपद्यते अस्मिन्मते। त्वन्मते तु स्वज्ञेयत्वानङ्गीकारा-
त्सुषुप्ते चान्यस्याभावान्निरूपकाभावान्न ज्ञानदर्शनास्तित्वमुपप-
द्यत इति शङ्कते। तच्चापीति॥ अभावस्थले ज्ञानज्ञेययोर्भेदस्य
साधितत्वात्तद्दृष्टान्तेन सर्व्वत्र ज्ञानज्ञेययोर्भेदसाधनान्न स्वज्ञेयत्वं
ज्ञानस्येत्याह। न भेदस्येति॥ अभावरूपो ज्ञेयो विषयो
यस्य तस्य ज्ञानस्याभावरूपो यो ज्ञेयस्तद्व्यतिरिक्तादित्यर्थः।
अभावस्थले भेदेऽपि न सर्व्वत्रेत्याशङ्क्य न्यायस्य तुल्यत्वान्न तद-
न्यथाकर्त्तुं शक्यमित्याह। न हीति॥ ज्ञानस्य स्वव्यतिरिक्तज्ञेयत्व-
नियमपक्षेऽनवस्थां वैनाशिकः शङ्कते। ज्ञानस्येति॥ ज्ञेयस्य
स्वव्यतिरिक्तज्ञेयत्वनियमाङ्गीकारादस्मन्मते च ज्ञानस्य ज्ञेयत्वा-
नङ्गीकारान्न दोष इत्याह। न तदिति॥ सर्व्वस्य वस्तुजा-
तस्य विभागोऽसङ्करः ज्ञानं ज्ञानमेव न ज्ञेयं ज्ञेयमपि ज्ञेयमेव
न कदाचिदपि ज्ञानमित्येवंरूपस्तस्योपपत्तेरित्यर्थः। अथवा
द्विभागोपपत्तेरिति छेदः। ज्ञानज्ञेयरूपभागद्वयमेव राशि-
द्वयमेवाङ्गीक्रियते न तृतीयो ज्ञानविषयकज्ञानरूपो भाव-
राशिरङ्गीक्रियत इत्यर्थः॥ तामेवाह। यदा हीति॥ यस्मिन्पक्षे
ज्ञेयं सर्व्वं व्यतिरिक्तस्य कस्यचिज्ज्ञानस्य ज्ञेयमित्यङ्गीक्रियत
इति ज्ञेयपदाकृष्या व्यतिरिक्तस्येतिपदाध्याहारेण च यदाहीति

भा॰ कुण्डवदरवत्पुरुष इति। न। प्राणादिकलाकारणत्वात्। न हि शरीरमात्रपरिच्छिन्नस्य प्राणस्य श्रद्धादीनां कलानां कारणत्वं प्रतिपत्तुं शक्नुयात्। कलाकार्य्यत्वाच्च शरीरस्य। न हि पुरुषकार्य्याणां कलानां कार्य्यं सच्छरीरे कारणकारणं स्वस्य पुरुषं कुण्डवदरमिवाभ्यन्तरः कुर्य्यात् वीजवत्स्यादिति चेत्। यथा वीजकार्य्ये वृक्षस्तत्कार्य्यञ्च फलं स्वकारणकारणं वीजमभ्यन्तरीकरोत्याम्रादि तद्वत्पुरुषमभ्यन्तरीकुर्य्यात् शरीरं स्वकारणकारणमपीति चेन्न। अन्य-

---

आ॰ वाक्यं योऽन्यमवैनाशिकैरिति छेदः। तद्विषय इति ज्ञानविषयकज्ञानात्मक इत्यर्थः। तर्हि तत्पक्षे ज्ञानात्मकस्य ब्रह्मणः सर्व्वज्ञत्वं न स्यात् स्वेन स्वस्याज्ञानादिति शङ्कते। ज्ञानस्येति। ज्ञातुं योग्यस्य सर्व्वस्याज्ञाने हि सर्व्वज्ञत्वहानिः अन्यथा शशविषाणादेरज्ञानात्सर्व्वज्ञत्वं कस्यापि मते न स्यादतो नास्मन्मते तस्य दोषस्य प्राप्तिः किन्तु वैनाशिकस्यैव तेन ज्ञानस्यावश्यज्ञेयत्वाङ्गीकारात्स्वेन स्वस्य ज्ञेयत्वस्य सिद्धं हीति पूर्व्वपक्षे दूषितत्वादन्यज्ञेयत्वस्य चानङ्गीकारात्सर्व्वज्ञत्वयोगादित्यर्थः। सोऽपीति॥ तर्हि तव मते कथं सर्व्वज्ञत्वनिर्व्वाह इत्याशङ्क्यास्मन्मते तस्य मायिकत्वेन तदनिर्व्वाहेऽपि न दोष इत्याह। किन्त्विति॥ वस्तुतस्तु सर्व्वस्य व्यवहारहेतुज्ञानवत्त्वं सर्व्वज्ञत्वं तत्तु ज्ञानस्यापि स्वप्रकाशत्वेन स्वव्यवहारहेतुत्वादस्ति ज्ञातुं योग्यत्वं सर्व्वज्ञानादा तदस्तीति भावः। पूर्व्वोक्तानवस्थादोषोऽपि तस्यैवेत्याह। अनवस्थेति॥ ननु तेन स्वेनैव ज्ञेयत्वाङ्गीकारान्नानवस्थेत्यत आह॥ आत्मना चेति॥ सिद्धं हीत्यत्र स्वज्ञेयत्वासम्भवस्योक्तत्वात् परिशेषादन्यज्ञेयत्वे तस्य तस्याप्येवमित्यनवस्थाऽनिवार्य्येत्यर्थः। ज्ञानस्याज्ञेयत्वे तद्व्यवहारासिद्धिः ज्ञानान्तरज्ञेयत्वे चानवस्था तवापि स्यादिति शङ्कते। समान एवेति॥ स्वप्रकाशत्वेन स्वस्वव्यवहारसिद्धेर्ज्ञानभेदस्यैवास्माभिरनङ्गीकारादनवस्थायाः प्रसक्तिरेव नास्तीति परिहरति। न ज्ञानस्येति॥ एकत्वपक्षे भेदप्र-

भा॰ त्वात् सावयवत्वाच्च । दृष्टान्ते कारणवीजाद्वृक्षफलसंवृत्तान्यन्यान्येव वीजानि दार्ष्टान्तिके तु स्वकारणकारणभूतः स एव पुरुषः शरीरेऽभ्यन्तरीकृतः श्रूयते । वीजवृक्षादीनां सावयवत्वाच्च स्यादाधाराधेयत्वं निरवयवश्च पुरुषः सावयवाश्च कलाः शरीरञ्च एतेनाकाशस्यापि शरीराधारत्वमनुपपन्नं किमुताकाशकारणस्य पुरुषस्य तस्मादसमानो दृष्टान्तः । किन्दृष्टान्तेन वचनात् स्यादिति चेन्न । वचनस्याकारकत्वात् । न हि वचनं वस्तुनोऽन्यथाकरणे

---

व्या॰ तीतिमुपपादयति । नामरूपेति ॥ एवं चैतन्यस्यैकत्वेन नित्यत्वाज्जगद्भिन्नत्वेन तस्य सत्यत्वाच्चाधिष्ठानत्वोपपत्तेः । तस्मिन् कलानामध्यारोप आत्मप्रतिपत्त्यर्थमिहोच्यत इत्याह । तथा चेहेति ॥ चैतन्यस्य नित्यत्वेनाधिष्ठानत्वे सतीह श्रुताविदं कलानामध्यारोपणमुच्यत इत्यर्थः । ननु चैतन्यस्य न नित्यत्वं परिच्छेदश्रुतेः परिच्छिन्नस्य च घटादिवदनित्यत्वादिति शङ्कते । तेन चेति ॥ शरीरान्तरस्थत्वं प्रत्यक्त्वविवक्षयोच्यते न परिच्छेदविवक्षया तथा सत्युत्तरवाक्यविरोधादित्याह । नेति ॥ अयोग्यत्वादपि सोऽर्थो न विवक्षित इत्याह । कलेति ॥ स्वोत्पत्तेः पूर्वं स्वस्याभावात्तत्कालीनपुरुषं परिच्छेत्तुं न शक्तासीत्यर्थः । वीजकार्य्यस्य वृक्षस्य कार्य्यं फलं स्वकारणवृक्षकारणवीजमभ्यन्तरी करोतीति दृष्टमिति नायोग्यमिति शङ्कते । वीजवदिति ॥ तद्विवृणोति । यथेति ॥ दृष्टान्ते वीजव्यक्तिभेदादविरोधे यो हि पुरुषव्यक्त्यैक्यात्कारणाभ्यन्तरीभावयोर्विरोध इत्याह । नेति ॥ ननु कारणीभूतवीजस्यैव वृक्षफलतदन्तर्गतवीजरूपेण परिणामात्तयोः कारणकार्य्यवीजयोरैक्यमाशङ्क्य एवमपि तस्य सावयवत्वाद्वृक्षवत्फलाकारेण परिणतावयवेभ्यो भिन्नावयवानामेव तदन्तर्गतवीजरूपेण परिणामात्तयोर्भेदेनाधाराधेयभावः स्यात् इह तु निरवयवत्वान्न तथात्वमित्याह । सावयवत्वाच्चेति ॥ चाद्यं हेतुं विवृणोति । दृष्टान्त इति ॥ श्रूयत इति यस्मिन्नेताः

भा॰ व्याप्रियते किन्तर्हि यथाभूतार्थावद्योतने। तस्मादन्तः शरीर इत्येतद्वचनं अण्डस्यान्तर्व्योमेतिवच्च द्रष्टव्यं। उपलब्धिनिमित्तत्वाच्च। दर्शनश्रवणमननविज्ञानादिलिङ्गैरन्तः शरीरे परिच्छिन्न इव ह्युपलभ्यते चात उच्यते अन्तः शरीरे सोम्य स पुरुष इति। न पुनराकाशकारणः सन् कुण्डवदरवच्छरीरपरिच्छिन्न इति मनसापीच्छति वक्तुं मूढोऽपि किमुत प्रमाणभूता श्रुतिः। यस्मिन्नेताः षोडशकलाः प्रभवन्ती-

---

व्या॰ षोडशकला इति यच्छब्दोक्तस्यैव पुरुषस्यान्तःशरीरे सोम्य स पुरुष इति तच्छब्देनाभिधानादित्यर्थः॥ द्वितीयं हेतुं विवृणोति। वीजेति॥ निरवयवस्येति तथाचैकदेशेन कलादिरूपेण परिणाम एकदेशेन तत्रावस्थानं वीजवन्न सम्भवतीत्यर्थः। किञ्च कलानां सावयवत्वेन परिच्छेदात्पुरुषस्य तद्विपरीतत्वादपरिच्छिन्नस्य न परिच्छिन्नाधारकत्वं सम्भवतीत्याह। सावयवास्वेति॥ यद्वा सावयवत्वेन कार्य्यतया मृषात्वान्निरवयवतया परमार्थसत्यपुरुषाधारत्वं नोपपद्यत इत्याह। सावयवास्वेति॥ नन्वाकाशकार्य्यशरीरे आकाशस्यापरिच्छिन्नस्याभ्यन्तरीभावो दृष्ट इत्याशङ्क्य तस्यापि शरीराकारेणावस्थानमेव छिद्रादिविशिष्टस्यैव शरीरत्वान्न तु तदन्तस्थत्वमित्याह। एतेनेति॥ युक्त्यसहमपि वचनप्रामाण्यादङ्गीकार्य्यमिति शङ्कते। किं दृष्टान्तेनेति॥ वचनस्यापि वस्तुनोऽन्यथाकरणे सामर्थ्याभावाद्वस्तुस्वरूपाविरोधेनैव बोधकत्वादन्यथाविचारवैयर्थ्यादिरुद्धार्थो न बोधार्ह इत्याह। वचनस्येति॥ तर्ह्यन्तःशरीर इति श्रुतेः कथमुपपत्तिरित्याशङ्क्य पुरुषस्य शरीरोपादानत्वेन तदनुस्यूतस्य तदन्तर्गतत्वप्रतीतेस्तदभिप्रायेयं श्रुतिरिति सदृष्टान्तमाह। तस्मादिति॥ अण्डेत्यण्डकारणस्य व्योम्नो यथा तदनुस्यूतत्वेन तदन्तर्गतत्वप्रतीतिस्तद्वदित्यर्थः। यद्वा लोकभ्रमसम्बद्धं परिच्छिन्नत्वमनूद्यते श्रुत्येत्याह। उपलब्धीति॥ तत्राभिव्यक्तेर्वा तदन्तर्गतत्वव्यपदेश इत्याह। उपलभ्यते चेति॥ ननु यस्मिन्नेताः षोडशकलाः प्रभव-

उ॰ स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योति-

भा॰ त्युक्तं पुरुषविशेषणार्थं कलानां प्रभवः स चान्योऽर्थोऽपि श्रुतः केन क्रमेण स्यादित्यत इदमुच्यते। चेतनपूर्व्विका च सृष्टिरित्येवमर्थं च पुरुषः षोडशकलः पृष्टो यो भारद्वाजेन स ईक्षाञ्चक्रे ईक्षणं दर्शनं चक्रे कृतवानित्यर्थः। सृष्टिफल-क्रमादिविषयं कथमित्युच्यते कस्मिन् कर्तृविशेषे देहाद्-त्क्रान्त उत्क्रान्तो भविष्याम्यहमेव वा कस्मिन्वा शरीरे प्रतिष्ठितेऽहं प्रतिष्ठास्यामि प्रतिष्ठितः स्यामित्यर्थः॥ ३॥

नन्वात्माऽकर्त्ता प्रधानं कर्तृ अतः पुरुषार्थं प्रयोजन-मुररीकृत्य प्रधानं प्रवर्त्तते महदाद्याकारेण तत्रेदम-नुपपन्नं पुरुषस्य स्वातन्त्र्येणेक्षापूर्व्वकं कर्तृत्ववचनं सत्त्वादि-

आ॰ ष्वीत्यनेनाध्यारोपस्योक्तत्वात् स ईक्षामित्यादिना पुनःसृष्टिक-थनमधिकमित्यत आह। यस्मिन्निति॥ अत इति क्रमप्रति-पत्त्यर्थं स ईक्षामित्याद्युच्यत इत्यर्थः। तत्प्रतिपत्तिश्च कलोत्पत्ति-प्रतिपत्तिसौकर्य्याय विपर्य्ययेण तु क्रमत उपपद्यते चेति न्यायेन कार्य्यस्य स्वकारणक्रमेणापवादसौकर्य्यार्थञ्चेत्यर्थः॥ ईक्षणोक्तेः प्रयोजनमाह। चेतनेति॥ सृष्टीति॥ सृष्टिः प्राणादेः सृष्टिस्तस्या उत्क्रान्त्यादि फलं क्रमः प्राणाच्छ्रद्धामित्याद्युक्तानन्तर्य्यं। आदिश-ब्देन लोकेषु नाम चेत्याधाराधेयविशेषो गृह्यते। नन्वीक्षणोक्त्या न चेतनपूर्व्वकत्वसिद्धिः॥ ३॥

न्यायेन चेतनस्याकर्तृत्वेनाहेतुत्वेऽचेतनस्य प्रधानादेर्व्विक्रिया-वत्त्वेन हेतुत्वे सति ईक्षणस्यान्यथा नेयत्वादिति साङ्ख्याः प्राहुः। नन्वात्मेति॥ अकर्त्तेत्यस्य तत्रेदमित्यनेनान्वयः। आत्माऽकर्त्ता। तत्र तथा सतीदं कर्तृत्ववचनमनुपपन्नमित्यर्थः। किञ्च तस्य कर्तृत्वाङ्गीकारेऽपि कर्त्तुः कुलालादेरिव सहकारसाधनान्त-राभावादात्मनो दुःखाद्यनर्थहेतुप्राणादिसंसारकर्तृत्वानुपपत्तेः-

उ॰ रापः पृथिवीन्द्रियं । मनोऽन्नमन्नाद्वीर्य्यं तपो मन्त्राः कर्म्मलोका लोकेषु च नाम च ॥ ४ ॥

भा॰ गुणसाम्ये प्रधाने प्रमाणोपपन्ने सृष्टिकर्त्तरि सति ईश्वरेच्छानुवर्त्तिषु वा परमाणुषु सत्स्वात्मनोऽप्येकत्वेन कर्तृत्वसाधनाभावादात्मन आत्मन्यनर्थकर्तृत्वानुपपत्तेश्च। न हि चेतनावान् बुद्धिपूर्व्वकार्य्यात्मनोऽनर्थं कुर्य्यात्। तस्मात्पुरुषार्थेन प्रयोजनेनेच्छापूर्व्वकमिव नियतक्रमेण प्रवर्त्तमानेऽचेतने प्रधाने चेतनवदुपचारोऽयं स ईक्षाञ्चक्रे इत्यादिः। यथा राज्ञः सर्व्वार्थकारिणि भृत्ये राजेति तद्वत्। नात्मनो भोक्तृत्ववत्कर्तृत्वोपपत्तेः। यथा साङ्ख्यस्य चिन्मात्रस्यापरिणामिनोऽप्यात्मनो भोक्तृत्वं तद्वद्वेदवादिनामीक्षादिपूर्व्वकं

आ॰ स्यानुपपन्नं स्रष्टृत्ववचनमित्याह। आत्मनोऽपीति॥ कर्तृत्वेऽपीत्यपिशब्दान्वयः॥ तर्हि किं कर्तृ अत आह। प्रधानमिति॥ कर्त्रिति। क्रियाशक्तिवदतः प्रवर्त्तत इत्यन्वयः॥ ननु प्रधानस्याचेतनस्य प्रयोजनापेक्षाभावात् प्रवृत्त्यनुपपत्तिरित्यत आह। पुरुषार्थमिति॥ पुरुषस्य चेतनस्य भोगापवर्गरूपमर्थं प्रयोजनमुद्दिश्य प्रवर्त्तते वत्सविवृद्ध्यर्थमचेतनसार्थेन देहगतक्षीरस्य सस्यादिवृद्ध्यर्थमम्बुनश्चाचेतनस्य प्रवृत्तिदर्शनादित्यर्थः। ननु प्रधानस्याप्येकत्वेन सहकार्य्यभावात्कारणत्वानुपपत्त्यगत्या चेतनस्यैव कथंचित्कर्तृत्वं वाच्यमित्यत आह। सत्त्वादीति॥ सत्त्वादिगुणत्रयस्य साम्यावस्था प्रधानमिति साङ्ख्यमतं। तत्र सत्त्वादिगुणैरनेकात्मके प्रधाने कारणे सति पुरुषस्य कर्तृत्ववचनसङ्गतेरभावादनुपपन्नमित्यन्वयः। यदि चेतनानधिष्ठितस्याचेतनस्य प्रवृत्तिर्न दृष्टेति मन्यसे तर्हि परमाणुकारणवादोऽस्तु तत्रेश्वरस्याधिष्ठातुः सत्त्वादित्याह। ईश्वरे-

भा० जगत्कर्तृत्वमुपपन्नं श्रुतिप्रामाण्यात् । तत्त्वान्तरपरिणा-
मादात्मनोऽनित्यत्वाशुद्धत्वानेकत्वनिमित्तचिन्मात्रस्वरूप-
विक्रियातः पुरुषस्यात्मन्येव भोक्तृत्वे चिन्मात्रस्वरूपवि-
क्रिया न दोषाय । भवतां पुनर्वेदवादिनां सृष्टि-
कर्तृत्वे तत्त्वान्तरपरिणाम एवेत्यात्मनोऽनित्यत्वादिसर्व्व-
दोषप्रसङ्ग इति चेन्न । एकस्याप्यात्मनोऽविद्याविषयनाम-
रूपोपाध्यनुपाधिकृतविशेषाभ्युपगमादविद्याकृतनामरूपो-
पाधिकृतो हि विशेषोऽभ्युपगम्यते आत्मनो बन्धमोक्षा-
दिशास्त्रकृतसंव्यवहाराय परमार्थतोऽनुपाधिकृतञ्च तत्त्व-
मेकमेवाद्वितीयमुपादेयं सर्व्वतार्किकबुद्ध्यनवगाह्यमभयं
शिवमिष्यते न तत्र कर्तृत्वं भोक्तृत्वं वा क्रियाकारकफलञ्च

---

आ० च्छेति ॥ अत्रापि सत्त्विव्यस्यानुपपन्नमिति पूर्व्वेणान्वयः । तर्ही-
क्षणश्रवणस्य का गतिरत आह । तस्मादिति ॥ पुरुषार्थेनेति
पुरुषस्य भोगापवर्गार्थेनेत्यर्थः । मुख्ये ईक्षितरि अविद्यमाने न
नियतक्रमेण प्रवर्त्तमानत्वेन गुणेन योगादीक्षतेति गौणः प्रयोगः ।
माणवके पैङ्गल्यगुणयोगेनाग्निशब्दप्रयोगवदित्यर्थः । नन्वेवम-
पीक्षितरि प्रधाने पुरुषशब्दः कथमत आह । यथा राज्ञ इति ॥
वद्दिति पुरुषस्य भोगाय वर्गकारिणि प्राधाने पुरुषशब्द
औपचारिक इत्यर्थः । स्वतोऽकर्त्तुरपि आत्मनो मायोपाधिक-
कर्तृत्वं सम्भवतीति हृदि निधाय प्रथमं मायां ततः प्रतिवन्द्या
परिहरति । नेति ॥ बुद्धिकर्त्त्राभोक्ता पुरुष इति वदद्भिः
साङ्ख्यैरात्मनो भोक्तृत्वमुक्तमित्यर्थः । श्रुतिप्रामाण्यादिति श्रुत्यु-
क्तजगत्कर्तृत्वमविकारिणोऽपि कथञ्चिन्निर्वाह्यमित्यर्थः ॥ साङ्ख्यः
प्रतिवन्द्या परिहारं शङ्कते । तत्त्वान्तरेति ॥ भोगो नाम सुख-
दुःखानुभवः ॥ स च पुरुषस्य स्वरूपभूत इति न तत्त्वान्तरापत्ति-
लक्षणपरिणाम इत्यर्थः । परिणामो हि पूर्व्वरूपपरित्यागेन
रूपान्तरापत्तिः । सा च सजातीयरूपान्तरापत्ता विजातीयरू-

भा॰ स्याद्दैतत्वात्सर्व्वभावानां । साङ्ख्यास्त्वविद्याध्यारोपितमेव पुरुषे कर्त्तृत्वं क्रियाकारकं फलञ्चेति कल्पयित्वाऽऽगमवाह्यत्वात्पुनस्ततस्त्रस्यन्तः परमार्थत एव भोक्तृत्वं पुरुषस्येच्छन्ति तत्त्वान्तरञ्च प्रधानं पुरुषात् परमार्थवस्तुभूतमेव कल्पयन्तोऽन्यतार्किककृतवुद्धिविषयाः सन्तो विहन्यन्ते । तथेतरे तार्किकाः साङ्ख्यैरित्येवं परस्परविरुद्धार्थकल्पनात आमिषार्थिन इव प्राणिनोऽन्योन्यं विरुद्ध्यमाना अर्थदर्शित्वात् परमार्थतत्वात्तद्दूरमेवापकृष्यन्तेऽतस्तन्मतमनादृत्य वेदान्तार्थतत्त्वमेकत्वदर्शनं प्रत्यादरवन्तो मुमुक्षवः स्युरिति तार्किकमते दोषदर्शनं किञ्चिदुच्यतेऽस्माभिर्न तु तार्किकतात्पर्य्येण । तथैतदत्रोक्तं । विवदन्

आ॰ पान्तरापत्तौ वाऽनित्यत्वादिकमावश्यकमेवेति भोग्याविवेकोपाधिकं भोक्तृत्वमङ्गीकर्त्तव्यं ॥ तेन तदात्मककर्त्तृत्वेऽपि तुल्यमित्यभिप्रेत्य मुख्यपरिहारमाह । नेति ॥ एकस्य वस्तुनोऽसहायस्याकर्त्तुराप्तकामस्यापीत्यर्थः । उपाधिकृतकर्त्तृत्वसम्भवादविद्यारूपसहायस्य सम्भवाद्भ्रान्त्याऽस्माद्भिन्नजीवानामनाप्तकामानां सम्भवात्तत्पुरुषार्थार्थस्रष्टृत्वं तथाविधस्याप्युपपद्यत इति नाचेतनस्य चेतनाधिष्ठितस्य तद्युक्तमिति भावः । नामरूपेत्यनभिव्यक्तनामरूपेत्यर्थः । बन्धमोक्षादीत्यादिशब्देन तत्साधनमुच्यते । मोक्षस्यापि बन्धप्रतियोगित्वेन सोपाधिकत्वमुक्तं ॥ परमार्थस्य श्रुत्यैकगम्यत्वमाह । सर्व्वेति ॥ एवम्भूतस्यात्मनो न स्रष्टृत्वमित्याह । न तत्रेति । कल्पयित्वेति कल्पयितुं प्रवृत्ता इत्यर्थः । पुरुषस्य निर्विशेषत्वेन तस्मिन्वस्तुतः कर्त्तृत्वाद्ययोगात्तदारोपितमेवेति कल्पयितुं प्रवृत्ता अपि सर्व्वविरोधं निरासकागमप्रमाणैकशरणत्वाभावात्प्रत्यक्षादिविरोधापत्त्या आरोपितत्वाङ्गीकाराच्च त्रस्यन्तः सर्व्वं परमार्थत एवेच्छन्ति । तत्राप्यचेतनस्य भोक्तृत्वायोगात्तन्मात्रमात्मनोऽङ्गीकुर्व्वन्ति । कर्त्तृत्वादिकन्तु प्रधानस्याङ्गीकुर्व्वन्तीत्यर्थः । तर्हि

भा॰ खेऽवमिच्छिय विरोधोद्भवकारणं । तैः संरक्षितसद्बुद्धिः सुखं निर्व्वाति वेदवित् । किञ्च भोक्तृत्वकर्त्तृत्वयोर्विक्रिय-योर्विशेषानुपपत्तिः । का नामासौ कर्तृत्वाज्जात्यन्तरभूता भोक्तृत्वविशिष्टा विक्रिया यतो भोक्तैव पुरुषः कल्प्यते न कर्त्ता । प्रधानन्तु कर्त्तैव न भोक्त्रिति । नन्वुक्तं पुरुष-श्चिन्मात्र एव स्वात्मस्था विक्रियते भुञ्जानोऽनन्तत्वान्तर-परिणामेन । प्रधानन्तु तत्त्वान्तरपरिणामेन विक्रियतेऽतो ऽनेकमशुद्धमचेतनञ्चेत्यादिधर्म्मवत्तद्विपरीतः पुरुषः । ना ऽसौ विशेषो वाङ्मात्रत्वात्प्राग्भोगोत्पत्तेः । केवलचिन्मात्रस्य पुरुषस्य भोक्तृत्वं नामविशेषो भोगोत्पत्तिकाले चेज्जायते निवृत्ते च भोगे पुनस्तद्विशेषादपेतश्चिन्मात्र एव भवतीति

---

आ॰ तस्य को दोष इत्याशङ्क्य भोक्तृत्वाङ्गीकारे तथैव तस्यैव कर्तृत्वमपि स्यादित्यन्यैः शिक्षिताः सन्तः स्वमतात्प्रच्यवन्त इत्याह । अन्येति ॥ कृतायाः शिक्षिताया बुद्धेर्विषया अधीनाः शिक्षितबुद्धय इत्यर्थः । तर्हि साङ्ख्यशिक्षकस्य तार्किकस्य मतं ग्राह्यमत आह । तथेति ॥ तस्यापि साङ्ख्येन शिक्षितत्वान्न तदपि ग्राह्य-मित्यर्थः । तर्हि तस्य तार्किकस्य मतं ग्राह्यमित्याशङ्क्य न कस्या-पीत्याह । इत्येवमिति ॥ तर्हि त्वया तार्किकमतं किमर्थं दूष्यते । परस्परमेव तैर्दूषितत्वात्तव तद्वदेव द्वेषादिमत्त्वप्रसङ्गाच्चेत्याह । अत इति ॥ विरोधोद्भवकारणमिति पारमार्थिकतया भेददर्शन-मित्यर्थः । संरक्षितेति भेददर्शनस्य परस्परोक्तदोषग्रस्तत्वादद्वै-तमेव निर्दुष्टमिति निश्चितबुद्धिः सन्निर्वाति सर्व्वविकल्पेभ्य उपशान्तो भवतीत्यर्थः । दोषप्रदर्शनं हि किञ्चित्क्रियत इति यदुक्तं तदेव प्रपञ्चयन् कर्तृत्वादेरारोपितत्वमेव परेणापि वक्त-व्यमित्याह । किञ्चेत्यादिना ॥ तत्रादौ भोक्तृत्वकर्तृत्वयोर्विशेषस्य वक्तुमशक्यत्वात्तयोराश्रयव्यवस्थानं सम्भवतीत्याह । भोक्तृत्वेति ॥ आश्रयमविदान् शङ्कावसरोक्तं विशेषं शङ्कते । नन्विति ॥

भा॰ चेन्महदाद्याकारेण च परिणम्य प्रधानं ततोऽपेत्य पुनः प्रधानं स्वरूपेणावतिष्ठत इति । अस्यां कल्पनायां न कश्चिद्विशेष इति वाङ्मात्रेण प्रधानपुरुषयोर्विशिष्टविक्रिया कल्प्यते । अथ भोगकालेऽपि चिन्मात्र एव प्राग्वत्पुरुष इति चेन्न । तर्हि परमार्थतो भोगः पुरुषस्य भोगकाले चिन्मात्रस्य विक्रिया परमार्थैव तेन भोगः पुरुषस्येति चेन्न । प्रधानस्यापि भोगकालेऽविक्रियत्वाद्भोक्तृत्वप्रसङ्गः । चिन्मात्रस्यैव विक्रियाभोक्तृत्वमिति चेदौष्ण्याद्यसाधारणधर्मवतामग्न्यादीनामभोक्तृत्वे हेत्वनुपपत्तिः । प्रधानपुरुषयोर्द्वयो-

---

आ॰ स्वात्मस्थो विक्रियत इति चिद्रूपेण विक्रियत इत्यर्थः । तत्त्वान्तरेत्यनेकत्वाशुद्ध्यादियुक्तस्वविलक्षणमहदादिरूपेणेत्यर्थः । पुरुषस्य चिद्रूपेणैव परिणामान्न रूपान्तरापत्तिः अशुद्ध्यादिकं वा । प्रधानस्य स्वाकारान्तरेण परिणामात्पूर्वरूपत्यागादशुद्ध्यादिकं स्यादित्यर्थः । किञ्चिद्रूपेण परिणाम आगन्तुको वा न वा । आद्ये आगन्तुकविशेषवत्त्वेनानित्यत्वाद्यापत्त्या प्रधानादविशेषः । भोगानन्तरं पुनः स्वरूपावस्थानान्नानित्यत्वादिदोषश्चेत्प्रधानस्यापि प्रलये तथात्वाङ्गीकारान्न तयोर्विशेषः स्यादिति दूषयति । नासाविति ॥ सङ्ग्रहवाक्यं विवृणोति । प्रागिति ॥ अस्यां कल्पनायामिति चिद्रूपेण विक्रियाकल्पनायामपि विचार्यमाणेऽर्थतो न कश्चिदपि विशेषो लभ्यत इति तयोर्विशिष्टविक्रियेति वाङ्मात्रेणैव कल्प्यत उच्यत इत्यर्थः ॥ द्वितीयं शङ्कते । अथेति । चिन्मात्र एवेति न त्वागन्तुकरूपान्तरमित्यर्थः । तर्हि कर्मजन्यः कादाचित्को भोगो न सिद्ध्येदित्याह । न तर्हीति ॥ एतद्दोषपरिहारायागन्तुकं परिणाममङ्गीकृत्य भोगकालीनविक्रियामात्रं भोगः स च पुरुषस्यैव न प्रधानस्येति भोगसदसत्त्वविशेषमात्रेण शङ्कते । भोगकाल इति ॥ तत्रापि किं भोगकाले न विक्रियामात्रं भोगः उत तत्कालीनचिन्मात्रगतविक्रियावत्त्वं

भा॰ र्युगपद्भोक्तृत्वमिति चेन्न । प्रधानस्य पारमार्थ्यानुपपत्तेः । न हि भोक्त्रोर्द्वयोरितरेतरगुणप्रधानभाव उपपद्यते प्रकाशयोरिवेतरेतरप्रकाशने । भोगधर्म्मवति सत्त्वाङ्गिनि चेतसि पुरुषस्य चैतन्यप्रतिबिम्बादयोऽविक्रियस्य पुरुषस्य भोक्तृत्वमिति चेन्न । पुरुषस्य कस्यापनयनार्थं मोक्षसाधनं शास्त्रं प्रणीयतेऽविद्याध्यारोपितानर्थापनयनाय शास्त्रप्रणयनमिति चेत् परमार्थतः पुरुषो भोक्तैव न कर्त्ता प्रधानं कर्त्त्रेव न भोक्तृ परमार्थसद्वस्त्वन्तरं पुरुषाच्चेतीयं कल्पना ऽऽगमबाह्या व्यर्था निर्हेतुका च इति नादर्त्तव्या मुमुक्षुभिः । एकत्वेऽपि शास्त्रप्रणयनाद्यानर्थक्यमिति चेन्न । भावात् । स हि शास्त्रप्रणेत्रादिषु तत्फलार्थिषु च शास्त्रस्य

---

आ॰ भोग इति विकल्प्याद्ये भोगकाले प्रधानस्यापि सुखाद्याकारेण विक्रियावत्त्वाद्भोगः स्यादित्याह । नेति ॥ द्वितीयं शङ्कते । चिन्मात्रस्यैवेति ॥ चिन्मात्रस्यैव विक्रियेत्येवकारेण धर्म्यन्तरगतविक्रियानपेक्षाचैतन्यविक्रियाभोग इत्युच्यते वा चैतन्यमात्रगता तदसाधारणा विक्रिया भोग इति वा । नाद्यः । सुखादिरूपप्रधानविक्रियां विना भोगासिद्धेः । न द्वितीयः । चैतन्यासाधारणविक्रियाभोग इत्यत्र हेत्वभावात्स्वासाधारणविक्रियाभोग इति वक्तव्यं । तथाचातिप्रसङ्गः । सर्व्वस्यापि स्वासाधारणविक्रियावत्त्वात् । भोगकालीनासाधारणविक्रियावत्त्वं तु प्रधानस्याप्यस्ति ॥ तत्कालीनसुखादिविक्रियावत्त्वादि दूषयति । चोद्यमिति ॥ ननु भोगकालीना साधारणविक्रियैव भोगः । न चाग्न्यादेस्तत्काले नियमेन विक्रियास्ति । न च प्रधानस्यापि प्रसङ्गः इष्टापत्तेरिति शङ्कते । प्रधानेति ॥ भोक्ता हि शेषी भोगस्य शेषः । उभयोरपि भोक्तृत्वे शेषशेषिभावो न स्यादित्याह । नेति ॥ ननु भोगः सत्त्वगुणप्रधानचेतोरूपेण परिणतप्रकृतेरेव धर्म्मस्तस्या·

भा॰ प्रणयनमनर्थकं सार्थकञ्चेति कल्पना स्यात्। न ह्यात्मैकत्वे शास्त्रप्रणेत्रादयस्ततोऽभिन्नाः सन्ति तदभावे एवंविकल्पा नैवानुपपन्नाः। अभ्युपगते आत्मैकत्वे प्रमाणार्थश्चाभ्युपगतो भवता यदात्मैकत्वमभ्युपगच्छता। तदभ्युपगमे च कल्पनानुपपत्तिमाह शास्त्रं। यत्र त्वस्य सर्व्वमात्मैवाभूत्तत्केन कं पश्येदित्यादि शास्त्रप्रणयनाद्युपपत्तिश्चाह । अन्यत्र परमार्थ वस्तुस्वरूपादविद्याविषये यत्र हि द्वैतमिव भवतीत्यादि। विस्तरतो वाजसनेयके। अविभक्ते विद्याऽविद्ये परापरे इत्याद्यावेव शास्त्रस्यातो न तार्किकवादभट्टप्रवेशः। वेदान्त-

आ॰ विक्रियोपपत्तेः न पुरुषस्य तस्याविक्रियवत्त्वात्। न च तस्य भोगाभावप्रसङ्गस्तस्य तथाविधचित्तप्रतिबिम्बतत्त्वमात्रेण भोक्तृत्वव्यपदेश इति शङ्कते। भोगधर्म्मवतीति॥ सत्त्वाङ्गिनीति सत्त्वगुणोऽङ्गी प्रधानं यस्य तस्मिन् चेतसीत्यर्थः। तर्हि चित्तगतभोगेन चैतन्ये विशेषो जायते वा न वेति विकल्प्य न द्वितीय इत्याह। नेति॥ किं चास्मिन् पक्षे स्वकीयशास्त्रप्रणयनं च व्यर्थं स्यादित्याह। भोगरूपश्चेदिति॥ आद्ये सविशेषः सत्यो वाऽसत्यो वेति विकल्प्य सत्यविशेषवत्त्वे पुरुषस्य विकारित्वं स्यादिति मनसि सन्निधायास्यारोपितविशेषवत्त्वमस्तीत्याद्यं शङ्कते। अविद्येति॥ अनर्थेतिभोगरूपेत्यर्थः। तर्हि भोक्तृत्वविशेषवत्कर्त्तृत्वादिविशेषस्य प्रधानादेस्वारोपत्वमङ्गीकर्त्तुं युक्तं नार्द्धवैशसमस्मद्रीत्या बन्धमोक्षव्यवहारसिद्ध्युपपत्तेः। तथा कल्पनायां प्रयोजनाभावात् प्रमाणात् प्रत्युतसर्व्वश्रुतिविरोधापत्तेश्चेत्याह। परमार्थत इति॥ पुरुषाद्वस्त्वन्तरं च प्रधानमित्यन्वयः॥ उक्तदोषजातं साङ्ख्यस्य मतं मोक्षकामिना नादर्त्तव्यमिति ज्ञापनार्थमुक्तं न तु द्वेषपक्षपातादित्याशयेनाह। इति नादर्त्तव्यमिति।

आत्मैकत्वपक्षेऽपि निरसनीयबन्धाभावाच्छास्त्रप्रणयनानर्थक्यमिति शङ्कते। एकत्वेऽपीति॥ किमात्मैकत्वनिश्चयवन्तं प्रति

भा॰ राजप्रमाणवाक्‌गुप्ते इत्यात्मैकत्वविषय इति । एतेना-विद्याकृतनामरूपाद्युपाधिकृतानेकशक्तिसाधनकृतभेदवत्त्वा-द्ब्रह्मणः सृष्ट्यादिकर्त्तृत्वे साधनाद्यभावो दोषः प्रत्युक्तो वेदितव्यः परैरुक्त आत्मानर्थकर्तृत्वादिदोषश्च । यस्तु दृष्टान्तो राज्ञः सर्व्वार्थकारिणि कर्त्तर्य्युपचाराद्राजा कर्त्तेति सोऽत्रानुपपन्नः । स ईक्षाञ्चक्र इति श्रुतेर्मुख्यार्थ-बाधनात्प्रमाणभूतायाः । तत्र हि गौणी कल्पना शब्दस्य यत्र मुख्यार्थो न सम्भवति। इह त्वचेतनस्य मुक्तबद्धपुरु-षविशेषापेक्षया कर्तृकर्मदेशकालनिमित्तापेक्षया च बन्ध-

---

आ॰ तस्यानर्थक्यमुच्यते तद्विपरीतं प्रति वेति विकल्प्याद्यं प्रति प्रणय-नाभावादानर्थक्यदोषाभावमाह । नाभावादिति ॥ दोषापाद-नाभावादित्यर्थः । सकृद्वाक्यं विवृणोति । न ह्यात्मैकत्व इति ॥ निश्चित इति शेषः । तदभावे शास्त्रप्रणेत्राद्यभावे इयं कल्पने-वार्थवदनर्थकञ्चेति विकल्पनैवानुपपन्नेत्यर्थः। नैवानुपपन्नेति पाठे तु तदभाव इत्यनेनैकत्वनिश्चयाभावोऽभिधीयते*। तदानीं निर-सनीयबन्धादिसत्त्वादियं कल्पना बन्धनिवृत्त्यर्थं शास्त्रप्रणयनक-ल्पना नानुपपन्नेति योज्यं। किञ्चात्मैकत्वनिश्चये जाते तन्निश्चयज-नकत्वेन शास्त्रार्थवत्त्वस्य स्वानुभवसिद्धत्वात्तेनेयं शङ्का कर्त्तुमपि न शक्येत्याह । अभ्युपगत इति ॥ प्रमाणार्थ इति प्रमाणस्य शास्त्रस्यार्थः प्रयोजनमित्यर्थः । एकत्वनिश्चयवन्तं प्रति शास्त्रा-नर्थक्यकल्पनाभावः श्रुत्याप्युक्त इत्याह । तदभ्युपगमे चेति ॥ अत्राप्यभ्युपगमो निश्चयः । एकत्वनिश्चयाभावदशायान्तु निरस नीयारोपितबन्धसत्त्वान्नानर्थक्यं तदपि श्रुत्योक्तमित्याह । शास्त्र-प्रणयनेति॥ अनेन द्वितीयकल्पो निरस्तः । श्रुतिगतं यत्र पदं व्याचष्टे । अन्यत्रेति ॥ अथर्वणोऽपि मन्त्रोपनिषदि द्वे विद्ये वेदि-

---

* भावोऽभिधीयत इति पाठान्तरं।

भा॰ मोक्षादिफलार्था नियता पुरुषं प्रति प्रवृत्तिर्नोपपद्यते। यथोक्तसर्व्वेश्वरकर्तृत्वपक्षे तूपपन्ना ईश्वरेणैव सर्व्वाधिकारी प्राणः पुरुषेण सृज्यते। कथं स पुरुष उक्तप्रकारेणेक्षित्वा सर्व्वप्राणं हिरण्यगर्भाख्यं सर्व्वप्राणिकरणाधारमन्तरात्मानमसृजत सृष्टवान्। अतः प्राणात् श्रद्धां सर्व्वप्राणिनां शुभकर्म्मप्रवृत्तिहेतुभूतां। ततः कर्म्मफलोपभोगसाधनाधिष्ठानानि कारणभूतानि महाभूतान्यसृजत। खं शब्दगुणं वायुं स्वेन स्पर्शेन कारणगुणेन च विशिष्टं द्विगुणं। तथा ज्योतिः स्वेन रूपेण पूर्व्वा-

---

आ॰ तस्य इत्युपक्रम्यापरविद्या ऋग्वेदादिरूपा परा त्वदृश्यत्वादिगुणकप्रत्यक्षमितसर्व्वद्वैतवस्तुविषयेत्युक्त्या विद्याविद्ययोर्विषयभेदः शास्त्रस्यादावेव सूचित इत्याह। अत्र चेति॥ अद्वैतवादे सर्व्वशङ्कानां श्रुतिप्रामाण्येनैव निरासात्। तार्किकोत्प्रेक्षितशङ्कास्पदस्यापि नात्र प्रवेश इत्युपसंहरति। अत इति॥ राजप्रमाणेति प्रमाणराजेत्यर्थः। राजदन्तादित्वात्परनिपातः। वेदान्तप्रमाणमेव राजेव राजा तद्बाहवस्तदुक्तन्यायास्तैर्गुप्त आत्मैकत्वमेव विषय इव देश इव देशो रक्षणीयत्वात्स तार्किकभटैर्योधैर्न प्रवेश्य इत्यन्वयः॥ पूर्व्ववाद्युक्तं दोषं निराकरोति। एतेनेति॥ उपाधिकृता अनेकाः शक्तयः साधनानि च तत्कृतस्य भेदस्यानेकत्वस्य सत्त्वादित्यर्थः। आत्मेति आत्मनो योऽनर्थः संसारस्तत्कर्त्तृत्वमित्यर्थः। आदिशब्देनाप्तकामत्वेन प्रयोजनापेक्षा उपपत्तिः सङ्गृहीता। कल्पमायाः स्वव्यतिरिक्तस्य जीवस्य सत्त्वात्संसारो नात्मनः। तदीयकर्म्मफलदानार्थमाप्तकामस्यापि सृष्ट्यादिप्रवृत्तिः सम्भवति। संव्यवहारस्यापि स्वप्नतुल्यत्वाद्वा स्वप्न इव सर्व्वमप्युपपद्यत इति सूत्रभाष्यादावेव परिहृत इत्यर्थः। साङ्ख्येन स्वपक्षे पुरुषशब्दस्योक्तस्य चोपपत्तिरुक्ता तामनूद्य निराकरोति। यस्त्विति। यजमानः प्रस्तर इत्यादावुपचारो दृष्ट इत्याशङ्क्याह।

भा॰ भ्याञ्च विशिष्टं त्रिगुणं शब्दस्पर्शाभ्यां। तथाऽपो रसेन गुणेनासाधारणेन पूर्व्वगुणानुप्रवेशेन चतुर्गुणाः। तथा गुणेन पूर्व्वगुणानुप्रवेशेन पञ्चगुणा पृथिवी। तथा तैरेव भूतै-रारब्धमिन्द्रियं द्विप्रकारं बुद्ध्यर्थं कर्म्मार्थञ्च दशसङ्ख्यं। तस्य चेश्वरमतस्थं संशयसङ्कल्पादिलक्षणं मनः। एवं प्राणिनां कार्य्यं कारणञ्च सृष्ट्वा तत्स्थित्यर्थं व्रीहियवादिलक्षणमन्नं। ततस्तान्नाद्यमानाद्वीर्य्यं सामर्थ्यं बलं सर्व्वकर्म्मप्रवृत्तिसाधनं। तद्वीर्य्यवताञ्च प्राणिनां तयोर्व्विशुद्धिसाधनं सद्वीर्य्य-

---

आ॰ तत्र हि गौणीति॥ प्रधानपक्षे न केवलमीक्षाश्रुत्यनुपपत्तिः वस्तुतस्तु तस्य स्रष्टृत्वमपि न सम्भवतीत्याह। इह त्विति॥ मुक्तान् वर्जयित्वा बद्धान् प्रत्येव प्रवृत्तिः कृतकर्म्माद्यपेक्षया बन्धमोक्षादिशब्दितभोगापवर्गार्था व्यवस्थिता प्रवृत्तिर्नोपपद्यत इत्यर्थः॥ अनेन पुरुषार्थं प्रयोजनमुररीकृत्य प्रधानं प्रवर्त्तत इति यदुक्तं शङ्कावसरे तन्निरस्तं॥ ईश्वरकारणवादे तु न कोऽपि दोष इत्याह। यथोक्तेति॥ एवं परपक्षं निराकृत्य श्रुतिव्याख्यानं कुर्व्वन् स प्राणमसृजतेत्यस्य तात्पर्य्यार्थमाह ईश्वरेणैवेति। रासे-वेत्यर्थः॥ अक्षरार्थं प्रश्नपूर्व्वकमाह। कथमिति॥ हिरण्यगर्भाख्य-मिति हिरण्यगर्भ इत्याख्या येनोपाधिनाऽऽत्मनो भवति तं ब्रह्म-भिन्नं सर्व्वप्राणं समष्टिप्राणमित्यर्थः। यथाश्रुते कस्मिन्नहमुत्क्रान्त इत्यादिनाऽऽत्मन उत्क्रान्त्याद्युपाधिसृष्टेः प्रस्तुतत्वाद्धिरण्यगर्भस्य जीवस्य तथात्वादुपक्रमविरोधापत्तेः। हिरण्यगर्भाख्यमित्युक्ति-स्त्वात्मनो हिरण्यगर्भादिसंसारिभावोऽप्येतदुपाधिक इति सूच-यितुमिति बोध्यं॥ तस्य समष्टित्वमाह। सर्व्वेति॥ अन्तरात्मा-नमिति सर्व्वस्थूलशरीरान्तरत्वादात्मबुद्धिगोचरत्वाच्चान्तरात्मा स इत्यर्थः। तत इत्यानन्तर्य्यार्थेयं पञ्चमी। एवमुत्तरत्रापि। न च भूतकार्य्यत्वात्प्राणस्य कथं ततः पूर्व्वकालीनत्वमिति वाच्यं। सत्यं। सूक्ष्मभूतसृष्ट्यनन्तरं प्राणमसृजतेति कल्पनीयत्वात्। न चैतदनन्तरं

भा० माणानां मन्त्रास्तपोविशुद्धान्तर्बहिःकरणेभ्यः। कर्म्मसाधनभूता ऋग्यजुःसामाथर्वाङ्गिरसः। ततः कर्म्माग्निहोत्रादिलक्षणं। ततो लोकाः कर्म्मणां फलं। तेषु च सृष्टानां प्राणिनां नाम च देवदत्तो यज्ञदत्त इत्यादि। एवमेताः कलाः प्राणिनामविद्यादिदोषबीजापेक्षया सृष्टास्तैमिरिकदृष्टिसृष्टा इव द्विचन्द्रमशकमक्षिकाद्याः स्वप्नदृक्सृष्टा इव च

---

आ० भूतसृष्ट्युक्तिविरोधशङ्का। तस्याः पञ्चीकृतस्थूलभूतविषयत्वोपपत्तेः। अत एव भोगसाधनाधिष्ठानानीत्युक्तं। सूक्ष्माणां तथात्वायोगात्। न चैवमपि स्थूलभूतसृष्ट्यनन्तरमिन्द्रियमनःसृष्ट्युक्तिविरोधः। भूतारब्धदेहाधिष्ठितानामेव तेषां कार्य्यक्षमत्वेन तेषां तदनन्तरत्वोक्तिरिति भावः। भोगसाधनाधिष्ठानत्वमिति भावः॥ भूतानां सत्कारणत्वादित्याह। कारणभूतानीति॥ तेषां भूतानां लक्षणतया खशब्दगुणमित्यादिनाऽसाधारणगुणा उक्ताः। पूर्व्वपूर्व्वगुणानुवृत्तिस्तु पूर्व्वपूर्व्वस्योत्तरोत्तरोपादानत्वसूचनार्थं स्थौल्यतारतम्यसिद्ध्यर्थञ्चेति बोध्यं। वायुमिति श्रुतौ वायुरित्यादि प्रथमा द्वितीयार्थे। प्राणमसृजतेति द्वितीययोपक्रमात्। तैरेवेत्यपञ्चीकृतावस्थायामित्यर्थः। तस्य चेश्वरमिति नियामकमित्यर्थः। सङ्कीर्य्यमाणानामित्यविशुद्धसत्त्वतया पापाचरणेन तैः पापैः सङ्कीर्य्यमाणानां सङ्करपरिहाराय चित्तशुद्धिसाधनं तपोऽसृजतेत्यर्थः। फलमिति लोक्यते भुज्यत इति लोकः फलमित्यर्थः। नाम चेति सञ्ज्ञाऽऽदिनामोक्तव्यवहारासङ्करार्थमित्यर्थः। नन्वीश्वरसृष्टत्वोक्त्या कलानां सत्यत्वमङ्गीकर्त्तव्यं। आरोपे शुक्तिरजतादौ सृष्टत्वव्यवहाराभावादित्याशङ्क्याङ्गुल्यवष्टम्भनेक्षमर्द्दनादिना प्रयत्नेन सृष्टस्य द्विचन्द्रमशकमक्षिकादेरारोपत्वदर्शनात्। अथ रथान्रथयोगान् पथः सृजत इति सृष्टत्वेनोक्तस्वप्नपदार्थस्य च भ्रमत्वदर्शनान्मैवमित्याह। एवमेता इति॥ अविद्याकामकर्म्मादिदोषरूपं यद्बीजं तदपेक्षया तत्साधनीकृत्य-

उ॰ स यथेमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति भिद्येते तासां नामरूपे समुद्र इत्येवं प्रोच्यते । एवमेवास्य परिद्रष्टुरिमाः

---

भा॰ सर्व्वपदार्थाः पुनस्तस्मिन्नेव पुरुषे प्रलीयन्ते हित्वा नामरूपादिविभागं ॥ ४ ॥

कथं स दृष्टान्तः । यथा लोके इमा नद्यः स्यन्दमानाः स्रवन्त्यः समुद्रायणाः समुद्रमयनं गतिरात्मभावो यासां ताः समुद्रायणाः समुद्रं प्राप्योपगम्यास्तं नामरूपतिरस्कारं गच्छन्ति । तासाञ्चास्तं गतानां भिद्येते विनश्येते नामरूपे गङ्गायमुनेत्यादिलक्षणे । तदभेदे समुद्र इत्येवं प्रोच्यते । तद्वस्तूदकलक्षणमेवं यथाऽयं

---

आ॰ त्यर्थः । तैमिरिकशब्दो नेत्रेऽङ्गुल्यवष्टम्भाद्युपलक्षणार्थः ॥ ४ ॥

एवमात्मप्रतिपत्त्यर्थमध्यारोपमुक्त्वा तदपवादमवतारयति । पुनस्तस्मिन्नेवेति ॥ ग्रामादिवद्भेदेन गन्तव्यभ्रमं वारयति । आत्मभाव इति ॥ अस्तशब्देन नाशो नाभिधीयते भेदकोपाधिना नामरूपयोर्नाशेऽपि स्वरूपस्य समुद्रात्मना विद्यमानत्वादित्याह । नामरूपेति ॥ तिरस्कारमिति पूर्व्वरूपतिरस्कारमित्यर्थः । तद्वस्त्विति नामरूपनाशानन्तरं परिशिष्टमुदकलक्षणं वस्तु समुद्र इत्येवोच्यत इत्यन्वयः । पुरुषस्येति कर्म्मणि षष्ठी । पुरुषं स्वात्मरूपं परितः सर्व्वं स्वरूपेण पश्यत इत्यर्थः ॥ द्रष्टुरित्युक्ते आगन्तुकस्य कर्त्ता प्रतीयत इत्यत आह । दर्शनस्य कर्त्तुः स्वरूपभूतस्येति ॥ स्वरूपत्वे दर्शनस्य तत्र कर्त्तृत्वानुपपत्तेस्तदर्थे कर्तरि शिच्प्रत्ययविरोध इत्याशङ्क्याह । सर्व्वतःस्वप्रकाशक इत्यत्र यथा कार्त्तर्थकस्य प्रत्ययस्योपचरितत्वं तद्वदिहापीत्याह । यथार्क इति । नदीनामिवेति इवशब्दस्तथाशब्दार्थे । यथा नदीनां

उ॰ षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति
भिद्येते तासां नामरूपे पुरुष इत्येवं प्रोच्यते स
एषोऽकलोऽमृतो भवति तदेष श्लोकः ॥ ५ ॥
अरा इव रथनाभौ कला यस्मिन् प्रतिष्ठिताः।

भा॰ दृष्टान्तः। उक्तलक्षणस्य प्रकृतस्य पुरुषस्य परिद्रष्टुः परि-
समन्ताद्द्रष्टुर्दर्शनस्य कर्त्तुः स्वरूपभूतस्य। यथार्कः स्वात्म-
प्रकाशस्य कर्त्ता तद्वदिमाः षोडशकलाः प्राणाद्या उक्ताः
कलाः पुरुषायणा नदीनामिव समुद्रः पुरुषोऽयनमात्म-
भावगमनं यासां कलानां ताः पुरुषायणाः पुरुषं प्राप्य
पुरुषात्मभावमुपगम्य यथैवास्तं गच्छन्ति। भिद्येते तासां
नामरूपे कलानां प्राणाद्याख्या रूपञ्च। यथा स्वभेदे च
नामरूपयोर्यदनष्टं तत्त्वं पुरुष इत्येवं प्रोच्यते ब्रह्मविद्भिः।
य एवंविद्वान् गुरुणा प्रदर्शितकलः प्रलयमार्गः स एष
विद्यया प्रविलापितास्वविद्याकामकर्म्मजनितासु प्राणादि-

आ॰ समुद्रोऽयनं तथा पुरुषोऽयनमित्यन्वयः॥ अस्तगमनस्वरूपमाह।
भिद्येते इति॥ नामरूपभेद एवास्तगमनमित्यर्थः। यथैवास्त-
मिति यस्य यत्स्वरूपं प्राणाद्यात्मकं तदपि भिद्यत इत्यन्वयः।
पुरुष इत्येवं प्रोच्यत इत्यस्यार्थमाह। स्वभेदे चेति॥ यदनष्ट-
मिति कलानां हि रूपमारोप्याधिष्ठानोभयात्मकं सत्यानृत-
मिथुनरूपं तत्रारोप्यस्य नामरूपात्मकस्य भेदेऽधिष्ठानात्मक
रूपपुरुषात्मनोच्यत इत्यर्थः। यथा समुद्रस्वरूपभूतं जलं मेघ-
राद्यवस्थाभिरुक्तं गङ्गादिनामरूपोपाधिना समुद्राद्भिन्नमिव
व्यवह्रियमाणं तदुपाधिविगमे समुद्रस्वरूपमेव प्रतिपद्यते। एव-
मविद्याकृतनामरूपोपाधिवशादात्मनो भिन्नमिव स्थितं सर्व्वं

उ० तं वेद्यं पुरुषं वेद यथा मा वो मृत्युः परिव्यथा इति ॥ ६ ॥

तान् होवाचैतावदेवाहमेतत्परं ब्रह्म वेद ।

---

भा० कलाख्यकलोऽविद्याकृतकलानिमित्तो हि मृत्युस्तदपगमे ऽकलत्वादेवामृतो भवति तदेतस्मिन्नर्थे एष श्लोकः ॥ ५ ॥ अरा रथचक्रपरिवारा इव रथनाभौ रथचक्रस्य नाभौ यथा प्रवेशितास्तदाश्रया भवन्ति यथा तथेत्यर्थः । कलाः प्राणाद्या यस्मिन् पुरुषे प्रतिष्ठिता उत्पत्ति-स्थितिलयकालेषु तं पुरुषं कलानामात्मभूतं वेद्यं वेद-नीयं पूर्णत्वात्पुरुषं पुरिशयनाद्वा वेद जानीयात् । यथा हे शिष्या वो युष्मान्मृत्युर्मा परिव्यथाः मा परिव्यथयतु । व्यथामापन्ना दुःखिन एव यूयं स्थ अतस्तन्माभूद्युष्माक-मित्यभिप्रायः ॥ ६ ॥

तानेवमनुशिष्य शिष्यान् तान्होवाच पिप्पलादः किले-

---

आ० जगद्बिद्यया ऽविद्याकृतनामरूपविगमे ब्रह्ममात्रतयाऽवशिष्यत इत्यर्थः । एवं प्राणादिकलोपाधिक आत्मन उत्क्रमणादिशब्दित-मरणादिव्यवहार इत्युक्तेः । प्रयोजनं प्राणादिनिमित्तावुत्क्रम-णादिसर्व्वसंसारधर्म्मरहितात्मस्वरूपावस्थानं रूपं दर्शयितुं स एष इति वाक्यं व्याचष्टे । य एवं विद्वानित्यादिना ॥ परिवारा इति नाभेः परितो नाभौ नेम्याश्च प्रोतास्तिर्य्यक्काष्ठविशेषा इत्यर्थः । यथा प्रवेशिता इति यथावत्सम्यक्प्रवेशिता इत्यर्थः । मोक्षोऽर्थव्यतिरेकप्रदर्शनेन स्पष्टयति न चेदिति ॥ ५ । ६ ।

शिष्याणां कृतार्थतावुद्धिजननार्थं तानित्यादिवाक्यं व्याचष्टे ।

उ॰ नातः परमस्तीति ॥ ७ ॥ ते तमर्चयन्तस्त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसीति । नमः परमऋषिभ्यो नमः परमऋषिभ्यः ॥ ८ ॥ इति षष्ठप्रश्नः समाप्तः ॥ ६ ॥ इति प्रश्नोपनिषत् समाप्ता ॥ ॐ तत् सत् ॥ हरिः ॐ ॥

भा॰ तावदेव वेद्यं परं ब्रह्म वेद विजानाम्यहमेतत् नातोऽस्मात्परमस्ति प्रकृष्टतरं वेदितव्यमित्येवमुक्तवान् शिष्याणामविदितशेष्यास्तित्वाशङ्कानिवृत्तये कृतार्थबुद्धिजननार्थञ्च । ततस्ते शिष्या गुरुणाऽनुशिष्टास्तं गुरुं कृतार्थाः सन्तो विद्यानिष्क्रियमपश्यन्तः किं कृतवन्त इत्युच्यते । अर्चयन्तः पादयोः पुष्पाञ्जलिप्रकिरणेन प्रणिपातेन च शिरसा किमूचुरित्याह । त्वं हि नोऽस्माकं पिता ब्रह्मशरीरस्य विद्यया जनयितृत्वान्नित्यस्याजरामरस्याभयस्य । यस्त्वमेवास्माकमविद्याया विपरीतज्ञानाज्जन्मजरामरणरोगदुःखादिग्राहादविद्यामहोदधेर्विद्याप्लवेन परमपुन-

आ॰ तानेवमिति ॥ प्रकिरणेनेति प्रक्षेपेणेत्यर्थः । अतः पितृत्वं तवेति । जनकश्चोपनेता च यश्च विद्यां प्रयच्छति । अन्नदाता भयत्राता पञ्चैते पितरः स्मृता इति स्मृतेरित्यर्थः ॥ नोऽस्माकमिति हेतूक्तेस्तात्पर्य्यं वदन् पितृत्वोक्तिमात्रेण विद्यानिष्क्रियार्थं किं दत्तमित्यपेक्षायां स्वशरीरमेव परिचारकतया दासभावेन गुरवे दत्तमित्याह । इतरस्मादिति ॥ पितृत्वादेव किं पूज्यतरत्वे परिचार्य्यत्वं । स्वामित्वं किमु वक्तव्यमित्यर्थः अत एव वाजसनेयके

भा० रावृत्तिलक्षणं मोक्षाख्यं महोदधेरिव पारं तारयस्यस्मान् प्रति । अतः पितृत्वं तवास्मान् प्रत्युपपन्न इतरस्मात् । इतरोऽपि हि पिता शरीरमात्रं जनयति तथापि सम्प्रपूज्य-तमो लोके किमु वक्तव्यमात्यन्तिकाभयदातुरित्यभि-प्रायः । नमः परमऋषिभ्यो ब्रह्मविद्यासम्प्रदायकर्तृभ्यो नमः परमऋषिभ्य इति । द्विर्वचनमादरार्थं ॥ ७ ॥ ८ ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्रा-जकाचार्य्यस्य श्रीमच्छङ्करभगवतः कृतावाथर्व्वणप्रश्नोपनि-षद्भाष्यं समाप्तं ॥ ॐ तत्सत् ॥

---

आ० माय्यापि सह दास्यायेति युक्तमिति भावः ॥ ७ ॥ ८ ॥ इति श्रीम-त्परमहंसपरिव्राजकाचार्य्यश्रीमदानन्दज्ञानविरचिता आथर्व्व-णिकप्रश्नोपनिषद्भाष्यटीका समाप्ता ॥ हरिः ॐ ॥

K 2

अथर्व्ववेदीयमुण्डकोपनिषद्भाष्यं ॥

भा० ॐ ब्रह्मणे नमः ॥ ॐ ब्रह्मा देवानामित्याद्याथर्व्वणो-
पनिषत्। अस्याश्च विद्यासम्प्रदायकर्त्तृत्वपारम्पर्य्यलक्षणमम्ब-
न्धमादावेवाह स्वयमेव स्तुत्यर्थं। एवं हि महद्भिः परम
पुरुषार्थसाधनत्वेन गुरुणाऽऽयासेन लब्धा विद्येति श्रोतृ-
बुद्धिप्ररोचनाय विद्यां महीकरोति। स्तुत्या प्ररोचितायां
हि विद्यायां सादराः प्रवर्त्तेयुरिति। प्रयोजनेन

॥ अथर्व्ववेदीयमुण्डकोपनिषद्भाष्यटीका ॥

आ० ॐ ब्रह्मणे नमः ॥ यदक्षरं परं ब्रह्म विद्यागम्यमितीरितं
यस्मिन् ज्ञाते भवेज्ज्ञातं सर्व्वं तत्स्यामसंशयं ॥ १ ॥

ब्रह्मोपनिषद्भ्योपनिषदाद्या आथर्व्वणवेदस्य बह्व्य उपनिषदः
सन्ति। तासां शारीरकेऽनुपयोगित्वेनाव्याचिख्यासितत्वादष्टमत्वा-
दिगुणकधर्म्मोक्तेरित्याद्यधिकरणोपयोगितया मुण्डकस्य व्याचिख्या-
सितस्य प्रतीकमादत्ते। ब्रह्मा देवानामित्याद्याथर्व्वणोपनिषदिति
व्याचिख्यासितेति शेषः। नन्वियमुपनिषन्मन्त्ररूपा मन्त्राणा-
मिषेत्वेत्यादीनां कर्म्मसम्बन्धेनैव प्रयोजनवत्त्वं। एतेषाञ्च मन्त्राणां
विनियोजकप्रमाणानुपलम्भेन तत्सम्बन्धासम्भवान्निष्प्रयोजनत्वा-
द्व्याचिख्यासितत्वं न सम्भवतीति शङ्कमानस्योत्तरं। सत्य-
कर्म्मसम्बन्धाभावेऽपि ब्रह्मविद्याप्रकाशनसामर्थ्याद्विद्यया सम्बन्धो
भविष्यति ॥ ननु विद्यायाः पुरुषकर्त्तृत्वात्तत्प्रकाशकत्वेऽस्या
उपनिषदोऽपि पौरुषेयत्वप्रसङ्गात् प्रासङ्गिकपुरुषदोषजत्वशङ्कयाऽ-
प्रामाण्याद्व्याचिख्यासितत्वं नोपपद्यत इत्याह। अस्याश्चेति।
विद्यायाः सम्प्रदायप्रवर्त्तका एव पुरुषा न तूत्प्रेक्षया निर्म्मातारः
सम्प्रदायकर्त्तृत्वमपि नाधुनातनं येनानाश्वासः स्यात् किन्त्वना-
दिपारम्पर्य्यागतं। ततोऽनादिप्रसिद्धब्रह्मविद्याप्रकाशनसमर्थो-
पनिषदः पुरुषसम्बन्धः सम्प्रदायकर्त्तृत्वपारम्पर्य्यलक्षण एव
तमादावेवाहेत्यर्थः। विद्यासम्प्रदायकर्त्तृत्वमेव पुरुषाणां। यथा

भा० तु विद्यायाः साधनसाध्यलक्षणसम्बन्धमुत्तरत्र वक्ष्यति भिद्यते हृदयग्रन्थिरित्यादिना। अत्र चापरशब्दवाच्यायामृग्वेदादिलक्षणायां विधिप्रतिषेधमात्रपरायां विद्यायां संसारकारणाविद्यादिदोषनिवर्त्तकत्वं नास्तीति स्वयमेवोक्ता परापरेति विद्याभेदकरणपूर्व्वकमविद्यायामन्तरे वर्त्तमाना इत्यादिना। तथा परप्राप्तिसाधनं सर्व्वसाधन-

आ० विद्यायाः पुरुषसम्बन्धस्तर्ह्युपनिषदोऽपि। यदि पुरुषसम्बन्धो विवक्षितः पौरुषेयत्वपरिहाराय तर्हि तथाभूतसम्बन्धाभिधायकेनान्येन भवितव्यं स्वयमेव स्वसम्बन्धाभिधायकत्वे चात्माश्रयप्रसङ्गादित्याशङ्क्याह स्वयमेव स्तुत्यर्थमिति॥ विद्यास्तुतौ तात्पर्य्यान्न स्ववृत्तिदोष इत्यर्थः॥ स्तुतिर्वा किमर्थेत्यत आह श्रोतृबुद्धीति॥ प्रवर्त्तरन्निति पाठो युक्तः। वृतधातोरात्मनेपदत्वाद्विद्याया यत्प्रयोजनं तदेवास्या उपनिषदोऽपि प्रयोजनं भविष्यतीत्यभिप्रेत्य विद्यायाः प्रयोजनसम्बन्धमाह। प्रयोजनन्त्विति॥ संसारकारणनिवृत्तिर्ब्रह्मविद्याफलं चेत्तर्ह्यपरविद्यैव तन्निवृत्तेः सम्भवात्तदर्थं ब्रह्मविद्याप्रकाशकोपनिषद्व्याख्यातव्येत्याशङ्क्याह। अत्र चेति॥ संसारकारणमविद्यादिदोषस्तन्निवर्त्तकत्वमपरविद्यायाः कर्म्मात्मिकाया न सम्भवत्यविरोधात्। न हि शतशोऽपि प्राणायामं कुर्व्वतः शुक्तिदर्शनं विना तदविद्यानिवृत्तिर्दृश्यते। ततोऽपरविद्यायाः संसारकारणाविद्यानिवर्त्तकत्वं नास्तीति स्वयमेवोक्ता ब्रह्मविद्यामाहेति सम्बन्धः। किञ्च परमपुरुषार्थसाधनत्वेन ब्रह्मविद्यायाः परविद्यात्वं निकृष्टसंसारफलत्वेन च कर्म्मविद्याया अपरविद्यात्वं। ततः समाख्याबलादपरविद्याया मोक्षसाधनत्वाभावोऽवगम्यत इत्यभिप्रेत्याह। परापरेति॥ यच्चाहुः कर्म्मजडाः केवलब्रह्मविद्यायाः कर्तृसंस्कारत्वेन कर्म्माङ्गत्वात्स्वातन्त्र्येण पुरुषार्थसाधनत्वं नास्तीति तदनेनाप्रयुक्तमेव निराकृतमित्याह। तथा परप्राप्तिसाधनमिति॥ ब्रह्मविद्यायाः कर्म्माङ्गत्वे कर्म्मणो निन्दा न स्यात् न ह्यङ्गविधानाय प्रधानं विनिन्द्यते। अत्र तु सर्व्वसाध्यसाधननिन्दया तद्विषयवैराग्याभि-

भा० साध्यविषयवैराग्यपूर्व्वकं गुरुप्रसादलभ्यां ब्रह्मविद्यामाह परीक्ष्य लोकानित्यादिना। प्रयोजनञ्चास्मन्नद्ब्रवीति ब्रह्मविद्ब्रह्मैव भवतीति। परामृतात्परिमुच्यन्ति सर्व्वे इति च। ज्ञानमात्रे यद्यपि सर्व्वाश्रमिणामधिकारस्तथापि सन्न्यासनिष्ठैव ब्रह्मविद्या मोक्षसाधनं न कर्म्मसहितेति भैक्षचर्य्याञ्चरन्तः सन्न्यासयोगादिति च ब्रुवन्दर्शयति। विद्याकर्म्म-

---

आ० धानपूर्व्वकं परप्राप्तिसाधनं ब्रह्मविद्यामाह। विषयवैराग्यपूर्व्वकमिति। अतो ब्रह्मविद्यायाः स्वप्रधानत्वात्प्रकाशकोपनिषदां न कर्त्तृस्तावकत्वमित्यर्थः॥ यद्युपनिषदां स्वतन्त्रब्रह्मविद्याप्रकाशकत्वं स्यात्तर्हि तदध्येतृणां सर्व्वेषामेव किमिति ब्रह्मविद्या न स्यादित्याशङ्क्याह। गुरुप्रसादलभ्यामिति। गुर्व्वनुग्रहादिसंस्काराभावात्सर्व्वेषां यद्यपि न भविष्यति तथापि विशिष्टाधिकारिणां भविष्यतीति भावः॥ ननु स्वतन्त्रा चेद्ब्रह्मविद्या तर्हि प्रयोजनसाधनं न स्यात्। सुखदुःखप्राप्तिपरिहारयोः प्रवृत्तिनिवृत्तिसाध्यतावगमात्तत्राह। प्रयोजनञ्चेति॥ स्मरणमात्रेण विस्मृतसुवर्णलाभे सुखप्राप्तिप्रसिद्धेः रज्जुतत्त्वज्ञानमात्राच्च सर्पजन्यभयकम्पादिदुःखनिवृत्तिप्रसिद्धेश्च न प्रवृत्तिनिवृत्तिसाध्यत्वं प्रयोजनस्यैकान्तिकं अतो विस्रब्धं श्रुतिः प्रयोजनसम्बन्धं विद्याया असकृद्ब्रवीति। तस्मात्तत्प्रकाशकोपनिषदो व्याख्येयत्वं सम्भवतीत्यर्थः। यच्चाऽऽहुरेकदेशिनः स्वाध्यायाध्ययनविधेरर्थावबोधफलस्य त्रैवर्णिकाधिकारत्वादधीतोपनिषज्जन्ये ब्रह्मज्ञानेऽस्यैव सर्व्वेषामधिकारः। ततः सर्व्वाश्रमकर्म्मसमुच्चितैव ब्रह्मविद्या मोक्षसाधनमिति तत्राह। ज्ञानमात्र इति॥ सर्व्वस्वत्यागात्मकसन्न्यासनिष्ठैव परब्रह्मविद्या मोक्षसाधनमिति वेदो दर्शयति। तादृशसन्न्यासिनां च कर्म्मसाधनस्याभावान्न कर्म्मसम्भवः। आश्रमधर्म्मोऽपि शमदमाद्युपबृंहितविद्यासन्निष्ठत्वमेव। तेषां शौचाचमनादिरपि तत्त्वतो नाश्रमधर्म्मो लोकसङ्ग्रहार्थत्वात्। ध्यानाभ्यासेनैवाऽपावनत्वनिवृत्तेः। न हि ध्यानेन सदृशं पवित्रमिह विद्यते इति स्मरणात्। त्रिषवणस्नानविध्यादेरप्रस-

भा॰ विरोधाच्च। न हि ब्रह्मात्मैकत्वदर्शनेन सह कर्म्म स्वप्नेऽपि सम्पादयितुं शक्यं। विद्यायाः कालविशेषाभावानियतनिमित्तत्वात्कालकर्म्मसङ्कोचानुपपत्तिः। यत्तु गृहस्थेषु ब्रह्मविद्यासम्प्रदायकर्त्तृत्वादिलिङ्गं न तत्स्थितन्यायं बाधितुमुत्सहते। न हि विधिशतेनापि तमःप्रकाशयोरेकत्र सम्भवः शक्यते कर्त्तुं किमुत लिङ्गैः केवलैरिति। एवमुक्तसम्बन्धप्रयोजनाया उपनिषदोऽल्पग्रन्थविवरणमारभ्यते। य इमां ब्रह्मविद्यामुपयन्त्यात्मभावेन श्रद्धाभक्तिपुरःसराः सन्तस्तेषां गर्भजन्मजरारोगाद्यनर्थपूगं निशातयति परं वा ब्रह्म गमयत्यविद्यादिसंसारकारणञ्चात्यन्तमवसादयति विनाशयतीत्युपनिषत्। उपनिपूर्व्वस्य सदेरेवमर्थस्मरणात्।

व्या॰ न्यासिविषयत्वात्। अतः कर्म्मनिवृत्त्यैव साहित्यज्ञानस्य न कर्म्मणेत्यर्थः। इतश्च न कर्म्मसमुच्चिता विद्या मोक्षसाधनमित्याह। विद्याकर्म्मविरोधाच्चेति॥ अकर्त्तृ ब्रह्मैवास्मि करोमि चेति स्फुटो व्याघात इत्यर्थः। यदा ब्रह्मात्मैकत्वं विस्मरति तदोत्पन्नविद्योऽपि किं करिष्यति ततः समुच्चयः सम्भाव्य इति न वाच्यमित्याह। विद्याया इति॥ ननु गृहस्थानामङ्गिरःप्रभृतीनां विद्यासम्प्रदायप्रवर्त्तकत्वदर्शनाद्गृहस्थाश्रमकर्म्मभिः समुच्चयो लिङ्गादवगम्यत इत्याशङ्क्याह। यत्त्विति॥ लिङ्गस्य न्यायोपबृंहितस्यैव गमकत्वाङ्गीकारात्समुच्चये च न्यायाभावात्प्रत्युत विरोधदर्शनान्न लिङ्गेन समुच्चयसिद्धिः। सम्प्रदायप्रवर्त्तकानाञ्च गार्हस्थ्यस्याभासमात्रत्वानुसन्धानेन मुहुर्मुहुर्बाधात्। यस्य मे नास्ति सर्व्वत्र यस्य मे नास्ति किञ्चन। मिथिलायां प्रदीप्तायां न मे किञ्च न दह्यत इत्युद्गारदर्शनात्कर्म्माभासेन न समुच्चयः स्यात्तच्च विधिर्न दृश्यत इति भावः॥ साधितं व्याख्येयत्वमुपसंहरति। एवमिति॥

अथर्व्ववेदीयमुण्डकोपनिषदारम्भः ॥

उ॰ ॥ ॐ ॥ ब्रह्मा देवानां प्रथमः सम्बभूव विश्वस्य कर्त्ता भुवनस्य गोप्ता । स ब्रह्मविद्यां सर्व्वविद्या-

भा॰ ब्रह्मा परिवृद्धो महान् धर्म्मज्ञानवैराग्यैश्वर्य्यैः सर्व्वानन्यानतिशयेनेति । देवानां द्योतनवतामिन्द्रादीनां प्रथमो गुणैः प्रधानः सन् प्रथमोऽग्रे वा सम्बभूवाभिव्यक्तः सम्यक् स्वातन्त्र्येणेत्यभिप्रायः । न तथा यथा धर्म्माधर्म्मवशात् संसारिणोऽन्ये जायन्ते । योऽसावतीन्द्रियग्राह्य इत्यादिस्मृतेः । विश्वस्य सर्व्वस्य जगतः कर्त्तोत्पादयिता । भुवनस्योत्पन्नस्य गोप्ता पालयितेति विशेषणं ब्रह्मणो विद्यास्तुतये । स एवं प्रख्यातमहत्त्वो ब्रह्मविद्यां ब्रह्मणः परमात्मनो विद्यां ब्रह्मविद्यां येनाक्षरं पुरुषं वेद सत्यमिति विशेषणात् । परमात्मविषया हि सा । ब्रह्मणा वाऽग्रजेनोक्तेति ब्रह्मविद्या । तां सर्व्वविद्याप्रतिष्ठां सर्व्वविद्याभिव्यक्तिहेतुत्वात्सर्व्वविद्याश्रयामित्यर्थः । सर्व्वविद्यावेद्यं वा

आ॰ ग्रन्थे कथमुपनिषच्छब्दप्रयोग इति शङ्कायामुपनिषच्छब्दवाच्यविद्यार्थत्वात्लाक्षणिक इति दर्शयितुं विद्याया उपनिषच्छब्दार्थत्वमाह । य इमामिति ॥ आत्मभावेनेति प्रेमास्पदतयेत्यर्थः । अनर्थपूगं क्लेशसमूहं निशातयति शिथिलीकरोति अपरिपक्वाश्चामाद्भिर्जन्मभिर्मोक्षासम्भवादित्यर्थः । ज्ञानमप्रतिघं यस्य वैराग्यञ्च जगत्पतेः । ऐश्वर्य्यञ्चैव धर्म्मश्च सह सिद्धं चतुष्टयमिति स्मरणाद्धर्म्मज्ञानवैराग्यैश्वर्यः सर्व्वानन्यान-

उ० प्रतिष्ठामथर्व्वाय ज्येष्ठपुत्राय प्राह ॥ १ ॥ अथर्व्वणे यां प्रवदेत ब्रह्माथर्व्वा तां पुरोवाचाङ्गिरे ब्रह्मविद्यां । स भारद्वाजाय सत्यवाहाय प्राह भारद्वाजोऽङ्गिरसे परावरां ॥ २ ॥

भा० वस्त्वनयैव विज्ञायत इति । येनाश्रुतं श्रुतं भवति अमतं मतमविज्ञातं विज्ञातमिति श्रुतेः । सर्व्वविद्याप्रतिष्ठामिति च स्तौति । विद्यामथर्व्वाय ज्येष्ठपुत्राय प्राह । ज्येष्ठश्चासौ पुत्रश्चानेकेषु ब्रह्मणः सृष्टिप्रकारेष्वन्यतमस्य सृष्टिप्रकारस्य प्रमुखे पूर्व्वमथर्व्वा सृष्ट इति ज्येष्ठस्तस्मै ज्येष्ठपुत्राय प्राह ॥ १ ॥ यामेतामथर्व्वणे प्रवदेत अवदत् ब्रह्मविद्यां ब्रह्मा तामेव ब्रह्मणः प्राप्तामथर्व्वा पुरा पूर्व्वमुवाचोक्तवानङ्गिरे अङ्गिर्नाम्ने ब्रह्मविद्यां । स चाङ्गीर्भारद्वाजाय भारद्वाजगोत्राय सत्यवाहाय सत्यवाहनाम्ने प्राह प्रोक्तवान् । भारद्वाजोऽङ्गिरसे स्वशिष्याय पुत्राय वा परावरां परस्मात्परस्मादवरेण प्राप्तेति परावरा परावरसर्व्व-

आ० तिक्रम्य वर्त्तत इति परिच्छिन्नत्वं सिद्धमित्यर्थः । योऽसावतीन्द्रियग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः । सर्व्वभूतमयोऽचिन्त्यः स एष स्वयमुद्बभौ । स्वयमुद्भूतः शुक्रशोणितसंयोगमन्तरेणाविर्भूत इति स्मृतेः स्वातन्त्र्यं गम्यत इत्यर्थः ॥ वाक्योत्थबुद्धिस्तदभिव्यक्तं ब्रह्मैव ब्रह्मविद्या । तच्च ब्रह्म सर्व्वाभिव्यञ्जकं । ततः सर्व्वविद्याव्यञ्जकतयाऽऽश्रीयत इति सर्व्वविद्याश्रया अथर्व्वविद्याश्रया । अथर्व्वा सर्व्वविद्यानां प्रतिष्ठा परिसमाप्तिर्भवति यस्यामुत्पन्नायां

उ० शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ । कस्मिन्नु भगवो विज्ञाते सर्वमिदं

भा० विद्याविषयव्याप्तेर्वा तां परावरामङ्गिरसे प्राहेत्यनुषङ्गः ॥ २ ॥

शौनकः शुनकस्यापत्यं महाशालो महागृहस्थोऽङ्गिरसं भारद्वाजशिष्यमाचार्य्यं विधिवद्यथाशास्त्रमित्येतत् । उपसन्न उपगतः सन् पप्रच्छ । शौनकाङ्गिरसयोः सम्बन्धादर्वाग्विधिवद्विशेषणादुपसदनविधेः पूर्व्वेषामनियम इति गम्यते । मध्यदीपकन्यायार्थं वा विशेषणं । अस्मदादिष्वप्युपसदनविधेरिष्टत्वात्किमित्याह । कस्मिन्नु भगवो विज्ञाते नु इति वितर्के भगवो हे भगवन् सर्व्वं यदिदं विज्ञेयं । विज्ञातं विशेषेण ज्ञातमवगतं भवतीत्येकस्मिन् ज्ञाते सर्व्वविद्भवतीति शिष्टप्रवादं श्रुतवान् शौनकः तद्विशेषं विज्ञातुकामः सन् कस्मिन्निति वितर्कयन् पप्रच्छ । अथवा लोकसामान्यदृष्ट्या ज्ञात्वैव पप्रच्छ । सति लोके सवर्णादिसकलभेदाः सवर्णत्वाद्येकत्वविज्ञानेन विज्ञायमाना लौकिकैः । तथा किन्न्वस्ति सर्व्वस्य जगद्भेदस्यैककारणं ।

आ० ज्ञातव्याभावात्सर्व्वविद्याप्रतिष्ठेत्याह । सर्व्वविद्यावेद्यं वेति ॥ १ ॥ २ ॥

प्रश्नवीजमाह । कस्मिन्निति ॥ उपादानात्कार्य्यस्य पृथक्सत्त्वाभावादुपादाने ज्ञाते तत्कार्य्यं ततः पृथङ्नास्तीति ज्ञातं भव-

उ॰ विज्ञातं भवतीति ॥ ३ ॥ तस्मै स होवाच । द्वे
विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति
परा चैवापरा च ॥ ४ ॥

---

भा॰ यदेकस्मिन् विज्ञाते सर्व्वं विज्ञातं भवतीति । नन्वविदिते
हि कस्मिन्निति प्रश्नोऽनुपपन्नः । किमस्ति तदिति तदा
प्रश्नो युक्तः । सिद्धे ह्यस्तित्वे कस्मिन्निति स्यात् । यथा
कस्मिन्निधेयमिति । नाक्षरबाहुल्यादायासभीरुत्वात्प्रश्नः
सम्भवत्येव । किन्त्वस्ति तद्यस्मिन्नेकस्मिन् विज्ञाते सर्व्व-
वित् स्यादिति ॥ ३ ॥ तस्मै शौनकायाङ्गिरा आह किलो-
वाच । किमित्युच्यते । द्वे विद्ये वेदितव्ये इति । एवं ह स्म
किल यद्ब्रह्मविदो वेदार्थाभिज्ञाः परमार्थदर्शिनो वद-
न्ति । के ते इत्याह । परा च परमात्मविद्या । अपरा
च धर्म्माधर्म्मसाधनतत्फलविषया । ननु कस्मिन् विदिते
सर्व्वविद्भवतीति शौनकेन पृष्टं तस्मिन् वक्तव्येऽपृष्टमाह
अङ्गिरा द्वे विद्ये इत्यादिना । एष दोषः क्रमापेक्षत्वात्प्र-
तिवचनस्य । अपरा हि विद्याऽविद्या सा निराकर्त्तव्या ।
तद्विषये हि विदिते न किञ्चित्तत्त्वं तो विदितं स्यादिति
निराकृत्य हि पूर्व्वपक्षं पश्चात्सिद्धान्तो वक्तव्यो भवतीति
न्यायात् ॥ ४ ॥

---

टी॰ तीति सामान्यव्याप्तिलक्षणाद्वा पप्रच्छेत्याह । यथवेति । प्रश्ना-
क्षराक्षमयमाक्षिप्य समाधत्ते । नन्वविदिते हीत्यादिना । किमस्ति
तदिति प्रयोगेऽक्षरबाहुल्येनायासः स्यात्तद्भीरुतया कस्मिन्नित्य-
क्षरसामञ्जस्य लाघवात्प्रश्न इत्यर्थः ॥ २ ॥ ० ॥

उ॰ तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिष-

---

भा॰ तत्र का अपरेत्युच्यते। ऋग्वेदो यजुर्व्वेदः सामवेदो ऽथर्व्ववेद इत्येते चत्वारो वेदाः। शिक्षा कल्पो व्याकरणं नि-रुक्तं छन्दो ज्योतिषमित्यङ्गानि षडेषाऽपरा विद्या। अथेदा-नीमियं परा विद्योच्यते यया तद्वक्ष्यमाणविशेषणमक्षरम-धिगम्यते प्राप्यते। अधिपूर्व्वस्य गमेः प्रायशः प्राप्त्यर्थत्वात्। न च परप्राप्तेरवगमार्थस्य भेदोऽस्ति। अविद्याया अपाय एव हि परप्राप्तिर्नार्थान्तरं। ननु ऋग्वेदादिवाह्या तर्हि सा कथं परा विद्या स्यान्मोक्षसाधनञ्च। या वेदवाह्याः स्मृतय इति हि स्मरन्ति। कुदृष्टित्वान्निष्फलत्वादनादेया स्यात्। उपनिष-दाञ्च ऋग्वेदादिवाह्यत्वं स्यात्। ऋग्वेदादित्वे तु पृथक्कर-णमनर्थकं। अथ परेति न वेद्यविषयविज्ञानस्य विवक्षितत्वात् उपनिषत्। वेद्याक्षरविषयं हि विज्ञानमिह परा विद्येति प्रा-धान्येन विवक्षितं नोपनिषच्छब्दराशिः। वेदशब्देन तु सर्व्वत्र

---

आ॰ कल्पः सूत्रग्रन्थः। अनुष्ठेयक्रमः कल्प इत्यर्थः। अविद्याया अप-गम एव परप्राप्तिरुपचर्य्यते। अविद्यापगमस्य ब्रह्मावगतिरेवेति व्याख्यातमस्माभिः। ज्ञातोऽर्थस्तत्प्राप्तिर्वा अविद्यानिवृत्तिरित्येत-द्व्याख्यानावसरेऽधिगमशब्दोऽत्र प्राप्तिपर्य्याय एवेत्याह। न च पर-प्राप्तेरिति॥ साङ्गानां वेदानामपरविद्यात्वेनोपन्यासात्ततः पृथ-क्करणाद्वेदवाह्यतया ब्रह्मविद्यायाः परत्वं न सम्भवतीत्याक्षि-पति। नन्विति॥ या वेदवाह्याः स्मृतयो याश्च काश्च कुदृष्टयः। सर्व्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृता इति स्मृतेः।

उ० मिति । अथ परा यया तदक्षरमधिगम्यते ॥ ५ ॥

यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तद-

---

भा० शब्दराशिर्विवचितः । शब्दराश्यधिगमेऽपि यत्नान्तरम-न्तरेण गुर्व्वधिगमनादिलक्षणं वैराग्यञ्च नाक्षराधिगमः सम्भवतीति पृथक्करणं ब्रह्मविद्यायाः परा विद्येति कथन-ञ्चेति ॥ ५ ॥

यथा विधिविषये कर्त्राद्यनेककारकोपसंहारद्वारेण वाक्यार्थज्ञानकालादन्यत्रानुष्ठेयोऽर्थोऽस्त्यग्निहोत्रादिलक्ष-णेन तथेह परविद्याविषये वाक्यार्थज्ञानसमकाल एव तु पर्य्यवसितो भवति। केवलशब्दप्रकाशितार्थज्ञानमात्रनिष्ठा-व्यतिरिक्ताभावात्। तस्मादिह परां विद्यां सविशेषणेनाक्षरेण विशिनष्टि यत्तदद्रेश्यमित्यादिना। वक्ष्यमाणं बुद्धौ संहृत्य सिद्धवत्परामृश्यते। यत्तदिति। अद्रेश्यमदृश्यं सर्व्वेषां बुद्धी-न्द्रियाणामगम्यमित्येतत्। दृशेर्बहिःप्रवृत्तस्य पञ्चेन्द्रियद्वार-त्वात्। अग्राह्यं कर्म्मेन्द्रियाविषयमित्येतत्। अगोत्रं गोत्रमन्वयो मूलमित्यनर्थान्तरं। अगोत्रमनन्वयमित्यर्थः। न हि तस्य

---

टा० कुदृष्टित्वादनुपादेया स्यादित्यर्थः। विद्याया वेदबाह्यत्वे तद-र्थानामुपनिषदामप्यृग्वेदादिबाह्यत्वं प्रसज्येतेत्यर्थः। वेदबाह्य-त्वेन पृथक्करणं न सम्भवति। किन्तु वैदिकस्यापि ज्ञानस्य वस्तु-विषयस्य शब्दराश्यतिरेकाभिप्रायेणेत्याह। न वेद्यविषयेति। वैराग्यञ्चेत्यत्र यत्नान्तरमिति शेषो द्रष्टव्यः ॥ ५ ॥

कर्म्मज्ञानादिसमुच्चयत्वाभिप्रायेण च पृथक्करणमित्याह। यथा

उ॰ पाणिपादं नित्यं विभुं सर्व्वगतं सुसूक्ष्मं तदव्ययं

---

भा॰ मूलमस्ति येनान्वितं स्यात्। वर्ण्यन्त इति वर्णा द्रव्यधर्म्माः स्थूलत्वादयः शुक्लत्वादयो वा। अविद्यमाना वर्णा यस्य तदवर्णमक्षरं। अचक्षुःश्रोत्रं चक्षुश्च श्रोत्रञ्च नामरूपविषये करणे सर्व्वजन्तूनां तेऽविद्यमाने यस्य तदचक्षुःश्रोत्रं। यः सर्व्वज्ञः सर्व्वविदित्यादि चेतनावत्त्वविशेषणात्प्राप्तं संसारिणामिव चक्षुःश्रोत्रादिभिः करणैरर्थसाधकत्वं तदिहाचक्षुःश्रोत्रमिति वार्य्यते। पश्यत्यचक्षुः स शृणोत्यकर्ण इत्यादिदर्शनात्। किञ्च तदपाणिपादं कर्म्मेन्द्रियरहितमित्येतत्। यत एवमग्राह्यमग्राहकञ्च अतो नित्यमविनाशि। विभुं विविधं ब्रह्मादिस्थावरान्तप्राणिभेदैर्भवतीति विभुं। सर्व्वगतं व्यापकमाकाशवत्सुसूक्ष्मं शब्दादिस्थूलत्वकारणरहितत्वात्। शब्दादयो ह्याकाशवाय्वादीनामुत्तरोत्तरं स्थूलत्वकारणानि तदभावात्सुसूक्ष्मं। किञ्च तदव्ययं उक्तधर्म्मत्वादेव न व्येतीत्यव्ययं। न ह्यनङ्गस्य स्वाङ्गापचयलक्षणो व्ययः सम्भवति शरीरस्येव। नापि कोषापचयलक्षणो व्ययः सम्भवति राज्ञ इव। नापि गुणद्वारको व्ययः सम्भवत्यगुणत्वात्सर्व्वात्मकत्वाच्च। यदेवंलक्षणं भूतयोनिं

---

आ॰ विधिविषय इति। अप्राप्तप्रतिषेधप्रसङ्गात्र प्रधानपरत्वमपि शङ्कनीयमिति मत्वाह। यः सर्व्वज्ञ इति। अगुणत्वादिति उपसर्जनरहितत्वादित्यर्थः। सर्व्वात्मकत्वाच्चेति व्ययस्यातिरिक्तस्याभावाच्चेत्यर्थः। अत्र न कारणं सहायसूक्ष्मत्वात् कुलालमात्रवदित्व-

उ॰ यद्भूतयोनिं परिपश्यन्ति धीराः ॥ ६ ॥ यथोर्ण-
नाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः
सम्भवन्ति । यथा सतः पुरुषात् केशलोमानि
तथाऽक्षरात् सम्भवतीह विश्वं ॥ ७ ॥

---

भा॰ भूतानां कारणं पृथिवीव स्थावरजङ्गमानां परि सर्व्वत
आत्मभूतं सर्व्वस्याक्षरं पश्यन्ति धीराः धीमन्तो विवेकिनः।
ईदृशमक्षरं यया विद्ययाऽधिगम्यते सा परा विद्येति
समुदायार्थः ॥ ६ ॥ भूतयोन्यक्षरमित्युक्तं । तत्कथं भूतयो-
नित्वमित्युच्यते प्रसिद्धदृष्टान्तैः। यथा लोके प्रसिद्ध ऊर्ण-
नाभिर्लूताकीटः किञ्चित्कारणान्तरमनपेक्ष्य स्वयमेव
सृजते स्वशरीराव्यतिरिक्तान् तन्तून् वहिः प्रसारयति
पुनस्तानेव गृह्णते च गृह्णाति स्वात्मभावमेवापादयति ।
यथा च पृथिव्यामोषधयो व्रीह्यादिस्थावरान्ताः स्वात्मा-
व्यतिरिक्ता एव प्रभवन्ति। यथा सतो विद्यमानाज्जीवतः
पुरुषात् केशलोमानि केशाश्च लोमानि च सम्भवन्ति विल-
क्षणानि । यथैतद्दृष्टान्तस्तथा विलक्षणं सलक्षणञ्च निमि-
त्तान्तरानपेक्षाद्यथोक्तलक्षणादक्षरात्सम्भवति समुत्पद्यत
इह संसारमण्डले विश्वं समस्तं जगत्। अनेकदृष्टान्तोपादा-

---

आ॰ स्यानैकान्तिकमुक्तमृत्सङ्गाभिदृष्टान्तेन। ब्रह्म जगतो नोपादानं
तदभिन्नत्वात्स्वरूपस्येवेत्यनुमानान्तरस्यानैकान्तिकत्वमाह। यथा
च पृथिव्यामिति॥ जगच्च ब्रह्मोपादानं तद्विलक्षणत्वात्। यद्विल-
क्षणं तत्तदुपादानकं न भवति। यथा घटो न तन्तूपादानक इति॥
तस्य व्यभिचारमाह। यथा च सत इति॥ एकस्मिन्नपि दृष्टान्ते

उ॰ तपसा चीयते ब्रह्म ततोऽन्नमभिजायते। अन्नात्
प्राणो मनः सत्यं लोकाः कर्म्मसु चामृतं ॥ ८ ॥

---

भा॰ नन्तु सुखार्थप्रबोधनार्थं। यद्ब्रह्मण उत्पद्यमानं विश्वं
तदनेन क्रमेणोत्पद्यते न युगपद्बदरमुष्टिप्रक्षेपवदिति॥ ७॥

क्रमनियमविवक्षार्थोऽयं मन्त्र आरभ्यते। तपसा ज्ञाने-
नोत्पत्तिविधिज्ञतया भूतयोन्यक्षरं ब्रह्म चीयते उपचीयते
उत्पादयिषदिदं जगदङ्कुरमिव बीजमुच्छून्यतां गच्छति
पुत्रमिव पिता हर्षेण। एवं सर्व्वज्ञतया सृष्टिस्थितिसंहार-
शक्तिविज्ञानवत्तयोपचितात्ततो ब्रह्मणोऽन्नं अद्यते भुज्यत
इत्यन्नमव्याकृतं साधारणं संसारिणां व्याचिकीर्षितावस्थारूपे-
णाभिजायते उत्पद्यते। ततश्चाव्याकृताद्व्याचिकीर्षिता-
वस्थातोऽन्नात्प्राणो हिरण्यगर्भो ब्रह्मणो ज्ञानक्रियाश-
क्त्यधिष्ठितजगत्साधारणोऽविद्याकामकर्म्मभूतसमुदायबीजा-
ङ्कुरो जगदात्माभिजायत इत्यनुषङ्गः। तस्माच्च प्राणा-

---

व्या॰ नुमानानामनैकान्तिकत्वं योजयितुं शक्यमिति शङ्कमानं प्रत्याह।
अनेकदृष्टान्तेति ॥ ६ ॥ ७ ॥

ईश्वरत्वोपाधिभूतं मायातत्त्वं महाभूतादिरूपेण सर्व्वजी-
वैरुपलभ्यत इति साधारणोऽपि कथं जायतेऽनादिसिद्धत्वा-
दित्याशङ्क्याह। व्याचिकीर्षितेति॥ कर्म्माऽपूर्व्वसमवायिभूतसूक्ष्म-
मव्याकृतमिति केचित्। न तस्य प्रति जीवं भिन्नत्वादीश्वरत्वोपा-
धित्वासम्भवात्। सामान्यरूपेण सम्भवेऽपि पृथिव्यादिसामान्यानां
बहुत्वात्। प्रकृतावेकत्वश्रुतिव्याकोपापाताच्चाद्यमहामायारूपेणैव
सम्भवेऽपि न कर्म्मापूर्व्वसमवायित्वं। तस्याकारकत्वाद्द्रव्यादीना-
मेव कारकत्वाभिधानात्। कारकाश्रयेष्वेव क्रियासमवायाभ्युपग-

उ॰ यः सर्व्वज्ञः सर्व्वविद्यस्य ज्ञानमयं तपः । तस्मा-
देतद्ब्रह्म नाम रूपमन्नञ्च जायते ॥ ९ ॥ इति
प्रथममुण्डके प्रथमः खण्डः ॥ १ ॥

---

भा॰ न्नमनो मनआख्यं सङ्कल्पविकल्पसंशयनिर्णयाद्यात्मकमभि-
जायते । ततोऽपि सङ्कल्पाद्यात्मकत्वान्मनसः सत्यं सत्या-
ख्यमाकाशादिभूतपञ्चकमभिजायते । तस्मात्सत्याख्याद्भूतप-
ञ्चकादण्डं क्रमेण सप्तलोका भूरादयः । तेषु मनुष्यादिप्रा-
णिवर्णाश्रमक्रमेण कर्म्माणि । कर्म्मसु च निमित्तभूतेष्वमृतं
कर्म्मजं फलं । यावत्कर्म्माणि कल्पकोटिशतैरपि न विन-
श्यन्ति तावत्फलं न विनश्यतीत्यमृतं ॥ ८ ॥ उक्तमे-
वार्थमुपजिहीर्षुर्मन्त्रो वक्ष्यमाणार्थमाह । य उक्तलक्षणो
ऽक्षराख्यः सर्व्वज्ञः सामान्येन सर्व्वं जानातीति सर्व्वज्ञः ।
विशेषेण सर्व्वं वेत्तीति सर्व्ववित् । यस्य ज्ञानमयं ज्ञान-
विकारमेव सर्व्वज्ञलक्षणं तपो नायामलक्षणं तस्माद्यथोक्ता-

---

आ॰ मात् । किञ्च न कार्य्यस्य स्वकारणप्रकृतित्वं दृष्टमिति भूतसूक्ष्मञ्च
पञ्चीकृतभूतपञ्चकप्रकृतित्वं न स्यात् । तस्मान्महाभूतसर्गादिसं-
स्कारास्पदं गुणत्रयसाम्यं मायातत्त्वमव्याकृतादिशब्दवाच्यमिच्छा-
भ्युपगन्तव्यं। पूर्व्वस्मिन् कल्पे हिरण्यगर्भप्राप्तिनिमित्तं प्रकृष्टं ज्ञानं
कर्म्म च येनानुष्ठितं तदनुग्रहाय मायोपाधिकं ब्रह्म हिरण्यगर्भा-
वस्थाकारेण विवर्त्तते । स च जीवस्तदवस्थाभिमानी हिरण्यगर्भ
उच्यत इत्यभिप्रेत्याह । ब्रह्मा इति । ज्ञानशक्तिभिः क्रियाशक्ति-
भिश्चाधिष्ठितं विशिष्टं जगद्व्यष्टिरूपं तस्य साधारणः समष्टिरूपः
सूत्रसञ्ज्ञक इत्यर्थः । समष्टिरूपं विवक्षितं । व्यष्टिरूपस्य लोक-
वशिष्ठनरकावलात्त्वमावस्थाविद्याविवरणप्रकरणस्यारम्भार्थं-

उ॰ तदेतत्सत्यं मन्त्रेषु कर्म्माणि कवयो यान्य-

भा॰ सर्व्वज्ञादेतदुक्तं कार्य्यलक्षणं ब्रह्म हिरण्यगर्भाख्यं जायते। किञ्च नामासौ देवदत्तो यज्ञदत्त इत्यादिलक्षणं। रूपमिदं शुक्लं नीलमित्यादि। अन्नञ्च व्रीहियवादिलक्षणं जायते पूर्व्वमन्त्रोक्तक्रमेणेत्यविरोधो द्रष्टव्यः॥ ८॥ इति मुण्डके प्रथमखण्डभाष्यं॥ १॥

साङ्गा वेदा अपरा विद्योक्ता ऋग्वेदो यजुर्वेद इत्यादिना यत्तदद्रेश्यमित्यादिना नामरूपमन्नञ्च जायत इत्यन्तेन ग्रन्थेनोक्तलक्षणमक्षरं यया विद्ययाऽधिगम्यते इति परा विद्या सविशेषेणोक्ता। अतः परमनयोर्विद्ययोर्विषयौ विवेक्तव्यौ संसारमोक्षावित्युत्तरो ग्रन्थ आरभ्यते। तत्रा-

आ॰ मुक्तः परविद्यासूत्रार्थोपसंहार इत्यर्थः। सामान्यनेति॥ समष्टिरूपेण मायाख्येनोपाधिनेत्यर्थः। विशेषणेति व्यष्टिरूपेणाविद्याख्येनोपाधिनाऽनन्तजीवभावमापन्नः स एव सर्व्वस्योपाधिस्तत्संसृष्टश्च वतीत्यधिदैवमध्यात्मञ्च तत्त्वाभेदः सूचितः। स्रष्टृत्वं प्रजापतीनां तपसा प्रसिद्धं। स्रष्टृत्वे तपोऽनुष्ठानं वक्तव्यं। ततः संसारित्वं प्रसज्येत इत्याशङ्क्याह। यस्य ज्ञानमयमिति। सत्त्वप्रधानमायाज्ञानाख्यो विकारस्तदुपाधिकं ज्ञानविकारं स्रक्ष्यमानं सर्व्वपदार्थाभिज्ञत्वलक्षणं तपो न तु क्लेशरूपं प्रजापतीनामिवेत्यर्थः॥ ८॥ ९॥ इति प्रथममुण्डके प्रथमखण्डभाष्यटीका॥ १॥

अनादिरुपादानरूपेणानन्तो ब्रह्मज्ञानात्प्रागत्यन्तासम्भवात्प्रत्येकं शरीरिभिर्ज्ञातव्यो दुःखरूपत्वादित्यनेन। यदाऽक्षरैकजीववादिनः एकमेवैतन्यमेकयैवाविद्यया बद्धं संसरति। तदेव कदाचिन्मुच्यते नाऽस्मदादीनां बन्धमोक्षौ स्त इति तदपास्तं भवति। श्रुतिवहिष्कृतत्वात्। सुषुप्तेऽपि क्रियाकारकफलभेदस्य

उ० पश्यंस्तानि त्रेतायां बहुधा सन्ततानि । तान्या-

भा० परविद्याविषयः कर्त्रादिसाधनक्रियाफलभेदरूपः संसारो ऽनादिरनन्तो दुःखस्वरूपत्वाद्धातव्यः प्रत्येकं शरीरिभिः । सामस्त्येन नदीस्रोतोवदवच्छेदरूपसम्बन्धस्तदुपशमलक्षणो मोक्षः परविद्याविषयोऽनाद्यनन्तोऽजरोऽमरोऽमृतोऽभयः शुद्धः प्रसन्नः स्वात्मप्रतिष्ठालक्षणः परमानन्दोऽद्वय इति । पूर्व्वं तावदपरविद्याया विषयप्रदर्शनार्थमारम्भः । तद्दर्शने हि तन्निर्व्वेदोपपत्तेः । तथा च वक्ष्यति । परीक्ष्य लोकान् कर्म्मचितानित्यादिना । न ह्यप्रदर्शितं परीक्ष्योपपद्यत इति तत्प्रदर्शयन्नाह तदेतत्सत्यमवितथं । किन्तन्मन्त्रेष्वृग्वेदा-द्याख्येषु कर्म्माण्यग्निहोत्रादीनि मन्त्रैरेव प्रकाशितानि कवयो मेधाविनो वशिष्ठादयो यान्यपश्यन् दृष्टवन्तः । यत्तदेतत्सत्यमेकान्तपुरुषार्थसाधनत्वात् तानि च वेदवि-हितान्यृषिदृष्टानि कर्म्माणि त्रेतायां त्रयीसंयोगलक्षणायां होत्राध्वर्य्यवौद्गात्रप्रकारायामधिकरणभूतायां बहुधा ब-हुप्रकारं सन्ततानि प्रवृत्तानि कर्म्मिभिः क्रियमाणानि

व्या० प्रहाणं भवति ॥ बुद्धिपूर्व्वकप्रहाणस्य ततो विशेषमाह । सामस्त्येनेति ॥ सोपाध्यविद्याकार्य्यस्याविद्याप्रहाणेनात्यन्तिक-प्रहाणं विद्याफलमित्यर्थः । अमरोऽपक्षयरहितः । अमृतो नाश-रहित इत्यर्थः। अपरविद्यायाः परविद्यायाश्च विषयौ प्रदर्श्य पूर्व्व-मपरविद्याया विषयप्रदर्शने श्रुतेरभिप्रायमाह। पूर्व्वं तावदिति॥ यदीष्टसाधनतयाऽनिष्टसाधनतया वा वेदेन बोध्यते कर्म्म तस्या सति प्रतिबन्धे तत्साधनत्वाव्यभिचारः। सत्यत्वं न स्वरूपाबाधत्वं

उ॰ चरथ नियतं सत्यकामा एष वः पन्थाः स्वकृतस्य लोके ॥ १ ॥ यदा लेलायते ह्यर्च्चिः समिद्धे हव्यवाहने । तदाज्यभागावन्तरेणाहुतीः प्रतिपाद-

भा॰ त्रेतायां वा युगे प्रायशः प्रवृत्तानि अतो यूयं तान्याचरथ निर्वर्त्तयथ नियतं नित्यं सत्यकामा यथाभूतकर्म्मफलकामाः सन्तः । एष वो युष्माकं यथा पन्था मार्गः सुकृतस्य स्वयं निर्वर्त्तितस्य कर्म्मणो लोके फले निमित्त लोक्यते दृश्यते भुज्यत इति कर्म्मफलं लोक उच्यते । तदर्थं तत्प्राप्तये एष मार्ग इत्यर्थः । यानि यान्यग्निहोत्रादीनि त्रय्यां विहितानि कर्म्माणि तान्येष पन्थाऽवश्यफलप्राप्तिसाधनमित्यर्थः ॥ १ ॥ तत्राग्निहोत्रमेव तावत्प्रथमं प्रदर्श्यते प्रदर्शनार्थमुच्यते । सर्व्वकर्म्मणां प्राथम्यात् । कथं । यदैवं धनैरभ्याहितैः सम्यगिद्धे समिद्धे हव्यवाहने लेलायते चलति अर्च्चिस्तदा तस्मिन् काले लेलायमाने चलत्यर्च्चिष्याज्यभागावाऽऽज्यभागयोरन्तरेण मध्ये आवाप-

आ॰ प्लवा ह्येते इत्यादिना निन्दितत्वात्स्वरूपबाध्यत्वेऽपि चार्थक्रियासामर्थ्यं स्वप्नकामिन्यामिव घटत इत्यभिप्रेत्याह । तदेतत्सत्यमिति ॥ ऋग्वेदविहितः पदार्थो हौत्रं । यजुर्वेदविहित आध्वर्य्यवं । सामवेदविहित औद्गात्रं । तद्रूपायां त्रेतायामित्यर्थः ॥ १ ॥ सत्यकामा मोक्षकामा इति समुच्चयाभिप्रायेण व्याख्यानमयुक्तं । एष वः पन्थाः सुकृतस्य लोक इति स्वर्गफलसाधनत्वविषयप्रैष-विरोधादित्याशयवर्णीयस्य दक्षिणोत्तरपार्श्वयोराज्यभागाविज्यते अग्नये स्वाहा सोमाय स्वाहेति दर्शपूर्णमासे। तयोर्म्मध्येऽन्ये यागा अनुष्ठीयन्ते । तन्मध्यमावापस्थानमुच्यते । अग्निहोत्राङ्गत्वोद्दिंत्वं

उ० येच्छ्रद्धया हुतं ॥ २ ॥ यस्याग्निहोत्रमदर्शमपौर्णमासमचातुर्मास्यमनाग्रयणमतिथिवर्जितञ्च ।
अहुतमवैश्वदेवमविधिना हुतमासप्तमांस्तस्य
लोकान् हिनस्ति ॥ ३ ॥ काली कराली च

भा० स्थाने आहुतोः प्रतिपादयेत् प्रक्षिपेद्देवतामुद्दिश्य। अनेकाहःप्रयोगापेक्षयाऽऽहुतीरिति बहुवचनं । एष सम्यगाहुतिप्रक्षेपादिलक्षणकर्ममार्गो लोकप्राप्तये पन्थाः। अश्रद्धया हुतं तस्य च सम्यक्चरणं दुष्करं। विपत्तयस्त्वनेका भवन्ति ॥ २ ॥ कथं। यस्याग्निहोत्रिणोऽग्निहोत्रमदर्शं दर्शाख्येन कर्मणा वर्जितं। अग्निहोत्रिणोऽवश्यकर्त्तव्यत्वाद्दर्शस्य। अग्निहोत्रसम्बन्ध्यग्निहोत्रविशेषणमिव भवति। तदक्रियमाणमित्येतत्। तथाऽपौर्णमासमित्यादिष्वप्यग्निहोत्रविशेषणत्वं द्रष्टव्यं। अग्निहोत्राङ्गत्वस्याविशिष्टत्वादपौर्णमासं पौर्णमासकर्मवर्जितं। अचातुर्मास्यञ्चातुर्मास्यकर्मवर्जितं। अनाग्रयणं शरदादिकर्त्तव्यं तच्च न क्रियते यस्य। तथाऽतिथिवर्जितञ्चातिथिपूजनञ्चाहन्यहन्यक्रियमाणं यस्य स्वयं सम्यगग्निहोत्रकालेऽहुतं। अदर्शादिवद्वैश्वदेवकर्मवर्जितं

आ० प्रसिद्धं। सूर्य्याय स्वाहा प्रजापतये स्वाहेति प्रातः। अग्नये स्वाहा प्रजापतये स्वाहेति सायं॥ तत्कथमग्निहोत्रं प्रक्रम्याहुतीरिति बहुवचनं तत्राह। अनेकाह इति॥ अनेकेष्वहःसु प्रयोगानुष्ठानानि तदपेक्षयेत्यर्थः। दर्शपूर्णमासस्याग्निहोत्राङ्गत्वे प्रमाणाभावात्कथं तदङ्गत्वमग्निहोत्रस्य विपत्तिरित्याशङ्क्य यावज्जीव-

उ॰ मनोजवा च सुलोहिता या च सुधूम्रवर्णा ।
स्फुलिङ्गिनी विश्वरूपी च देवी लेलायमाना
इति सप्त जिह्वा ॥ ४ ॥ एतेषु यश्चरते भ्राज-
मानेषु यथाकालं चाहुतयो ह्याददायन् । तन्न-

भा॰ हूयमानमप्यविधिना हुतं न यथा हुतमित्येतत् । एवं
दुःसम्पादितमग्निहोत्राद्युपलक्षितं कर्म्म किं करोतीत्युच्यते
आसप्तमान् सप्तमसहितांस्तस्य कर्त्तुर्लोकान् हिनस्तीवा-
यासमात्रफलत्वात् । सम्यक्क्रियमाणेषु हि कर्म्मसु कर्म्म-
परिणामरूपेण भूरादयः सत्यान्ताः सप्त लोकाः फलं प्रा-
प्यते । ते लोका एवम्भूतेनाग्निहोत्रादिकर्म्मणा अप्राप्यत्वा-
द्धिंस्यन्त इवायाससमात्रन्त्वव्यभिचारीत्यतो हिनस्तीत्युच्यते।
पिण्डदानाद्यनुग्रहेण वा सम्बध्यमानाः पितृपितामहप्रपि-
तामहाः पुत्रपौत्रप्रपौत्राः स्वात्मोपकाराः सप्तलोका उक्त-
प्रकारेणाग्निहोत्रादिना न भवन्तीति हिंस्यन्त इत्युच्यते
॥ ३ ॥ काली कराली च मनोजवा च सुलोहिता या च
सुधूम्रवर्णा । स्फुलिङ्गिनी विश्वरूपी च देवी लेलायमाना
इत्येतस्य जिह्वाः ॥ अग्नेर्हविराहुतिग्रसनार्था एताः सप्त
जिह्वाः ॥ ४ ॥ एतेष्वग्निजिह्वाभेदेषु योऽग्निहोत्री चरत्य-

आ॰ चोदनावशादग्निहोत्रिणोऽवश्यकर्त्तव्यत्वात्तदकरणे भवेद्विपत्ति-
रित्यभिप्रेत्य विशेषणं । शरदादिषु नूतनान्नेन कर्त्तव्यमाग्रयणं
कर्म्म । अदृष्ट वैश्वदेवमिति विशेषणं । वैश्वदेवस्याग्निहोत्रानाम-
कत्वेऽप्यवश्यकर्त्तव्यत्वादित्यर्थः पिण्डोदकदानेन पित्रादीनां त्रया-

उ० यन्त्येताः सूर्य्यस्य रश्मयो यत्र देवानां पतिरेको-ऽधिवासः ॥ ५ ॥ एह्येहीति तमाहुतयः सुवर्च्चसः सूर्य्यस्य रश्मिभिर्यजमानं वहन्ति । प्रियां वाच-मभिवदन्त्योऽर्च्चयन्त्य एष वः पुण्यः सुकृतो ब्रह्म-लोकः ॥ ६ ॥ प्लवा ह्येते अदृढा यज्ञरूपा अष्टा-दशोक्तमवरं येषु कर्म्म । एतच्छ्रेयो येऽभिनन्दन्ति

भा० ग्निहोत्रादि भ्राजमानेषु दीप्यमानेषु । यथाकालञ्च यस्य कर्म्मणो यः कालस्तत्कालं यथाकालं यजमानमाददाय-न्नाददाना आहुतयो यजमानेन निर्वर्त्तिता अन्तं नयन्ति प्रापयन्त्येता आहुतयो ये इमा अनेन निर्वर्त्तिताः सूर्य्यस्य रश्मयो भूत्वा रश्मिद्वारैरित्यर्थः । यत्र यस्मिन् स्वर्गे देवानां पतिरिन्द्र एकः सर्व्वानुपर्य्यधिवसतीत्यधिवासः ॥ ५ ॥ कथं सूर्य्यस्य रश्मिभिर्यजमानं वहन्तीत्युच्यते एह्येही-त्याह्वयन्त्यः । सुवर्चसो दीप्तिमत्यः । किञ्च प्रियामिष्टां वाचंस्तुत्यादिलक्षणामभिवदन्त्य उच्चारयन्त्यः पूजयन्त्यश्चैष वो युष्माकं पुण्यः सुकृतो यथा ब्रह्मलोकः फलरूपः एवं प्रियां वाचमभिवदन्त्यो वहन्तीत्यर्थः । ब्रह्मलोकः स्वर्गः-प्रकरणात् ॥ ६ ॥ एतच्च ज्ञानरहितं कर्म्मैतावत्फलमवि-

घा० गामुपकरोति । यजमानपुत्रादीनाञ्च त्रयाणां ग्रामादिदानेन । ततो मध्यवर्त्तिना यजमानेन सम्बध्यमानः पूर्व्वं त्रय उत्तरं च त्रयो गच्छन्ति इत्याह । पिण्डदानादीति ॥ आहुतयो यजमानं

उ० मूढा जरामृत्युं ते पुनरेवापि यन्ति ॥ ७ ॥
अविद्यायामन्तरे वर्त्तमानाः स्वयं धीराः पण्डि-
तम्मन्यमानाः । जङ्घन्यमानाः परियन्ति मूढा
अन्धेनैव नीयमाना यथान्धाः ॥ ८ ॥

भा० यतःकामकर्म्मकार्य्यमतोऽसारं दुःखमूलमिति निन्द्यते । प्लवा
विनाशिन इत्यर्थः । हि यस्मादेते अदृढा अस्थिरा
यज्ञरूपा यज्ञस्य रूपाणि यज्ञरूपा यज्ञनिर्वर्त्तका अष्टा-
दशाष्टादशसङ्ख्याकाः । षोडशर्त्विजः पत्नी यजमानश्चेत्य-
ष्टादश एतदाश्रया उक्तं कथितं शास्त्रेण । येष्वष्टादशस्व-
वरं केवलं ज्ञानवर्जितं कर्म्म । अतस्तेषामवरकर्म्माश्रया-
णामष्टादशानामदृढतया प्लवत्वात्प्लवते सह फलेन तत्साध्यं
कर्म्म । कुण्डविनाशादिवत्क्षीरदध्यादीनां तत्स्थाननाशः ।
यत एवमेतत्कर्म्म श्रेय इति येऽभिनन्दन्त्यभिहृष्यन्त्यविवे-
किनो मूढाः अतस्ते जरां मृत्युञ्च जरामृत्युं किञ्चित्कालं
स्वर्गे स्थित्वा पुनरेवापि यन्ति भूयोऽपि गच्छन्ति ॥ ७ ॥
किञ्चाविद्यायामन्तरे मध्ये वर्त्तमाना अविवेकप्रायाः स्वयं
वयमेव धीरा धीमन्तः पण्डिता विदितवेदितव्याश्चेति
मन्यमाना आत्मानं सम्भावयन्तस्ते च जङ्घन्यमाना जरा-
रोगाद्यनेकानर्थव्रातैर्हन्यमाना भृशं पीड्यमानाः परियन्ति
विभ्रमन्ति मूढाः । दर्शनवर्जितत्वादन्धेनैवाचक्षुष्केणैव

---

पा० वहन्तीति सम्बन्धः ॥ २ ॥ ३ ॥ ॥ ४ ॥ ५ ॥ रूप्यते निरूप्यते

उ॰ अविद्यायां बहुधा वर्त्तमाना वयं कृतार्था इत्य
भिमन्यन्ति बालाः । यत्कर्म्मिणो न प्रवेदयन्ति
रागात्तेनातुराः क्षीणलोकाश्च्यवन्ते ॥ ९ ॥ इष्टा-
पूर्त्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते

भा॰ नीयमानाः प्रदृश्यमानमार्गा यथा लोकेऽन्धा अचिरहिता
गर्त्तकण्टकादौ पतन्ति तद्वत् ॥ ८ ॥

किञ्चाविद्यायां बहुधा बहुप्रकारं वर्त्तमानाः वय-
मेव कृतार्थाः कृतप्रयोजना इत्येवमभिमन्यन्त्यभिमानं कु-
र्व्वन्ति बाला अज्ञानिनः । यद्यस्मादेवं कर्म्मिणो न प्रवे-
दयन्ति रागात्कर्म्मफलरागाभिभवनिमित्तं तेन कार-
णेनातुरा दुःखार्त्ताः सन्तः क्षीणलोकाः क्षीणकर्म्मफलाः
स्वर्गलोकाच्च्यवन्ते ॥ ९ ॥ इष्टापूर्त्तं । इष्टं यागादि श्रौतं
कर्म्म । पूर्त्तं वापीकूपतडागादि स्मार्त्तं मन्यमाना एतदेवा-
तिशयेन पुरुषार्थसाधनं वरिष्ठं प्रधानमिति चिन्तयन्तो
ऽन्यदात्मज्ञानाख्यं श्रेयःसाधनं न वेदयन्ति न जानन्ति
प्रमूढाः पुत्रपशुबन्ध्वादिषु प्रमत्ततया मूढास्ते च नाकस्य
स्वर्गस्य पृष्ठे उपरिस्थाने सुकृते भोगायतनेऽनुभूत्वाऽनु-
भूय कर्म्मफलं पुनरिमं लोकं मानुषमस्माद्धीनतरं वा
तिर्य्यङ्नरकादिलक्षणं यथाकर्म्मशेषं विशन्ति ॥ १० ॥ ये

---

श्या॰ यदाश्रयतया यज्ञास्ते यज्ञरूपाः । वयमेवेति तत्त्वदर्श्युपदेशा-
नपेक्षतया स्वमनोरथेनैवेत्यर्थः ॥ ६ ॥ ७ ॥ ८ ॥
कं सुखं न भवतीत्यकन्दुःखं तत्र विद्यते यस्मिन्नसौ नाकः ।

उ॰ प्रमूढाः । नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरं वा विशन्ति ॥ १० ॥ तपःश्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्य्यां चरन्तः । सूर्य्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा ॥ ११ ॥

---

भा॰ पुनर्ज्ञानयुक्तास्तद्विपरीतवानप्रस्थाः सन्न्यासिनश्च तपःश्रद्धे हि तपः स्वाश्रमविहितं कर्म्म । श्रद्धा हिरण्यगर्भादिविषया विद्या ते तपःश्रद्धे उपवसन्ति सेवन्तेऽरण्ये वर्त्तमानाः सन्तः । शान्ता उपरतकरणग्रामाः । विद्वांसो गृहस्थाश्च ज्ञानप्रधाना इत्यर्थः । भैक्ष्यचर्य्यां चरन्तः परिग्रहाभावादुपवसन्त्यरण्य इति सम्बन्धः । सूर्य्यद्वारेण सूर्य्योऽपि लक्षितेनोत्तरायणेन पथा ते विरजा विरजसः क्षीणपुण्यपापकर्म्माणः सन्त इत्यर्थः । प्रकर्षेण यान्ति यत्र यस्मिन् सत्यलोकादावमृतः स पुरुषः प्रथमजो हिरण्यगर्भो ह्यव्ययात्मा अव्ययस्वभावो यावत्संसारः स्थायी । एतदन्तास्तु संसारगतयोऽपरविद्यागम्याः । नन्वेतं मोक्षमिच्छन्ति केचिन्न ह्येव सर्व्वे प्रविलीयन्ते कामास्ते सर्व्वगं सर्व्वतः प्राप्य धीरा युक्तात्मानः सर्व्वमेवाविशन्तीति । श्रुतिभ्यः प्रकरणाच्च । अपरविद्याप्रकरणे हि प्रवृत्तेन ह्यकस्मान्मोक्षप्रसङ्गोऽस्ति विरजस्त्वन्त्वापेक्षिकं समस्तमपरविद्याकार्य्यं

---

आ॰ केवलकर्म्मिणां फलमुक्ता सगुणब्रह्मज्ञानसहिताश्रमकर्म्मिणां

उ॰ परीक्ष्य लोकान् कर्म्मचितान् ब्राह्मणो निर्वे-

भा॰ साध्यसाधनलक्षणं क्रियाकारकफलभेदभिन्नं द्वैतं। एता-
वद्धिरण्यगर्भप्राप्त्यवसानं। तथाच स्थावराद्यां संसारगति-
मनुक्रामतां। ब्रह्मा विश्वसृजो धर्म्मो महानव्यक्तमेव च।
उत्तमां सात्त्विकीमेतां गतिमाहुर्मनीषिण इति॥ ११॥

अथेदानीमस्मात्साध्यसाधनरूपात् सर्व्वस्मात्संसाराद्वि-
रक्तस्य विद्यायामधिकारप्रदर्शनार्थमिदमुच्यते। परीक्ष्य
यदेतदृग्वेदाद्यपरविद्याविषयं स्वाभाविक्यविद्याकामक-
र्म्मदोषवत्पुरुषानुष्ठेयमविद्यादिदोषवन्त एव पुरुषं प्रति
विहितत्वात्तदनुष्ठानकार्य्यभूताश्च लोका ये दक्षिणोत्तर
मार्गलक्षणाः फलभूता ये च विहिताकरणप्रतिषेधाति-
क्रमदोषसाध्या नरकतिर्य्यक्प्रेतलक्षणास्तानेतान् परीक्ष्य
प्रत्यक्षानुमानोपमानागमैः सर्व्वतो याथात्म्येनावधार्य्य
लोकान् संसारगतिभूतानव्यक्तादिस्थावरान्तान् व्याकृ-
ताव्याकृतलक्षणान् वीजाङ्कुरवदितरेतरोत्पत्तिनिमित्ता-
ननेकानर्थशतसहस्रसङ्कुलान् कदलीगर्भवदसारान्मायाम-
रीच्युदकगन्धर्व्वनगराकारस्वप्नजलवुद्बुदफेनसमान् प्रति-
क्षणप्रध्वंसान् पृष्ठतः कृत्वाऽविद्याकामदोषप्रवर्त्तितकर्म्म-

आ॰ फलं संसारगोचरमेव दर्शयति। ये पुनर्ज्ञानयुक्ता इत्या-
दिना॥ ६॥ १०॥ ११॥

अरण्ये स्त्रीजनासङ्गागि देशे मुक्तानामिहैव सर्व्वकामप्रवि-
लयं सर्व्वात्मभावञ्च दर्शयन्ति श्रुतयः। ब्रह्मलोकप्राप्तिस्तु देश-
परिच्छिन्नफलं ततो न मोक्ष इत्याह। इत्येवंति। ब्रह्मा चतु-

उ॰ दमायान्नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं

---

भा॰ चितान् धर्माधर्मनिर्वर्त्त्यानित्येतद्ब्राह्मणस्यैव विशेषतोऽधिकारः । सर्व्वत्यागेन ब्रह्मविद्यायामिति ब्राह्मणग्रहणं । परीक्ष्य लोकान् किं कुर्य्यादित्युच्यते । निर्वेदं निःपूर्व्वो विदिरत्र वैराग्यार्थे । वैराग्यमायात्कुर्य्यादित्येतत् । स वैराग्यप्रकारः प्रदर्श्यते । इह संसारे नास्ति कश्चिदप्यकृतः पदार्थः । सर्व्व एव हि लोकाः कर्म्मचिताः कर्म्मचितत्वाच्चानित्याः । न नित्यं किञ्चिदस्तीत्यभिप्रायः । सर्व्वन्तु कर्म्मानित्यस्यैव साधनं । यस्माच्चतुर्विधमेव हि सर्व्वं कर्म्म कार्य्यमुत्पाद्यमाप्यं संस्कार्य्यं विकार्य्यं वा नातःपरं कर्म्मणो विषयोऽस्ति । अहञ्च नित्येनामृतेनाभयेन कूटस्थेनाचलेन ध्रुवेणार्थी न तद्विपरीतेन । अतः किं कृतेन कर्म्मणाऽऽयासबहुलेनानर्थसाधनेनेत्येवं निर्व्विण्णोऽभयं शिवमकृतं नित्यं पदं यत्तद्विज्ञानार्थं विशेषेणाभिगमार्थं स निर्व्विण्णो ब्राह्मणो गुरुमेवाचार्य्यं शमदमदयासम्पन्नमधिगच्छेत् । शास्त्रज्ञोऽपि स्वातन्त्र्येण ब्रह्मज्ञानान्वेषणं न कुर्य्यादित्येतद्गुरुमेवेत्यवधारणफलं । समित्पाणिः समिद्भारगृहीत-

---

आ॰ मनुः । विश्वसृजः प्रजापतयो मरीचिप्रभृतयः । धर्म्मो यमः । महान् सूत्रात्मा । अव्यक्तं त्रिगुणात्मिका प्रकृतिः । सात्त्विकीं सत्त्वपरिणामां महानतिहितकर्म्मफलभूतामित्यर्थः । ऐहिककर्म्मफलस्य पुत्रादेर्लोकविषयं प्रत्यक्षं विनाशमनित्यं कृतकत्वाद्घटवदित्यनुमानमामुष्मिकफलविषयं । तथा च कर्म्मचितो लोकः क्षीयत

उ॰ ॥ १२ ॥ तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्त-
चित्ताय शमान्विताय । येनाक्षरं पुरुषं वेद सत्यं
प्रोवाच तां तत्त्वतो ब्रह्मविद्यां ॥ १३ ॥ इति प्रथम-
मुण्डके द्वितीयः खण्डः ॥ २ ॥ इति प्रथममुण्डकं
समाप्तं ॥ १ ॥

---

भा॰ हस्तः श्रोत्रियमध्ययनश्रुतार्थसम्पन्नं ब्रह्मनिष्ठं हित्वा सर्व्व-
कर्म्माणि केवलेऽद्वये ब्रह्मणि निष्ठा यस्य सोऽयं ब्रह्मनिष्ठ-
स्तपोनिष्ठ इति यद्वत्। न हि कर्म्मिणो ब्रह्मनिष्ठा सम्भवन्ति
कर्म्मात्मज्ञानयोर्विरोधात् । स तं गुरुं विधिवदुपसन्नः
प्रसाद्य पृच्छेदक्षरं पुरुषं सत्यं ॥ १२ ॥ तस्मै स विद्वान्
गुरुर्ब्रह्मविदुपसन्नायोपगताय । सम्यग्यथाशास्त्रमित्येतत् ।
प्रशान्तचित्तायोपरतदर्पादिदोषाय। शमान्विताय बाह्मे-
न्द्रियोपरमेण च युक्ताय सर्व्वतो विरक्तायेत्येतत्। येन
विज्ञानेन यया विद्यया च परयाऽक्षरमद्रेश्यादिविशेषणं
तदेवाक्षरं पुरुषशब्दवाच्यं पूर्णत्वात्पुरिशयनाच्च सत्यं तदेव
परमार्थस्वाभाव्यादक्षरमक्षरणादक्षतत्वादक्षयत्वाच्च वेद
विजानाति तां ब्रह्मविद्यां तत्त्वतो यथावत्प्रोवाच प्रब्रू-
यादित्यर्थः । आचार्य्यस्याप्ययं नियमो यन्न्यायप्राप्तशिष्य-

---

चा॰ इत्याद्यागमाच्चैरनित्यत्वेन सर्व्वात्मनावधार्य्येत्यर्थः। नैतादृशं ब्राह्म-
णस्यास्ति वित्तं। यथैकता समता इति स्मृतेः। ब्राह्मणस्यैवाधिकार
इत्यर्थः। कूटस्थेन परिणामरहितेनाचलेन स्पन्दरहितेन ध्रुवेण
प्रयत्नरहितेनाक्षमर्थो। समित्पाणिरिति विनयोपलक्षणं। चक्ष-
रणादिति वयवान्यथाभावलक्षणपरिणामशून्यत्वात् अक्षतत्वादि-

उ॰ तदेतत्सत्यं यथा सुदीप्तात् पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः। तथाक्षराद्विविधाः

---

भा॰ निस्तारणमविद्यामहोदधेः ॥ १३ ॥ इति प्रथममुण्डके द्वितीयखण्डभाष्यं ॥ इति प्रथममुण्डकभाष्यं पूर्णं ॥ १ ॥

अपरविद्यायाः सर्व्वं कार्य्यमुक्तं। स च संसारो यत्सारो यस्मान्मूलादक्षरात्सम्भवति यस्मिंश्च प्रलीयते तदक्षरं पुरुषाख्यं सत्यं। यस्मिन् विज्ञाते सर्व्वमिदं विज्ञातं भवति तत्परस्या ब्रह्मविद्याया विषयः स वक्तव्य इत्युत्तरो ग्रन्थ आरभ्यते। यदपरविद्याविषयं कर्म्मफललक्षणं सत्यं तदापेक्षिकं। इदन्तु परविद्याविषयं परमार्थतः सल्लक्षणत्वात्। तदेतत्सत्यं यथाभूतं विद्याविषयं। अविद्याविषयत्वाच्चानृतमितरत्। अत्यन्तपरोक्षत्वात्। कथं नाम प्रत्यक्षव-

---

आ॰ च्चयत्वाच्चेत्यशरीरत्वाद्विकारशून्यत्वादित्यर्थः ॥ १२ ॥ १३ ॥ इति प्रथममुण्डके द्वितीयखण्डभाष्यटीका ॥ २ ॥ इति प्रथममुण्डकभाष्यटीका ॥ १ ॥

द्वे विद्ये वेदितव्ये इत्युपन्यस्यापरविद्यामाद्यमुण्डकेन प्रपञ्च्य परविद्यासूचनतां प्रपञ्चयितुं द्वितीयमुण्डकारम्भ इत्याह। अपरविद्याया इत्यादिना ॥ कर्म्मणोऽपि प्रागसत्यत्वमुक्तं तदिदं सत्यत्वं न मन्तव्यमित्याह। यदपरविद्याविषयमिति ॥ विषीयते विषीयते विद्याऽनेनेति व्युत्पत्त्या विषयशब्दस्य वस्तुपरत्वान्नपुंसकलिङ्गत्वं परमार्थतः सल्लक्षणत्वादत्यन्ताबाध्यत्वादित्यर्थः। अत्यन्तपरोक्षत्वादिति शास्त्रैकगम्यत्वादपूर्व्ववद्बुद्धेः प्रत्यक्षं न सम्भवति साक्षात्काराधीनञ्च कैवल्यं ततः कथं नाम सत्यमक्षरं प्रत्यक्षवत्प्रतिपद्येरन्मुमुक्षव इत्यभिप्रेत्य जीवब्रह्मणोरेकत्वे दृष्टान्तमाह। यथा सुदीप्तादिति। एकत्वे सति प्रत्यग्रूपस्यापरोक्षत्वाद्ब्रह्मणोऽपि प्रत्यक्षत्वं भविष्यति

उ॰ सोम्य भावाः प्रजायन्ते तत्र चैवापि यन्ति ॥ १ ॥

---

भा॰ अक्षरं प्रतिपद्येरन्निति दृष्टान्तमाह । यथा सुदीप्तात्सुष्ठु दीप्तादिद्धात् पावकादग्नेर्विस्फुलिङ्गा अग्न्यवयवाः सहस्रशोऽनेकशः प्रभवन्ति निर्गच्छन्ति सरूपा अग्निसलक्षणा एवं तथोक्तलक्षणादक्षराद्विविधा नानादेहोपाधिभेदमनुविधीयमानत्वाद्विविधा हे सोम्य भावा जीवा आकाशादिवद्घटादिपरिच्छिन्नाः सुषिरभेदात् घटाद्युपाधिप्रभेदमनुभवन्ति । एवं नानानामरूपकृतदेहोपाधिप्रभेदमनुप्रजायन्ते तत्र चैव तस्मिन्नेवाक्षरेऽपि यन्ति देहोपाधिविलयमनुलीयन्ते घटादिविलयमन्विव सुषिरभेदाः । यथाऽऽकाशस्य सुषिरभेदोत्पत्तिप्रलयनिमित्तत्वं घटाद्युपाधिकृतमेव तद्वदक्षरस्यापि नामरूपकृतदेहोपाधिनिमि-

---

आ॰ घटैकदेशप्रत्यक्षत्ववदित्यर्थः । यथा विभक्तदेशावच्छिन्नत्वेन विस्फुलिङ्गेष्ववयवत्वादिव्यवहारः स्वतः पुनरग्न्यात्मत्वमेवोष्णप्रकाशत्वाविशेषात् तथा चिद्रूपत्वाविशेषाज्जीवानां स्वतो ब्रह्मत्वमेवेत्यर्थः ॥ १ ॥ अक्षरस्यापि जीवोत्पत्तिप्रलयनिमित्तत्वमौपाधिकमुक्तमेकत्वसिद्ध्यर्थं । तत्त्वतः स्तुतिर्निमित्तनैमित्तिकभावोऽपि नास्तीत्याह । नामरूपबीजभूतादिति ॥ देहापेक्षया यद्वाह्याभ्यन्तरञ्च प्रसिद्धं तेन सह तादात्म्येन तदधिष्ठानतया वा वर्त्तत इति सबाह्याभ्यन्तरः । अत एव सर्व्वात्मत्वात्तद्व्यतिरिक्तनिमित्ताभावादतोऽज इत्यर्थः । जायते अस्ति विपरिणमते वर्द्धते अपक्षीयते विनश्यतीत्येवमादिभावविकाराणां निषेधे तात्पर्य्यमजशब्दस्याह । सर्व्वभावविकाराणामिति ॥ जीवानां प्राणादिमत्त्वात्तदात्मत्वे ब्रह्मणोऽपि प्राणादिमत्त्वं प्राप्तं तन्निवर्त्तयति । अप्राणोह्यादिना ॥ श्रुतिसंग्रयाद्यनेकवाक्येषु शक्तिविशेषोऽस्या-

उ॰ दिव्यो ह्यमूर्त्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः ।

भा॰ त्वमेव जीवोत्पत्तिप्रलयनिमित्तत्वं ॥ १ ॥ नामरूपबीजभूतादव्याकृताख्यात् स्वविकारापेक्षया परादक्षरात्परं यत् सर्व्वोपाधिभेदवर्जितमक्षरस्यैव स्वरूपमाकाशस्येव सर्व्वमूर्त्तिवर्जितं नेति नेतीत्यादिविशेषणं विवक्षन्नाह । दिव्यो द्योतनवान् स्वयंज्योतिष्ट्वात् । दिवि वा स्वात्मनि भवोऽलौकिको वा । हि यस्मादमूर्त्तः सर्व्वमूर्त्तिवर्जितः पुरुषः पूर्णः पुरि शयो वा । दिव्यो ह्यमूर्त्तः पुरुषः स बाह्याभ्यन्तरः सह बाह्याभ्यन्तरेण वर्त्तत इति । अजो न जायते कुतश्चित् स्वतोऽजस्य जन्मनिमित्तस्य चाभावात् । यथा जलबुद्बुदादेर्वाय्वादि । यथा नभःसुषिरभेदानां घटादि- सर्व्वभावविकाराणां जनिमूलत्वात्तत्प्रतिषेधेन सर्व्वे प्रतिषिद्धा भवन्ति। स बाह्याभ्यन्तरो ह्यजोऽतोऽजरोऽमृतोऽक्ष-

आ॰ रेतीति तयोक्तं नामरूपयोर्बीजं ब्रह्म तस्योपाधितया लक्षितं शुद्धस्य कारणत्वानुपपत्त्या गमितं स्वरूपमस्येति तयोक्तं । तस्मादुपाधिरूपात्तदीयस्वरूपाच्च यतोऽक्षरात्पर इति सम्बन्धः ॥ कथं मायातत्त्वस्याक्षरस्य परत्वमित्याकाङ्क्षायामाह । सर्व्वकार्य्येति ॥ कार्य्यं ह्यपरं प्रसिद्धं । तत्कारणत्वेन गम्यमानत्वान्मायातत्त्वं परं । यौक्तिकबाधादनिर्व्वाच्यत्वेऽपि स्वरूपोच्छेदाभावादक्षरं । तदुक्तं गीतायां । क्षरः सर्व्वाणि भूतानि कूटस्थोऽक्षर उच्यते । उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत इति ॥ २ ॥ यदेव चैतन्यं निरुपाधिकं शुद्धमविकल्पं ब्रह्म तत्त्वमामनाज्जीवानां कैवल्यं तदेव मायाप्रतिबिम्बितरूपेण कारणं भवतीत्याह । यस्मादेवेति ॥ प्राणोत्पत्तेरूर्द्धं तर्हि सप्राणत्वमात्मनो भविष्यतीति शङ्कानिरस्त्यर्थं मुख्यतरप्रसिद्धं प्राणस्य विशेषणमाह । अविद्याविषय इति ॥

उ॰ अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात् परतः परः ॥ २ ॥

---

भा॰ यो ध्रुवोऽभय इत्यर्थः। यद्यपि देहाद्युपाधिभेददृष्टीनामविद्यावशाद्देहभेदेषु स प्राणः समनाः सेन्द्रियः सविषय इव प्रत्यवभासते तलमलादिमदिवाकाशं तथापि तु स्वतः परमार्थदृष्टो नाम प्राणो विद्यमानः क्रियाशक्तिभेदवांश्चलनात्मको वायुर्यस्मिन्न विद्यते असावप्राणः। तथाऽमना अनेकज्ञानशक्तिभेदवत्सङ्कल्पाद्यात्मकं मनोऽप्यविद्यमानं यस्मिन् सोऽयममना अप्राणो ह्यमनाश्चेति। प्राणादिवायुभेदाः कर्म्मेन्द्रियाणि तद्विषयाश्च तथा बुद्धिमनसी बुद्धीन्द्रियाणि तद्विषयाश्च प्रतिषिद्धा वेदितव्याः। यथा श्रुत्यन्तरे ध्यायतीव लेलायतीवेति। यस्माच्चैवं प्रतिषिद्धोपाधिद्वयस्तस्माच्छुभ्रः शुद्धः। अतोऽक्षरान्नामरूपबीजोपाधिलक्षितस्वरूपात् सर्व्वकार्य्यकारणबीजत्वेनोपलक्ष्यमाणत्वात् परं तदुपाधिलक्षणमव्याकृताख्यमक्षरं सर्व्वविकारेभ्यस्तस्मात्परतोऽक्षरात्परो निरुपाधिकः पुरुष इत्यर्थः। यस्मिंस्तदाकाशाख्यमक्षरं संव्यवहारवि-

---

आ॰ नामधेयमिति वाङ्मात्रो न वस्तुभूत इत्यर्थः॥ प्राणादीनां च उत्क्रमोपक्रमेण बाध्यते। गताः कलाः पञ्चदश प्रतिष्ठा इति॥ भूतेषु लयश्रवणेन प्राणानां भौतिकत्वावगमाद्भूतोत्पत्त्यनन्तरं प्राणोत्पत्तिर्वक्तव्येत्यभिमुखमागच्छन् वायुः प्रवहः पुरतो गच्छन् प्रवह इत्यादिभेदः शब्दस्पर्शरूपरसगन्धा उत्तरोत्तरगुणा येषां तानि तथोक्तानि। यथा शुक्लतन्त्ववस्थापन्नादन्वयिकारणाज्जायमानः पटः शुक्लगुणो जायते तथाकाशावस्थापन्नाद्ब्रह्मणो जायमानो वायुराकाशगुणेन शब्देनान्वितो जायते। तथैव वायुभावा-

उ॰ एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।

भा॰ षयमोतश्च प्रोतश्च । कथं पुनरप्राणादिमत्त्वं तस्येत्युच्यते । यदि हि प्राणादयः प्रागुत्पत्तेः पुरुष इव स्वेनात्मना सन्ति तदा पुरुषस्य प्राणादिना विद्यमानेन प्राणादिमत्त्वं भवेन्न तु ते प्राणादयः प्रागुत्पत्तेः सन्ति । अतोऽप्राणादिमान् परः पुरुषः ॥ २ ॥ यथाऽनुत्पन्ने पुत्रे अपुत्रो देवदत्तः कथं ते न सन्ति प्राणादय इत्युच्यते । यस्मादेव पुरुषान्नामरूपबीजोपाधिलक्षिताज्जायते उत्पद्यतेऽविद्याविषयविकारभूतो नामधेयोऽनृतात्मकः प्राणः । वाचारम्भणं विकारो नामधेयमिति श्रुत्यन्तरात् । न हि तेनाविद्याविषये गुणानृतेन प्राणेन सप्राणत्वं परस्य स्यादपुत्रस्य स्वप्नदृष्टेनेव पुत्रेण पुत्रत्वं । एवं मनः सर्व्वाणि चेन्द्रियाणि विषयाश्चैतस्मादेव जायन्ते । तस्मात्सिद्धमस्य निरुपचरितमप्राणादिमत्त्वमित्यर्थः । यथा च प्रागुत्पत्तेः परमार्थतोऽसन्तस्तथा प्रलीनाश्चेति द्रष्टव्या यथा करणानि मनश्चेन्द्रियाणि तथा शरीरविषयकारणानि

---

आ॰ पञ्चाद्वक्ष्यमाणोऽग्निस्तद्गुणेनान्वितो जायत इति द्रष्टव्यं । ननु सूक्ष्माणि भूतानि प्रथममुत्पद्यन्ते अनन्तरं तासां त्रिवृतं त्रिवृतमेकैकम-करोदिति । पञ्चीकरणोपलक्षणार्थं त्रिवृत्करणश्रुतेः पञ्चात्मकत्वमवगम्यते । तत एकैकस्य भूतस्य गुणवत्त्वं वर्णितमन्यत्र कथमिह पञ्चीकरणमनादृत्य प्रथमसर्गस्य वाऽऽकाशस्यैकगुणत्वं वायोर्हि द्विगुणत्वं तेजसस्त्रिगुणत्वमित्याद्युच्यते । सत्यं । भूतसर्गतात्पर्याभावद्योतनाय प्रक्रियान्तरं न विरुध्यते । न ह्येतत्प्रतिबद्ध

उ० खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥ ३ ॥

अग्निर्म्मूर्द्धा चक्षुषी चन्द्रसूर्य्यौ दिशः श्रोत्रे

---

भा० भूतानि खमाकाशं वायुर्वाह्य आवहादिभेदः। ज्योतिरग्निः। आप उदकं। पृथिवी धरित्री विश्वस्य सर्व्वस्य धारिणी। एतानि च शब्दस्पर्शरूपरसगन्धोत्तरोत्तरगुणानि पूर्व्वपूर्व्वगुणसहितान्येतस्मादेव जायन्ते। सङ्क्षेपतः परविद्याविषयमक्षरं निर्विशेषं पुरुषं सत्यं दिव्यो ह्यमूर्त्त इत्यादिना मन्त्रेणोक्का पुनस्तदेव सविशेषं विस्तरेण वक्तव्यमिति प्रवृत्ते सङ्क्षेपविस्तरोक्तो हि पदार्थः सुखाधिगम्यो भवति सूत्रभाष्योक्तिवदिति ॥ ३ ॥

योऽपि प्रथमजात्प्राणाद्धिरण्यगर्भाज्जायतेऽस्यान्तर्विराट्सतत्त्वान्तरितत्वेन लक्ष्यमाणोऽप्येतस्मादेव पुरुषाज्जायत एव तन्मयश्चेत्येतदर्थमाह। तञ्च विशिनष्टि। अग्निर्द्युलोकः। असौ वाव लोको गौतमाग्निरिति श्रुतेः। मूर्द्धा यस्योत्तमाङ्गं शिरः। चक्षुषी चन्द्रश्च सूर्य्यश्चेति। चन्द्रसूर्य्यौ यस्येति सर्व्वत्रानुषङ्गः कर्त्तव्यः। अस्येत्यस्य पदस्य

---

आ० किञ्चित्फलं श्रूयते। अत एव गुणगुणीभावोऽपि न वंशविकपल्लवदिह विवक्षितः। किन्तु राज्ञः शिर इति तद्व्यपदेशमात्रं। विस्तरेण त्वन्त्यकार्य्यपर्य्यन्तं तेन तेनाकारेण ब्रह्मैव विवर्त्तित इति प्रपञ्च्यते। ततोऽतिरिक्तस्याणुमात्रस्यासम्भवात्तस्मिन् विज्ञाते सर्व्वमिदं विज्ञातं भवतीति प्रदर्शितमित्यर्थः ॥ २ ॥

सर्व्वेषां भूतानामिति पञ्चमहाभूतानामन्तरात्मा सूक्ष्मपञ्च-

उ० वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्व-
मस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ॥ ४ ॥
तस्मादग्निः समिधो यस्य सूर्य्यः सोमात् पर्जन्य
ओषधयः पृथिव्यां । पुमान् रेतः सिञ्चति योषि-
तायां बह्वीः प्रजाः पुरुषात् सम्प्रसूताः ॥ ५ ॥

---

भा० वक्ष्यमाणस्य यस्येति विपरिणामं कृत्वा दिशः श्रोत्रे यस्य ।
वाग्विवृता उद्घाटिताः प्रसिद्धा वेदाः । यस्य वायुः
प्राणो यस्य हृदयमन्तःकरणं विश्वं समस्तं जगदस्य यस्ये-
त्येतत् । सर्व्वं ह्यन्तःकरणविकारमेव जगन्मनस्येव सुषुप्ते
प्रलयदर्शनात् । जागरितेऽपि तत एवाग्निविस्फुलिङ्गवद्विप्र-
तिष्ठानात् । यस्य च पद्भ्यां जाता पृथिवी । एष देवो विष्णु-
रनन्तः प्रथमशरीरी त्रैलोक्यदेहोपाधिः सर्व्वेषां भूता-
नामन्तरात्मा । स हि सर्व्वभूतेषु द्रष्टा श्रोता मन्ता
विज्ञाता सर्व्वकरणात्मा पञ्चाग्निद्वारेण च याः संसरन्ति
प्रजास्ता अपि तस्मादेव पुरुषात्प्रजायन्त इत्युच्यते ॥ ४ ॥
तस्मात् परस्मात् पुरुषात् प्रजावस्थानविशेषरूपोऽग्निः । स
विशेष्यते । यस्य सूर्य्यः समिध इव समिधः । सूर्य्येण हि
द्युलोकः समिध्यते । ततो हि द्युलोकादग्निनिष्पन्नात्सोमात्
पर्जन्यो द्वितीयोऽग्निः सम्भवति । तस्माच्च पर्जन्यादोषधयः
पृथिव्यां भवन्ति । ओषधिभ्यः पुरुषाग्नौ हुताभ्यः पुमानग्नौ

---

आ० भूतशरीरे हि विराडित्यर्थः ॥ पञ्चाग्निद्वारेणेति द्युपर्जन्यपृथि-

उ॰ तस्मादृचः साम यजूंषि दीक्षा यज्ञाश्च सर्वे क्रतवो दक्षिणाश्च । संवत्सरश्च यजमानश्च लोकाः सोमो यत्र पवते यत्र सूर्य्यः ॥ ६ ॥ तस्माच्च देवा बहुधा सम्प्रसूताः साध्या मनुष्याः पशवो वयांसि ।

---

भा॰ रेतः सिञ्चति योषितायां योषिति योषाग्नौ स्त्रियामिति । एवङ्क्रमेण बह्वीर्बह्व्यः प्रजाः ब्राह्मणाद्याः पुरुषात्परस्मात्सम्प्रसूताः समुत्पन्नाः । किञ्च कर्म्मसाधनानि फलानि च तस्मादेवेत्याह ॥ ५ ॥

कथं तस्मात्पुरुषादृचो नियताक्षरपादावसानाः गायत्र्यादिच्छन्दोविशिष्टा मन्त्राः । साम पाञ्चभक्तिकं साप्तभक्तिकञ्च स्तोभादिगीतिविशिष्टं । यजूंष्यनियताक्षरपादावसानानि वाक्यरूपाणि एवं त्रिविधा मन्त्राः । दीक्षा मौञ्ज्यादिलक्षणकर्तृनियमविशेषाः । यज्ञाश्च सर्व्वेऽग्निहोत्रादयः । क्रतवः सयूपाः । दक्षिणाश्चैकगवाद्यपरिमितसर्व्वस्वान्ताः । संवत्सरश्च कालकर्म्माङ्गं । यजमानश्च कर्त्ता । लोकास्तस्य कर्म्मफलभूतास्ते विशेष्यन्ते । सोमो यत्र येषु पवते पुनाति लोकान् यत्र येषु सूर्य्यस्तपति ते च दक्षिणायनोत्तरायणमार्गद्वयगम्या विद्वदविद्वत्कर्तृफलभूताः ॥ ६ ॥

---

था॰ वीपुरुषयोषित्सु पञ्चस्वग्निदृष्टेः श्रुत्यन्तरचोदितत्वात्तद्द्वारेणोत्पत्तिः ॥ ४ ॥ ५ ॥

पाञ्चभक्तिकमिति हिङ्कारप्रस्तावोद्गीथप्रतिहारनिधनाख्याः पञ्च भक्तयोऽवयवा यस्य तथोक्तं । साप्तभक्तिकमिति हिङ्कारप-

उ॰ प्राणापानौ व्रीहियवौ तपश्च श्रद्धा सत्यं ब्रह्म-
चर्य्यं विधिश्च ॥ ७ ॥

सप्त प्राणाः प्रभवन्ति तस्मात्सप्तार्च्चिषः समिधः
सप्त होमाः । सप्त इमे लोका येषु चरन्ति प्राणा

---

भा॰ तस्माच्च पुरुषात्कर्म्माङ्गभूता देवा बहुधा वस्वादिगणभेदेन
सम्यक् प्रसूताः । साध्या देवविशेषाः । मनुष्याः कर्म्माधिकृताः ।
पशवो ग्राम्यारण्याः । वयांसि पक्षिणः । जीवनञ्च मनुष्या-
दीनां । प्राणापानौ व्रीहियवौ हविरर्थौ । तपश्च कर्म्माङ्ग-
पुरुषसंस्कारलक्षणं स्वतन्त्रञ्च फलसाधनं । श्रद्धा यत्पूर्व्वकः
सर्व्वपुरुषार्थसाधनप्रयोगश्चित्तप्रसाद आस्तिक्यबुद्धिः । सत्य-
मनृतवर्जितं यथाभूतार्थवचनञ्चापीडाकरं । ब्रह्मचर्य्यं मैथु-
नासमाचारः । विधिश्चेतिकर्त्तव्यता ॥ ७ ॥

किञ्च सप्तशीर्षण्याः प्राणास्तस्मादेव पुरुषात्प्रभवन्ति ।
तेषाञ्च सप्तार्च्चिषो दीप्तयः स्वस्वविषयावद्योतनानि । तथा
सप्त समिधः सप्त विषयाः । विषयैर्हि समिध्यन्ते प्राणाः । सप्त
होमास्तद्विषयविज्ञानानि । यदस्य विज्ञानं तज्जुहोतीति
श्रुत्यन्तरात् । किञ्च सप्त इमे लोका इन्द्रियस्थानानि येषु
चरन्ति प्राणाः । प्राणा इति विशेषणात्प्राणानां विशे-

---

आ॰ स्तावाद्युद्गीथप्रतिहारोपद्रवनिधनाख्याः सप्त भक्तयो यस्य तथो-
क्तं । स्तोभोऽर्थशून्या वर्णाः । विश्वजित्सर्व्वमेधयोः सर्व्वस्वदक्षिणा
अत एकाङ्गामारभ्य सर्व्वस्वान्ता दक्षिणा भवन्तीत्यर्थः॥ ६ ॥ ७ ॥

तपश्च कर्म्माङ्गमिति पयो ब्राह्मणस्य व्रतं यवागू राजन्यस्या-
मिक्षा वैश्यस्येत्यादि श्रुतिविहितं कृच्छ्रचान्द्रायणादीत्यर्थः । आत्म-

उ॰ गुहाशया निहिताः सप्त सप्त ॥ ८ ॥ अतः समुद्रा गिरयश्च सर्व्वेऽस्मात् स्यन्दन्ते सिन्धवः सर्व्वरूपाः । अतश्च सर्व्वा ओषधयो रसश्च येनैष भूतैस्तिष्ठते ह्यन्तरात्मा ॥ ९ ॥ पुरुष एवेदं विश्वं

भा॰ षणमिदं प्राणापानादिनिवृत्त्यर्थं । गुहायां शरीरे हृदये वा स्वापकाले शेरत इति गुहाशयाः । निहिताः स्थापिता धात्रा सप्त सप्त प्रति प्राणिभेदं । यानि च आत्मयाजिनां विदुषां कर्म्माणि तत्साधनानि कर्म्मफलानि अविदुषाञ्च कर्म्माणि तत्साधनानि कर्म्मफलानि च सर्व्वञ्चैतत्परस्मादेव पुरुषात्सर्व्वज्ञात्प्रसूतमिति प्रकरणार्थः ॥ ८ ॥ अतः पुरुषात्समुद्राः सर्व्वे क्षाराद्याः । गिरयश्च हिमवदादयो ऽस्मादेव पुरुषात् सर्व्वे । स्यन्दन्ते स्रवन्ति गङ्गाद्याः सिन्धवो नद्यः सर्व्वरूपाः बहुरूपाः । अस्मादेव पुरुषात्सर्व्वा ओषधयो व्रीहियवाद्याः । रसश्च मधुरादिः षड्विधो येन रसेन भूतैः पञ्चभिः स्थूलैः परिवेष्टितस्तिष्ठते तिष्ठति ह्यन्तरात्मा लिङ्गं सूक्ष्मं शरीरं । तद्ध्यन्तराले शरीरस्यात्मनश्चात्मा वर्त्तत इत्यन्तरात्मा ॥ ९ ॥ एवं पुरुषात्सर्व्वमिदं सम्प्रसूतं । अतो वाचारम्भणं विकारो नामधेयमनृतं पुरुष इत्येव सत्यं । अतः पुरुष एवेदं सर्व्वं । न विश्वं नाम पुरुषादन्यत् किञ्चिदस्ति । अतो यदुक्तं तदेतदभिहितं कस्मिन्नु

आ॰ याजिनामिति सकलमिदमहञ्च परमात्मैवेति भावनापूर्व्वकं परमेश्वराराधनबुद्ध्या ये यजन्ति तेषामित्यर्थः । यत्पृष्टं कस्मिन्नु भगवो

उ० कर्म्म तपो ब्रह्म परामृतं। एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य ॥ १० ॥

इति द्वितीयमुण्डके प्रथमः खण्डः ॥ १ ॥

आविः सन्निहितं गुहाचरन्नाम महत्पदम-

---

भा० भगवो विज्ञाते सर्व्वमिदं विज्ञातं भवतीति। एतस्मिन् हि परस्मिन्नात्मनि सर्व्वकारणे पुरुष एवेदं विश्वं नामैतदस्तीति विज्ञातं भवतीति किं पुनरिदं विश्वमित्युच्यते। कर्म्माग्निहोत्रादिलक्षणं। तपो ज्ञानं तत्कृतं फलमन्यदेव तावद्धीदं सर्व्वं। तच्चैतद्ब्रह्मणः कार्य्यं तस्माद्ब्रह्म परममृतमहमेवेति यो वेद निहितं स्थितं गुहायां हृदि सर्व्वप्राणिनां स एवं विज्ञानादविद्याग्रन्थिमिव दृढीभूतामविद्यावासनां विकिरति विक्षिपति नाशयतीह जीवन्नेव न मृतः सन् हे सोम्य प्रियदर्शन ॥ १० ॥ इति द्वितीयमुण्डके प्रथमखण्डभाष्यं ॥ १ ॥

अरूपं सदक्षरं केन प्रकारेण विज्ञेयमित्युच्यते। आविः प्रकाशं सन्निहितं वागाद्युपाधिभिर्ज्वलति भ्राजतीति श्रुत्यन्तराच्छब्दादीनुपलभमानवदवभासते। दर्शन-

---

आ० विज्ञाते सर्व्वमिदं विज्ञातं भवतीति तन्निरूपितं। सर्व्वं परमात्मनो जायते। अतस्तावन्मात्रं सर्व्वं तस्मिन्विज्ञाते विज्ञातं भवतीत्यविद्याक्षयफलाभिधानेनोपसंहृतमिति ॥ ८ ॥ ९ ॥ १० ॥
इति प्रथमः खण्डः ॥ १ ॥

अधुना यस्य सकृदुपदेशमात्रेणाद्वितीयं ब्रह्मास्मीति वाक्यार्थज्ञानमवगत्यन्तं न भवतीति तस्योपायानुष्ठानेन भवितव्यमि-

उ॰ र्पितं समर्पितं। एजत्प्राणन्निमिषच्च यदेतज्जानथ सदसद्वरेण्यं परविज्ञानाद्यद्वरिष्ठं प्रजानां ॥ १॥ यदर्चिमद्यदणुभ्योऽणु यस्मिन् लोका निहिता

भा॰ श्रवणमननविज्ञानाद्युपाधिधर्म्मैराविर्भूतं सन्नच्यते हृदि सर्व्वप्राणिनां। यदेतदाविर्भूतं ब्रह्म सन्निहितं सम्यक्स्थितं हृदि तद्गुहाचरं नाम गुहायाञ्चरतीति दर्शनश्रवणादि प्रकारैर्गुहाचरमिति प्रख्यातं। महत्सर्व्वमहत्त्वात्पदं पद्यते सर्व्वेणेति सर्व्वपदार्थास्पदत्वात्। कथं तन्महत्पदमित्युच्यते। यत्त्रास्मिन् ब्रह्मण्येतत्सर्व्वं समर्पितं प्रवेशितं रथनाभाविव। एजच्चलत्पक्ष्यादि। प्राणत्प्राणितीति प्राणापानादिमन्मनुष्यपश्वादि। निमिषन्निमिषादिक्रियावत् यच्चानिमिषच्च शब्दात्समस्तमेतदत्रैव ब्रह्मणि समर्पितं। एतद्यदास्पदं सर्व्वं जानथ हे शिष्या अवगच्छथ तदात्मभूतं भवतां सदसत्स्वरूपं। सदसतोर्मूर्त्तामूर्त्तयोः स्थूलसूक्ष्मयोस्तद्व्यतिरेकेणाभावात्। वरेण्यं वरणीयं तदेव हि सर्व्वस्य नित्यत्वात्प्रार्थनीयं परं व्यतिरिक्तं विज्ञानात्प्रजानामिति व्यवहितेन सम्बन्धो

आ॰ त्वभिप्रेत्याह। अरूपं सदक्षरमिति॥ वाक्यार्थस्यैव पुनः पुनर्भावना युक्त्यनुसन्धानश्चोपाय इत्याह। उच्यत इति॥ आविःशब्दो निपातः प्रकाशवाची। ब्रह्म विम्बोपलब्ध्यात्मना प्रकाशमानमेव सदेति भावयेदित्यर्थः। अन्यैरप्युक्तं यदस्ति यद्भाति तदात्मरूपं नान्यत्ततो भाति न चान्यदस्ति। स्वभावसंवित्प्रतिभाति केवलं ग्राह्यं ग्रहीतेति मृषैव कल्पनेति। सन्निहितमिति सर्व्वेषां प्राणानां हृदये स्थितवागाद्युपाधिभिः शब्दादीनुपलभमानव-

उ॰ लोकिनश्च । तदेतदक्षरं ब्रह्म स प्राणस्तदु वाङ्मनः । तदेतत्सत्यं तदमृतं तद्वेद्धव्यं सोम्य विद्धि ॥ २ ॥

---

भा॰ यल्लौकिकविज्ञानागोचरमित्यर्थः । यद्वरिष्ठं वरतमं सर्व्वपदार्थेषु वरेषु तद्ध्येकं ब्रह्मातिशयेन वरं सर्व्वदोषरहितत्वात् ॥ १ ॥ किञ्च यदर्च्चिमद्दीप्तिमद्दीप्त्याऽऽदित्यादि दीप्यत इति दीप्तिमद्ब्रह्म । किञ्च यदणुभ्यः श्यामाकादिभ्योऽप्यणु सूक्ष्मं । चशब्दात्स्थूलेभ्योऽप्यतिशयेन स्थूलं पृथिव्यादिभ्यः । यस्मिंल्लोका भूरादयो निहिताः स्थिता ये च लोकिनो लोकनिवासिनो मनुष्यादयश्चैतन्याश्रया हि सर्व्वे प्रसिद्धास्तदेतत्सर्व्वाश्रयमक्षरं ब्रह्म स प्राणस्तदु वाङ्मनो वाक्च मनश्च सर्व्वाणि च करणानि अन्तश्चैतन्याः । अणो हि प्राणेन्द्रियादिसर्व्वसङ्घातः । प्राणस्य प्राणमिति श्रुत्यन्तरात् । यत्प्राणादीनामन्तश्चैतन्यमक्षरं तदेतत्सत्य-

---

व्या॰ ब्रह्मैव जीवभावमापन्नमवभासते । ततस्ततोऽपरोक्षस्त्वेति सदा स्मरेदित्यर्थः । सर्व्वमिदं कार्य्यं परिच्छिन्नञ्च सास्पदकार्य्यत्वात्परिच्छिन्नत्वाच्च घटादिवत्ततः सर्व्वास्पदं यत्तदेव मायास्पदमात्मभूतमिति युक्त्यनुसन्धानमाह । सहत्पदमिति ॥ १ ॥ घटादिवदादित्यादेर्जडत्वेऽपि यद्दीप्तिमत्त्वे वैचित्र्यं तदनुपपत्त्यापि तत्कारणं सम्भावनीयमित्याह । किञ्च यदर्च्चिमदिति ॥ अर्च्चिमत्त्वादादित्यादिवदिन्द्रियग्राह्यत्वं प्राप्तं निषेधति । यदणुभ्य इति ॥ परमाणुपरिमाणत्वं तर्हि स्यादिति नाशङ्कनीयमित्याह । चशब्दादिति ॥ स्थूलत्वात्तर्हि अन्याधारं स्यादिति नाशङ्कनीयमित्याह । यस्मिंल्लोका इति ॥ प्राणादिप्रवृत्तिश्चेतनाधिष्ठाना-

उ॰ धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासा निशितं सन्धीयत । आयम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सोम्य विद्धि ॥ ३ ॥ प्रणवो

भा॰ मवितथमतोऽमृतमविनाशि तद्वेद्धव्यं मनसा ताडयितव्यं। तस्मिन्मनःसमाधानं कर्त्तव्यमित्यर्थः । यस्मादेवं हे सोम्य विद्धि अक्षरे चेतः समाधत्स्व ॥ २ ॥

कथं वेद्धव्यमित्युच्यते। धनुरिष्वासनं गृहीत्वौपनिषदमुपनिषत्सु भवं प्रसिद्धं महास्त्रं महच्च तदस्त्रञ्च धनुस्तस्मिन् शरं। किंविशिष्टमित्याह। उपासा निशितं सन्तताभिध्यानेन तनूकृतं संस्कृतमित्येतत्। सन्धीयत सन्धानं कुर्यात्। सन्धाय चायम्याकृष्य सेन्द्रियमन्तःकरणं स्वविषयाद्विनिवर्त्त्य लक्ष्य एवावर्जितं कृत्वेत्यर्थः। न हि हस्तेनेव धनुष आयमनमिह सम्भवति। तद्भावगतेन तस्मिन् ब्रह्मण्यक्षरे लक्ष्ये भावना भावस्तद्गतेन च सालक्ष्यं तदेव यथोक्तलक्षणमक्षरं सोम्य विद्धि। यदुक्तं धनुरादि तदुच्यते। प्रणव ओङ्कारो धनुः। यथेष्वासनं लक्ष्ये शरस्य प्रवेशकारणं तथात्मशरस्याक्षरे लक्ष्ये प्रवेशकारणमोङ्कारः।

आ॰ निबन्धनाज्जडप्रवृत्तित्वाद्रथादिप्रवृत्तिवच्चिद्भेदे च प्रमाणाभावा दद्वं चैतन्यमात्रमस्तीति विचारयेदित्याह। तदेतत्सर्वाश्रयमिति॥ प्राणाद्यधिष्ठानत्वात्प्राणादिलक्ष्य आत्मा द्रष्टव्यः ॥ २ ॥

विचारासमर्थस्य प्रणवमवलम्ब्य ब्रह्मात्मकत्वे चित्तसमाधानं क्रमसुक्तिफलं दर्शयितुमुपक्रमते। कथं वेद्धव्यमित्यादिना॥ प्रणवो ब्रह्मेत्यभिध्यायत उपसंहृतकरणग्रामस्य प्रणवापरक्तं यच्चैतन्य

उ० धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते । अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥ ४ ॥

अस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह

---

भा० प्रणवेन ह्यभ्यस्यमानेन संस्क्रियमाणस्तदालम्बनोऽप्रतिबन्धेनाक्षरेऽवतिष्ठते। यथा धनुषास्त इषुर्लक्ष्ये। अतः प्रणवो धनुरिव धनुः। शरो ह्यात्मोपाधिलक्षणः पर एव जलसूर्यकादिवदिह प्रविष्टो देहे सर्व्वबौद्धप्रत्ययसाक्षितया स शर इव स्वात्मन्येवार्पितोऽक्षरे ब्रह्मणि। अतो ब्रह्म तल्लक्ष्यमुच्यते लक्ष्यमिव मनः समाधित्सुभिरात्मभावेन लक्ष्यमाणत्वात्। तत्रैवं सति बाह्यविषयोपलब्धितृष्णाप्रमादवर्जितेन सर्व्वतो विरक्तेन जितेन्द्रियेणैकाग्रचित्तेन वेद्धव्यं ब्रह्म लक्ष्यं। ततस्तद्वेधनादूर्द्धं शरवत्तन्मयो भवेत्। यथा शरस्य लक्ष्यैकात्मत्वं फलं भवति। तथा देहाद्यनात्मप्रत्ययतिरस्करणेनाक्षरैकात्मत्वं फलमापादयेदित्यर्थः ॥ ३ ॥ ४ ॥

अक्षरस्यैव दुर्लक्ष्यत्वात्पुनः पुनर्वचनं सुलक्षणार्थं। यस्मिन्नक्षरपुरुषे द्यौः पृथिवी चान्तरिक्षञ्चोतं समर्पितं मनश्च सह प्राणैः करणैरन्यैः सर्व्वैस्तमेव सर्व्वाश्रयमेकमद्वितीयं जानथ जानीथ हे शिष्याः। आत्मानं प्रत्यक्स्वरूपं युष्माकं सर्व्वप्राणिनाञ्च ज्ञात्वा चान्या वाचोऽपरविद्यारूपा विमुञ्चथ विमुञ्चत परित्यजत। तत्प्रकाश्यञ्च

---

आ० प्रतिविम्बं स्फुरति स आत्मेत्यनुसन्धानं प्रणवे शरसन्धानं। तस्य चित्प्रतिविम्बसन्धानं लक्ष्यवेधः॥ उत्तरग्रन्थस्य पौनरुक्त्यं परिहरति। अक्षरस्यैव दुर्लक्ष्यत्वादिति ॥ ३ ॥ ४ ॥

ससाधनं सर्व्वं कर्म्म परित्यज्यात्मैव ज्ञातव्य इत्येव हेतुमाह

उ० प्राणैश्च सर्वैः । तमेवैकं जानथ आत्मानमन्या
वाचो विमुञ्चथ अमृतस्यैष सेतुः ॥ ५ ॥ अरा
इव रथनाभौ संहता यत्र नाड्यः स एषोऽन्तश्च-

---

भा० सर्व्वं कर्म्म समाधनं। यथाऽमृतस्यैष सेतुरेतदात्मज्ञानम-
मृतस्यामृतत्वस्य मोक्षप्राप्तये सेतुः संसारमहोदधेरुत्त
रणहेतुत्वात् तथा च श्रुत्यन्तरं । तमेव विदित्वाति-
मृत्युमेति नान्यः पन्था विद्यतेऽयनायेति ॥ ५ ॥ किञ्च।
अरा इव। यथा रथनाभौ समर्पिता अरा एवं संहताः
सम्प्रविष्टा यत्र यस्मिन् हृदये सर्व्वतो देहव्यापिन्यो
नाम तस्मिन् हृदये बुद्धिप्रत्ययसाक्षिभूतः स एष प्रकृत
आत्मा तन्मध्ये चरते चरति वर्त्तते । पश्यन् शृण्वन्
मन्वानो विजानन् बहुधाऽनेकधा क्रोधहर्षादिप्रत्ययै
र्जायमान इव जायमानोऽन्तःकरणोपाध्यनविधायित्वा
द्वदन्ति लौकिका हृष्टो जातः क्रुद्धो जात इति। तमा
त्मानमोमित्येवमोङ्कारालम्बनाः सन्तो यथोक्तकल्पनया
ध्यायथ चिन्तयत । उक्तञ्च । वक्तव्यं शिष्येभ्य आचार्य्येण
जानता। शिष्याश्च ब्रह्मविद्या विविदिषवो निवृत्तकर्म्माणो

---

आ० अमृतस्येति॥ धनुषाऽऽयुधेन लक्ष्यत इति तस्मन्तस्य आत्मैकत्व
साक्षात्कार इत्यर्थः। कर्म्मसङ्गिजनसङ्गत्या कर्म्मश्रद्धा विषयश्रद्धा
च वाक्यार्थज्ञानस्यावगत्यन्ततायाः प्रतिबन्धका विघ्नः स माभू
दिति प्रसंसनं। न तु वाक्यार्थावगतौ निष्पन्नायां फलप्राप्तौ विघ्नश-
ङ्काऽस्तीत्यभिप्रेत्याह । परस्तादिति ॥ मदुपदेशादूर्द्ध्वमित्यर्थः।
सर्व्वेश्वरत्वं मनोमयत्वादिगुणविशिष्टब्रह्मणो। हृदयपुण्डरीके

उ० एते बहुधा जायमानः । ओमित्येवं ध्यायथ
आत्मानं स्वस्ति वः पाराय तमसः परस्तात् ॥ ६ ॥
यः सर्वज्ञः सर्वविद्यस्यैष महिमा भुवि दिव्ये

भा० मोक्षपथे प्रवृत्ताः । तेषां निर्विघ्नतया ब्रह्मप्राप्तिमाशास्त्या-
चार्य्यः । स्वस्ति निर्व्विघ्नमस्तु वो युष्माकं पराय परकालाय ।
कस्य । अविद्यातमसः परस्तात् । कस्मात् । अविद्यातमसोऽ
विद्यारहितब्रह्मात्मस्वरूपगमनायेत्यर्थः । योऽसौ तमसः
परस्तात् संसारमहोदधिं तीर्त्वा गन्तव्यः परविद्याविषय
इति ॥ ६ ॥

स कस्मिन् वर्त्तत इत्याह । यः सर्व्वज्ञः सर्व्वविद्या
व्याख्यातस्तं पुनर्विशिनष्टि । यस्यैष प्रसिद्धो महिमा
विभूतिः । कोऽसौ महिमा । यस्येमे द्यावापृथिवी शासने
विधृते तिष्ठतः । सूर्य्याचन्द्रमसौ यस्य शासनेऽलातचक्रवद-
जस्रं भ्रमतः । यस्य शासने सरितः सागराश्च स्वगोचरं
नातिक्रामन्ति । तथा स्थावरं जङ्गमञ्च यस्य शासने नियतं ।
तथा ऋत्तवोऽयनेऽब्दाश्च यस्य शासनं नातिक्रामन्ति ।
तथा कर्त्तारः कर्म्माणि फलञ्च यच्छासनात्स्वं स्वं कालं
नातिवर्त्तते स एष महिमा । भुवि लोके यस्य स एष

आ० ध्यानस्य क्रममुक्तिफलं । मन्दब्रह्मविदो विधीयत इति दर्शयितु-
माह । योऽसौ तमसः परस्तादित्यादिना ॥ ५ ॥ ६ ॥
अस्य परमात्मध्यानस्येति ॥ जीवन्मुक्तिफलस्याद्वैतवाक्यार्थावग-
मस्य चोपासनस्येत्यर्थः ॥ अविद्यावासनाप्रचयो भिद्यत इति कोऽर्थः ।
किं बुद्धौ विद्यमानायामविद्यादिभेदे ज्ञानफलं किंवा तन्निवृत्तौ ।

उ॰ ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठितः । मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्ने हृदयं सन्निधाय तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपम-

भा॰ सर्व्वज्ञ एवं महिमा । दिव्ये द्योतनवति सर्व्वबौद्धप्रत्ययकृतद्योतने ब्रह्मपुरे मनसि । ब्रह्मणोऽत्र चैतन्यस्वरूपेण नित्याभिव्यक्तत्वाद्ब्रह्मणः पुरं हृदयपुण्डरीकं तस्मिन् यद्व्योम तस्मिन् व्योम्न्याकाशे हृत्पुण्डरीकमध्यस्थे प्रतिष्ठित इवोपलभ्यते । न ह्याकाशवत्सर्व्वगतस्य गतिरागतिः प्रतिष्ठावान्यथा सम्भवति । स ह्यात्मा तत्रस्थो मनोवृत्तिभिरेव विभाव्यत इति । मनोमयो मनउपाधित्वात्प्राणशरीरनेता । प्राणश्च शरीरञ्च प्राणशरीरं तस्यायं नेता स्थूलाच्छरीराच्छरीरान्तरं सूक्ष्मं प्रति प्रतिष्ठितोऽन्ने भुज्यमानान्नविपरिणामे प्रतिदिनमुपचीयमानेऽपचीयमाने च पिण्डरूपान्ने हृदयं बुद्धिं पुण्डरीकच्छिद्रे सन्निधाय समवस्थाप्य हृदयावस्थान-

व्या॰ नाद्यः । सत्युपादाने कार्य्यस्यात्यन्तोच्छेदासम्भवात् ॥ न द्वितीयः । ज्ञानस्याज्ञानेनैव साक्षाद्विरोधप्रसिद्धेः । किञ्च । बुद्धिरप्यनादिः सादिर्वा । नाद्यः । एतस्माज्जायते प्राणो मनः सर्व्वेन्द्रियाणि चेति श्रुतिविरोधान्नान्त्यप्रलये ब्रह्मज्ञानं विनैव बुद्धेर्नाशसम्भवात्तदानर्थक्यप्रसङ्गात् । सादित्वे च बुद्धेरुपादानं साक्षाद्ब्रह्म चेत्तन्नाशं विनाऽत्यन्तोच्छेदो न स्यात् । माया चेत्सा दृष्टृगतज्ञानेन नोच्छेदमर्हति । लौकिकमायाविगतमायाया दृष्टृगतज्ञानेनोच्छेदादर्शनात् । किञ्च । बुद्धेरुच्छेदो न तस्याः फलं । स्वनाशस्यापफलत्वादात्मनः । तस्य बुद्धिसङ्गाभावेन तदुच्छेदस्याफलत्वात् । किञ्चात्मनोऽविद्याश्रयत्वाभिधानं श्रुतिविरुद्धप्रक्रमेऽविद्यायामन्तरे वर्त्तमाना इति श्रवणादुपसंहारे च अनीशया शोचति मुह्यमान

उ॰ मृतं यद्विभाति ॥ ७ ॥ भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्म्माणि तस्मिन्दृष्टे परावरे ॥ ८ ॥

---

भा॰ मेव ह्यात्मनः स्थितिरन्ने तदात्मतत्त्वं विज्ञानेन विशिष्टेन शास्त्राचार्य्योपदेशजनितेन ज्ञानशमदमध्यानवैराग्योद्भूतेन परिपश्यन्ति सर्व्वतः पूर्णं पश्यन्ति उपलभन्ते धीरा विवेकिनः । आनन्दरूपं सर्व्वानर्थदुःखायासप्रहीणममृतं यद्विभाति विशेषेण स्वात्मन्येव भाति सर्व्वदा ॥ ७ ॥ अस्य परमात्मज्ञानफलमिदमभिधीयते । भिद्यते हृदयग्रन्थिरविद्या वासनामयः । बुद्ध्याश्रयास्तथा प्रोक्ताः कामा येऽस्य हृदि श्रिता इति श्रुत्यन्तरात् । हृदयाश्रयोऽसौ नात्माश्रयः । भिद्यते भेदं विनाशमायाति हृदयग्रन्थिः । छिद्यन्ते सर्व्वेऽज्ञानविषयाः संशया लौकिकानामामरणात्तु गङ्गास्रोतोवत्प्रवृत्ता विच्छेदमायान्ति । अस्य विच्छिन्नसंशयस्य निवृत्ताविद्यस्य यानि विज्ञानोत्पत्तेः प्राक्तनानि जन्मान्तरे चाप्रवृत्तफलानि ज्ञानोत्पत्तिसहभावीनि च क्षीयन्ते

---

आ॰ इति अवशाद्बुद्धिगतमेवाविद्याद्यात्मन्यध्यस्यत इति चेदध्यस्यत इति कोऽर्थो निक्षिप्यते भ्रान्त्या दृश्यते वा । नाद्यः । अन्यधर्मस्यान्यत्र निक्षेपासम्भवात् । भ्रान्त्या च केन दृश्यते । न तावदात्मना तस्याविद्याश्रयत्वानङ्गीकारात् । न बुद्ध्या । बुद्धेरात्मविषयत्वासम्भवेन तद्गतदर्शनासम्भवात् । भ्रान्तेश्च स्वाश्रयगतेन तत्त्वानुभवेन निवर्त्यत्वप्रसिद्धेर्बुद्धेरनुभवाश्रयत्वप्रसङ्गात् । तस्मान्नास्य भाष्यस्य सम्यगर्थं पश्याम इति चेदुच्यते । चित्सम्बन्धादिरनिर्व्वाच्या विद्या

उ० हिरण्मये परे कोशे विरजं ब्रह्म निष्कलं ।
तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः॥

---

भा० कर्म्माणि । न त्वेतज्जन्मान्तरारम्भकाणि प्रवृत्तफलत्वात्त-स्मिन् सर्व्वज्ञेऽसंसारिणि दृष्टे परावरे परञ्च कारणात्मना अवरञ्च कार्य्यात्मना तस्मिन् परावरे साक्षादहमस्मीति दृष्टे संसारकारणोच्छेदान्मुच्यत इत्यर्थः ॥ ८ ॥

उक्तस्यैवार्थस्य सङ्क्षेपाभिधायका उत्तरे मन्त्रास्त्रयो ऽपि हिरण्मये ज्योतिर्म्मये बुद्धिविज्ञानप्रकाशे परे कोश इवाऽसेः । आत्मस्वरूपोपलब्धिस्थानत्वात्परं सर्व्वाभ्यन्त-रत्वात्तस्मिन् विरजमविद्याद्यशेषदोषरजोमलवर्जितं ब्रह्म सर्व्वमहत्त्वात्सर्व्वात्मत्वाच्च निष्कलं निर्गताः कला यस्मा-त्तन्निष्कलं निरवयवमित्यर्थः । यस्माद्विरजं निष्कलञ्चा-तस्तच्छुभ्रं शुद्धं ज्योतिषां सर्व्वप्रकाशात्मनामग्न्यादीनामपि तज्ज्योतिरवभासं । अग्न्यादीनामपि ज्योतिष्ट्वमन्तर्गतब्र-ह्मात्मचैतन्यज्योतिर्निमित्तमित्यर्थः । तद्धि परं ज्योतिर्यद-न्यानवभास्यमात्मज्योतिस्तद्यदात्मविद आत्मानं शब्दादि-विषयबुद्धिप्रत्ययसाक्षिणं ये विवेकिनो विदुर्विजानन्ति ते

---

टी० चैतन्यमवच्छिद्य स्वावच्छिन्नचैतन्यस्य बुद्ध्यादितादात्म्यरूपेण विव-र्त्तते । तस्याश्च ब्रह्मात्मतासाक्षात्कारनिवर्त्यरूपाङ्गीकारात्तन्नि-वृत्तौ तदुक्तं हृदयग्रन्थिभेदं श्रुत्योच्यते । भाष्यकारीयश्च बुद्ध्याश्रये-त्वाभिधानमहङ्कारविशेषणत्वेनाविद्यादेर्व्यावहारिकाभिप्रायत्व-मात्माश्रयत्वाभिधानञ्चात्मनो निर्विकारत्वाभिप्रायं ॥ ७ ॥ ८ ॥
बाधितानुवृत्तिश्च प्रकटार्थं प्रदर्शितेति जीवन्मुक्तिर्न विरुध्यते।

उ० ९॥ न तत्र सूर्य्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥१०॥

भा० आत्मविदस्तद्विद् रात्मप्रत्ययानुसारिणः। यस्मात्परं ज्योतिस्तस्मात्त एव तद्विदुर्नेतरे वाह्यार्थप्रत्ययानुसारिणः ॥ ९ ॥ कथं तज्ज्योतिषां ज्योतिरित्युच्यते। न तत्र तस्मिन् स्वात्मभूते ब्रह्मणि सर्व्वावभासकोऽपि सूर्य्यो न भाति। तद्ब्रह्म न प्रकाशयतीत्यर्थः। स हि तस्यैव भासा सर्व्वमन्यदनात्मजातं प्रकाशयतीत्यर्थः। न तु तस्य स्वतः प्रकाशनसामर्थ्यं। तथा न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निरस्मद्गोचरः। किं बहुना। यदिदं जगद्भाति तत्तमेव परमेश्वरं स्वतो भारूपत्वाद्भान्तं दीप्यमानमनुभात्यनुदीप्यते। यथा जलोल्मुकादि अग्निसंयोगादग्निं दहन्तमनुदहति न स्वतस्तद्वत्तस्यैव भासा दीप्त्या सर्व्वमिदं सूर्य्यादिमज्जगद्विभाति। यत एवं तदेव ब्रह्म भाति च विभाति च कार्य्यगतेन विविधेन भासा अतस्तस्य ब्रह्मणो भारूपत्वं स्वतोऽवगम्यते। न हि स्वतो विद्यमानं भासनमन्यस्य कर्त्तुं शक्नोति। घटादीनामन्यावभासकत्वादर्शनाद्भारूपाणाञ्चादित्यादीनां तद्दर्शनात् ॥ १० ॥ यत्तज्ज्योतिषां ज्योतिर्ब्रह्म तदेव सत्यं सर्व्वं तद्विकारं वाचा-

आ० भातीति णिजन्ताध्याहारेण व्याख्यातं तस्य भासा सर्व्वमिदं विभातीत्यस्य प्रसङ्गः स्वतो भारूपत्वे तात्पर्य्यं कथयति। यत एव

उ० ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्त-
रेण । अधश्चोर्द्ध्वञ्च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठं
॥ ११ ॥ इति द्वितीयमुण्डके द्वितीयः खण्डः ॥
२ ॥ इति द्वितीयमुण्डकं समाप्तं ॥ २ ॥

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परि-

---

भा० रम्भणं विकारो नामधेयमात्रमनृतमितरदित्येतमर्थं
विस्तरेण हेतुतः प्रतिपादितं निगमनस्थानीयेन मन्त्रेण
पुनरुपसंहरति । ब्रह्मैवाक्षरलक्षणमिदं यत्पुरस्तादग्रे ब्रह्मै-
वाविद्यादृष्टीनां प्रत्यवभासमानं तथा पश्चाद्ब्रह्म तथा
दक्षिणतश्च तथोत्तरेण तथैवाधस्तादूर्द्ध्वञ्च सर्व्वतोऽन्यदपि
कार्य्याकारेण प्रसृतं प्रगतं नामरूपवदवभासमानं । किं
बहुना ब्रह्मैवेदं विश्वं समस्तमिदं जगद्वरिष्ठं वरतमं ।
अब्रह्मप्रत्ययः सर्व्वोऽविद्यामात्रो रज्ज्वामिव सर्पप्रत्ययः ।
ब्रह्मैवैकं परमार्थसत्यमिति वेदानुशासनं ॥ ११ ॥ इति
द्वितीयमुण्डकभाष्यं ॥ २ ॥

परा विद्योक्ता यया तदक्षरं पुरुषाख्यं सत्यमधिगम्यते ।

---

या० मिति तदेव ब्रह्म भाति चेति ॥ उपसंहारमन्त्रस्य तात्पर्य्यमाह ।
यत्तज्ज्योतिषां ज्योतिरिति ॥ न ब्रह्मणा विविधं क्रियत इति तद्वि-
कारं सर्व्वं असत्सर्व्वं ब्रह्मैवेति वाधायां सामानाधिकरण्यं योऽयं
स्थाणुः पुमानसाविति वदन्वयव्यतिरेकाभावपरिहारेण ताव-
न्मात्रत्वं बोध्यते ॥ ८ ॥ १० ॥ ११ ॥ इति द्वितीयमुण्डकभाष्यटीका ॥ २ ॥
प्राधान्येनेत्यपूर्व्वत्वेन तात्पर्य्यविषयतयेत्यर्थः । द्वा सुपर्णे-
त्यादौ द्विवचनस्याकारश्छान्दसः । जीवस्याप्तत्वेन नियम्यत्वेन

उ० षस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्-

भा० यदधिगमे हृदयग्रन्थ्यादेः संसारकारणस्यात्यन्तिकविनाशः स्यात्। दर्शनोपायश्च योगो धनुराद्युपादानकल्पनयोक्तः। अथेदानीं तत्सहकारीणि सत्यादिसाधनानि वक्तव्यानीति तदर्थमुत्तरारम्भः। प्राधान्येन तत्त्वनिर्द्धारणञ्च प्रकारान्तरेण क्रियते। अत्यन्तदुरवगाह्यत्वात्कृतमपि तत्र सूत्रभूतो मन्त्रः परमार्थवस्त्ववधारणार्थमुपन्यस्यते। द्वा द्वौ सुपर्णा सुपर्णौ शोभनपतनौ सुपर्णौ पक्षिसामान्याद्वा सुपर्णौ सयुजा सयुजौ सहैव सर्व्वदा युक्तौ सखाया सखायौ समानख्यातौ समानाभिव्यक्तिकारणौ एवम्भूतौ सन्तौ समानमविशेषमुपलब्ध्यधिष्ठानतया एकं वृक्षं वृक्षमिवोच्छेदनसामान्यात् शरीरं वृक्षं परिषस्वजाते परिष्वक्तवन्तौ। सुपर्णाविवैकं वृक्षं फलोपभोगार्थं। अयं हि वृक्ष ऊर्द्धमूलोऽवाक्शाखोऽश्वत्थोऽव्यक्तमूलप्रभवः क्षेत्रसंज्ञकः सर्व्वप्राणिकर्म्मफलाश्रयस्तं परिष्वक्तवन्तौ सुपर्णाविवाविद्याकामकर्म्मवासनाश्रयलिङ्गोपाध्यात्मेश्वरौ। तयोः परिष्वक्तयोरन्य एकः क्षेत्रज्ञो लिङ्गोपाधिर्वृक्षमाश्रितः पिप्पलं

---

व्या० योग्यत्वादीश्वरस्य सर्व्वज्ञत्वेन नियामकत्वशक्तियोगाच्छोभनं पतनमुचितं। नियम्यनियामकभावगमनं ययोस्तौ शोभनपतनौ। पक्षिसामान्याद्वेति वृक्षाश्रयत्वादिश्रवणादित्यर्थः। ऊर्द्धमुत्कृष्टं ब्रह्म मूलमधिष्ठानमस्येत्यूर्द्धमूलोऽर्व्वाचः प्राणादयः शाखा इवास्येत्यवाक्शाखः। श्वावस्थानं नियन्तुमस्य न शक्यमित्यश्वत्थः। अव्यक्तमव्याकृतं मूलमुपादानमस्यापि तस्मात्प्रभवतीति तथोक्तो

उ० न्योऽभिचाकशीति ॥ १ ॥ समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा

भा० कर्म्मनिष्पन्नं सुखदुःखलक्षणं फलं स्वाद्वनेकविचित्रवेद-मास्वादुरूपं स्वादत्ति भक्षयत्युपभुङ्क्तेऽविवेकतः । अन-श्नन्न्य इतर ईश्वरो नित्यशुद्धबुद्धमुक्तस्वभावः सर्व्वज्ञः सत्त्वोपाधिरीश्वरो नाश्नाति । प्रेरयिता ह्यसावुभयोर्भो-ज्यभोक्त्रोर्नित्यसाक्षित्वसत्तामात्रेण । स त्वनश्नन्न्यो ऽभि-चाकशीति पश्यत्येव केवलं । दर्शनमात्रेण हि तस्य प्रेरयि-तृत्वं राजवत् ॥ १ ॥ तत्रैवं सति समाने वृक्षे यथोक्ते शरीरे पुरुषो भोक्ता जीवोऽविद्याकामकर्म्मफलरागादि-गुरुभाराक्रान्तोऽलावुरिव सामुद्रे जले निमग्नो निश्चयेन देहात्मभावमापन्नोऽयमेवाहं अमुष्य पुत्रोऽस्य नप्ता कृशः स्थूलो गुणवान्निर्गुणः सुखी दुःखीत्येवं प्रत्ययो नास्त्यन्यो ऽस्मादिति जायते म्रियते संयुज्यते वियुज्यते च सम्बन्धि-बान्धवैः । अतोऽनीशया न कस्यचित्समर्थोऽहं पुत्रो मम विनष्टो मृता मे भार्य्या किं मे जीवितेनेत्येवं दीनभावो ऽनीशा तया शोचति सन्तप्यते मुह्यमानोऽनेकैरनर्थप्रकारै-

टी० यावदज्ञानभावीत्यर्थः । अविद्याकामकर्म्मवासनानामाश्रयो लिङ्ग-मुपाधिर्यस्यात्मनः स जीवस्तथोक्तः स चेश्वरश्च तावित्यर्थः । सत्त्वो मायाख्यमुपाधिरस्येति सत्त्वोपाधिः । आत्मनः कस्यामलसत्त्वरा-शेरिति युक्तं । आवरणं विक्षेपश्च द्वयमविद्यायाः कार्य्यं । तत्रेश्व-रभावाप्रतिपत्तिरनीशावरणं शोचतीति विक्षेपस्तद्भयहेतुर-निर्व्वाच्यमज्ञानं मोहः । तेन विशिष्टोऽनेकैरनर्थप्रकारैरहं करो-

उ॰ पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः॥
२॥ यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं

---

भा॰ रविवेकितया चिन्तामापद्यमानः स एवं प्रेततिर्य्यङ्मनुष्यादियोनिष्वाजवं जवीभावमापन्नः कदाचिदनेकजन्मसु शुद्धधर्म्मसञ्चितनिमित्तेन केनचित्परमकारुणिकेन दर्शितयोगमार्गे अहिंसासत्यब्रह्मचर्य्यसर्व्वत्यागशमदमादिसम्पन्नः समाहितात्मा सन् जुष्टं सेवितमनेकैर्योगिमार्गैः कर्म्मभिश्च यदा यस्मिन् काले पश्यति ध्यायमानोऽन्यं वृक्षोपाधिलक्षणादिलक्षणमीशमसंसारिणमशनायापिपासाशोकमोहजरामृत्यतीतमीशं सर्व्वस्य जगतोऽयमहमस्यात्मा सर्व्वस्य समः सर्व्वभूतस्थो नेतरोऽविद्याजनितोपाधिपरिच्छिन्नो मायात्मेति विभूतिं महिमानञ्च जगद्रूपमस्यैव मम परमेश्वरस्येति यदैवं द्रष्टा तदा वीतशोको भवति सर्व्वस्माच्छोकसागराद्विप्रमुच्यते कृतकृत्यो भवतीत्यर्थः॥ २॥ अन्योऽपि मन्त्र इममेवार्थमाह सविस्तरं। यदा यस्मिन् काले पश्यः पश्यतीति विद्वान् साधक इत्यर्थः पश्यते पश्यति पूर्व्ववद्रुक्मवर्णं स्वयं ज्योतिःस्वभावं रुक्म-

---

आ॰ मीत्यादिभिर्विवेकतया तादात्म्यापन्नतयेत्यर्थः। आजवमनवरतं जीवभावं निकृष्टभावं लक्षणया लघुभावं कर्म्मवायुप्रेरिततया जवीभावं क्षैप्यमापन्नः पूर्व्ववदित्यभेदेनेत्यर्थः। आत्मनि रतिरात्मरतिस्तत्पुरुषः सैव क्रियास्यास्तीत्यात्मरतिः। क्रियावानिति मतुप्त्वे कः प्रतीयते कथमुक्तं बहुव्रीहिमतुबर्थयोरन्यतरो द्विरिष्यत इति। सत्यं असमासपाठे द्वयोरर्थवत्त्वमासीत् समा-

उ० पुरुषं ब्रह्मयोनिं । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥ ३ ॥
प्राणो ह्येष यः सर्व्वभूतैर्विभाति विजानन्

भा० स्वैव वा ज्योतिरस्याविनाशि कर्त्तारं सर्व्वस्य जगत ईशं पुरुषं ब्रह्मयोनिं ब्रह्म च तद्योनिश्चासौ ब्रह्मयोनिस्तं ब्रह्मयोनिं ब्रह्मणो वाऽपरस्य योनिं स यदा चैव पश्यति तदा स विद्वान् पश्यः पुण्यपापे बन्धनभूते कर्म्मणी समूले विधूय निरस्य दग्ध्वा निरञ्जनो निर्लेपो विगतक्लेशः परमं प्रकृष्टं निरतिशयं साम्यं समतामद्वयलक्षणं द्वैतविषयाणि साम्यान्यतो वाच्ये वातोऽद्वयलक्षणमेतत्परमं साम्यमुपैति प्रतिपद्यते ॥ ३ ॥

किञ्च योऽयं प्राणस्य प्राणः पर ईश्वरो ह्येष प्रकृतः सर्व्वैर्भूतैर्ब्रह्मादिस्तम्बपर्य्यन्तैः । इत्थम्भूतलक्षणा तृतीया । सर्व्वभूतस्थः सर्व्वात्मा सन्नित्यर्थः । विभाति विविधं दीप्यते । एवं सर्व्वभूतस्थं यः साक्षादात्मभावेनायमहमस्मीति विजानन् विद्वान् वाक्यार्थज्ञानमात्रे न स भवते न भवतीत्येतत् । किं । अतिवादी अतीत्य सर्व्वानन्यान् वदितुं शीलमस्येत्यवादी । यस्त्वेवं साक्षादात्मानं प्राणस्य प्राणं विद्वान्नातिवादी भवतीत्यर्थः । सर्व्वं यदात्मैव नान्यदस्तीति दृष्टं

आ० सपाठे त्वन्यतरे मतुबतिरिच्यते विशेष्यते वाह्यक्रियानिवृत्तिमाभादित्यर्थः ॥ १ ॥ २ ॥ ३ ॥
एकदेशिव्याख्यामुद्भाव्य निराचष्टे । केचिदित्यादिना ॥ अनेन

उ० विद्वान् भवते नातिवादी । आत्मक्रीड आत्म

भा० तदा किं ह्यसावतीत्य वदेत् । यस्य त्वपरमपरमन्यद्दृष्टमस्ति स तदतीत्य वदति । अयन्तु विद्वानात्मनोऽन्यन्न पश्यति नान्यच्छृणोति नान्यद्विजानाति । अतो नातिवदति । किञ्चात्मक्रीड आत्मन्येव क्रीडनं यस्य नान्यत्र पुत्रदारादिषु स आत्मक्रीडः । तथाऽऽत्मरतिरात्मन्येव च रती रमणं प्रीतिर्यस्य स आत्मरतिः । क्रीडा बाह्यसाधनसापेक्षा । रतिस्तु साधननिरपेक्षा बाह्यविषयप्रीतिमात्रमिति विशेषः । तथा क्रियावान् ज्ञानध्यानवैराग्यादिक्रिया यस्य सोऽयं क्रियावान् । समासपाठे आत्मरतिरेव क्रियाऽस्य विद्यत इति बहुव्रीहिमतुबर्थयोरन्यतरोऽतिरिच्यते । केचित्त्वग्निहोत्रादिकर्मब्रह्मविद्ययोः समुच्चयार्थमिच्छन्ति । तच्चैष ब्रह्मविदां वरिष्ठ इत्यनेन मुख्यार्थवचनेन विरुध्यते । न हि बाह्यक्रिया आत्मरतिश्च भवितुं शक्नुतः । कश्चिद्बाह्यक्रियाविनिवृत्तो ह्यात्मक्रीडो भवति बाह्यक्रियात्मक्रीडयोर्विरोधात् । न हि तमःप्रकाशयोर्युगपदेकत्र स्थितिः सम्भवति । तस्मादसत्प्रलपितमेतत् । अनेन ज्ञानकर्मसमुच्चयप्रतिपादनं । अन्या वाचो विमुञ्चथ सन्न्यासयोगादित्यादिश्रुतिभ्यश्च । तस्मादयमेवेह क्रियावान् यो ज्ञानध्यानादिक्रियानसम्भिन्नार्थमर्य्यादः सन्न्यासी । य एवंलक्षणो नातिवाद्यात्म

आ० वचनेन ज्ञानकर्मसमुच्चयप्रतिपादनं क्रियत इत्येतदसत्प्रलपित-

उ० रतिः क्रियावानेष ब्रह्मविदां वरिष्ठः ॥ ४ ॥
सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन
ब्रह्मचर्य्येण नित्यं। अन्तः शरीरे ज्योतिर्म्मयो

भा० क्रीड आत्मरतिः क्रियावान् ब्रह्मनिष्ठः स ब्रह्मविदां सर्व्वेषां वरिष्ठः प्रधानः॥ ४ ॥ अधुना सत्यादीनि भिक्षोः सम्यग्ज्ञानसहकारीणि साधनानि विधीयन्ते निवृत्ति-प्रधानानि। सत्येनानृतत्यागेन मृषावदनत्यागेन लभ्यः प्राप्तव्यः। किञ्च तपसा ह्रीन्द्रियमनएकाग्रतया। मनस-श्चेन्द्रियाणाञ्चैकाग्र्यं परमं तप इति स्मरणात्। तद्ध्यनुकूल-मात्मदर्शनाभिमुखीभावात् परमं साधनं तपो नेतरच्चा-न्द्रायणादि। एष आत्मा लभ्य इत्यनुषङ्गः। सर्व्वत्र सम्य-ग्ज्ञानेन यथाभूतात्मदर्शनेन ब्रह्मचर्य्येण मैथुनासमाचारेण नित्यं सत्येन नित्यं तपसा नित्यं सम्यग्ज्ञानेनेति सर्व्वत्र नित्यशब्दोऽन्तर्दीपकन्यायेनानुषक्तव्यः। वक्ष्यति च। न येषु जिह्ममनृतं न माया चेति। कोऽसावात्मा य एतैः साधुभि-र्लभ्यत इत्युच्यते। अन्तः शरीरेऽन्तर्मध्ये शरीरस्य पुण्डरीका-काशे ज्योतिर्म्मयो हि रुक्मवर्णः शुभ्रः शुद्धोऽयमात्मानं

भा० मेवेति योजना ॥ ४ ॥ सम्यग्ज्ञानसहकारीणीत्यत्र सम्यग्ज्ञानश-ब्देन वस्तुविषयावगतिफलावसानं वाक्यार्थज्ञानमुच्यते। अव-गतिफलस्य स्वकार्य्येऽविद्यानिवृत्तौ सहकार्य्यपेक्षासम्भवात्। अतो-ऽपरिपक्वज्ञानस्य सत्यादीनाञ्च परिपक्वविद्यालाभाय समुच्चय इष्यत एव। नैतावता भास्कराभिमतसिद्धिः। परिपक्वविद्यासह-कार्य्यपेक्षायां मानाभावात्। ततः कर्म्मऽसंस्पर्शञ्चयमादीनां

उ० हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः ॥ ५ ॥
सत्यमेव जयते नानृतं सत्येन पन्था विततो
देवयानः । येनाक्रमन्त्यृषयो ह्याप्तकामा यत्र
तत्सत्यस्य परमं निधानं ॥ ६ ॥

---

भा० पश्यन्त्युपलभन्ते यतयो यतनशीलाः सन्न्यासिनः क्षीण-
दोषाः क्षीणक्रोधादिचित्तमलाः । स आत्मा नित्यं सत्या-
दिसाधनैः सन्न्यासिभिर्लभ्यत इत्यर्थः । न कादाचित्कैः
सत्यादिभिर्लभ्यते सत्यसाधनस्तुत्यर्थोऽयमर्थवादः ॥ ५ ॥
सत्यमेव सत्यवानेव जयते जयति नानृतं नानृतवादीत्यर्थः ।
न हि सत्यानृतयोः केवलयोः पुरुषानाश्रितयोः सम्भवो
जयः पराजयो वा सम्भवति । प्रसिद्धं लोकेऽसत्यवाननृतवा-
द्यभिभूयते न विपर्य्ययोऽतः सिद्धं सत्यस्य बलवत्साधनत्वं ।
किञ्च । शास्त्रतोऽप्यवगम्यते सत्यस्य साधनातिशयत्वं । कथं ।
सत्येन यथाभूतवादव्यवस्थया पन्था देवयानाख्यो विततो
विस्तीर्णः सातत्येन प्रवृत्तः । येन यथा ह्याक्रमन्ति क्रमन्ते
ऋषयो दर्शनवन्तः कुहकमायाशाठ्याहङ्कारदम्भानृत-
वर्जिता ह्याप्तकामा विगततृष्णाः सर्व्वतो यत्र यस्मिन्
तत्परमार्थतत्त्वं सत्यस्योत्तमसाधनस्य सम्बन्धि साध्यं परमं
प्रकृष्टं निधानं पुरुषार्थरूपेण निधीयते प्रवर्त्तते । तत्र च

---

आ० कर्म्मविहीनानां मुक्तिश्रवणाच्चेति ॥५॥ कुहकं परवचनमन्तरन्यथा
गृहीत्वा वहिरन्यथा प्रकाशनं । माया शाठ्यं विभवानुसारेणा-
प्रदानं । अहङ्कारो मिथ्याभिमानः । दम्भो धर्म्मध्वजित्वं । अनृतम-

मु॰ बृहच्च तद्दिव्यमचिन्त्यरूपं सूक्ष्माच्च तत्सूक्ष्मतरं विभाति। दूरात्सुदूरे तदिहान्तिके च पश्य-

---

भा॰ येन यथा क्रमन्ति सत्येन वितत इति पूर्व्वेण सम्बन्धः। किन्तत्किन्धर्म्मकं तदित्युच्यते॥ ६॥

बृहच्च तन्महच्च तत्प्रकृष्टं ब्रह्म सत्यादिसाधनेन सर्व्वतो व्याप्तत्वात्। दिव्यं स्वयम्प्रभमनिन्द्रियगोचरं अत एव न चिन्तयितुं शक्यतेऽस्य रूपमित्यचिन्त्यरूपं। सूक्ष्मादाकाशादेरपि तत्सूक्ष्मतरं निरतिशयं हि सौक्ष्म्यमस्य सर्व्वकारणत्वाद्विभाति विविधमादित्यचन्द्राद्याकारेणाभाति दीप्यते। किञ्च दूराद्विप्रकृष्टदेशात्सुदूरे विप्रकृष्टतरे देशे वर्त्ततेऽविदुषामत्यन्तागम्यत्वात्तद्ब्रह्म। इह देहेऽन्तिके समीपे च। विदुषामात्मत्वात् सर्व्वान्तरत्वाच्चाकाशस्याप्यन्तरश्रुतेः। इह पश्यत्सु चेतनावत्स्वित्येतन्निहितं स्थितं दर्शनादिक्रियावत्त्वेन योगिभिर्लक्ष्यमाणं। क्व। गुहायां बुद्धिलक्षणायां। तत्र हि निगूढं लक्ष्यते विद्वद्भिः। तथाप्यविद्यया संवृतं सन्न लक्ष्यते

---

था॰ यथादृष्टभाषणं। एतैर्दोषैर्वर्जिता इत्यर्थः॥ सत्यस्य निधानं यदुक्तं तत्पुनर्व्विशेष्यत इत्याह। किन्तत्किंधर्म्मकन्तदिति॥ ६॥

ज्ञानप्रसादेनेत्यत्र ज्ञायतेऽर्थोऽनेनेति व्युत्पत्त्या बुद्धिरुच्यते। ध्यायमानो ज्ञानप्रसादं लभ्यते। ज्ञानप्रसादेनात्मानं पश्यतीति क्रमो द्रष्टव्यः। संशयादिमलरहितस्य प्रमाणज्ञानस्यैव साक्षात्कारहेतुत्वाद्ध्यानक्रियायाः प्रमितिसाधनत्वासिद्धेरित्यर्थः। बाह्यादेश्चित्तादौ चेतनत्वभ्रमदर्शनाच्चित्तं तस्मिन् स्वसंसर्गिणि च चैतन्याभिव्यञ्जकत्वे स्वभावत एव योग्यं। ततश्चित्ते परमात्मनोऽभिव्यक्तिसम्भावनाच्चेतसा ज्ञेयत्वमुच्यत इति सम्भावनार्थमाह।

उ॰ स्त्विहैव निहितं गुहायां ॥ ७ ॥ न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्म्मणा वा । ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः ॥ ८ ॥ एषोऽणुरात्मा

भा॰ तत्रस्थमेवाविद्वद्भिः ॥ ७ ॥ पुनरप्यसाधारणेऽप्यसाधारणं तदुपलब्धिसाधनमुच्यते ॥ यस्मान्न चक्षुषा गृह्यते केनचिदप्यरूपत्वान्नापि गृह्यते वाचाऽनभिधेयत्वान्न चान्यैर्देवैरिन्द्रियैः। तपसः सर्व्वप्राप्तिसाधनत्वेऽपि न तपसा गृह्यते। तथा वैदिकेनाग्निहोत्रादिकर्म्मणा प्रसिद्धमहत्त्वेनापि न गृह्यते। किं पुनस्तस्य ग्रहणसाधनमित्याह । ज्ञानप्रसादेनात्मावबोधनसमर्थमपि स्वभावेन सर्व्वप्राणिनां ज्ञानं वाह्यविषयरागादिदोषकलुषितमप्रसन्नमशुद्धं सन्नावबोधयति नित्यं सन्निहितमप्यात्मत्वं मलावनद्धमिवादर्शं। विलुलितमिव सलिलं। तद्यदिन्द्रियविषयसंसर्गजनितरागादिमलकालुष्यापनयनादादर्शसलिलादिवत्प्रसादितं स्वच्छं शान्तमवतिष्ठते तदा ज्ञानस्य प्रसादः स्यात् । तेन विशुद्धान्तःकरणो योग्यो ब्रह्म द्रष्टुं यस्मात्तस्मात्तमात्मानं पश्यते पश्यति उपलभते निष्कलं सर्व्वावयवभेदवर्जितं ध्यायमानः सत्यादिसाधनतानुपसंहृतकरण एकाग्रेण मनसा ध्यायमानश्चिन्तयन्नयमात्मानमेव पश्यतीति ॥ ८ ॥ एषोऽणुः

व्या॰ प्राणैः सहेन्द्रियैश्चित्तमिति ॥ ओतं चैतन्येन सर्व्वस्य तर्हि चित्तं किमिति ब्रह्म स्वत एवापरोक्षं न भवतीत्यत आह । यस्मिन्

उ॰ चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश। प्राणैश्चित्तं सर्वमोतं प्रजानां यस्मिन् विशुद्धे विभवत्येष आत्मा ॥ ९ ॥ यं यं लोकं मनसा संविभाति विशुद्धसत्वः कामयते यांश्च कामान्। तं तं लोकं जायते तांश्च कामांस्तस्मादात्मज्ञं

भा॰ सूक्ष्मश्चेतसा विशुद्धज्ञानेन केवलेन वेदितव्यः। क्वासौ। यस्मिञ्छरीरे प्राणो वायुः पञ्चधा प्राणापानादिभेदेन संविवेश सम्यक्प्रविष्टस्तस्मिन्नेव शरीरे हृदये चेतसा ज्ञेय इत्यर्थः। कीदृशेन चेतसा वेदितव्य इत्याह। प्राणैः सहेन्द्रियैश्चित्तं सर्व्वमन्तःकरणं प्रजानामोतं व्याप्तं येन क्षीरमिव स्नेहेन काष्ठमिवाग्निना। सर्व्वं हि प्रजानामन्तःकरणं चेतनावत्प्रसिद्धं लोके। यस्मिंश्च चित्ते क्लेशादिमलवियुक्ते शुद्धे विभवत्येष य उक्त आत्मा विशेषेण स्वेनात्मना विभवत्यात्मानं प्रकाशयतीत्यर्थः ॥ ९ ॥ य एवमुक्तलक्षणं सर्व्वात्मानमात्मत्वेन प्रतिपन्नस्तस्य सर्व्वात्मकत्वादेव सर्व्वावाप्तिलक्षणं फलमाह। यं यं लोकं पित्रादिलक्षणं मनसा संविभाति सङ्कल्पयति मह्यमन्यस्मै वा भवेदिति विशुद्धसत्त्वः क्षीणक्लेश आत्मविन्निर्म्मलान्तःकरणः कामयते यांश्च कामान् प्रार्थयते भोगांस्तं तं लोकं जयते प्राप्नोति तांश्च कामान् सङ्कल्पितान् भोगान्। तस्माद्विदुषः सत्य-

टी॰ चित्त इति ॥ सगुणविद्याफलमपि निर्गुणविद्यास्तुतये प्ररोचनार्थं

उ० ह्यर्चयेद्भूतिकामः ॥ १० ॥ इति तृतीयमुण्डके प्रथमः खण्डः ॥ १ ॥

स वेदैतत्परमं ब्रह्म धाम यत्र विश्वं निहितं भाति शुभ्रं । उपासते पुरुषं ये ह्यकामास्ते शुक्रमेतदतिवर्त्तन्ति धीराः ॥ १ ॥ कामान् यः काम-

---

भा० सङ्कल्पत्वादात्मज्ञमात्मज्ञानेन विशुद्धान्तःकरणं ह्यर्चयेत्पूजयेत् पादप्रक्षालनशुश्रूषानमस्कारादिभिर्भूतिकामो विभूतिमिच्छुः । ततः पूजार्ह एवासौ ॥ १० ॥ इति तृतीयमुण्डके प्रथमखण्डभाष्यं ॥ १ ॥

यस्मात्स वेद जानात्यसावेतद्यथोक्तलक्षणं परमं ब्रह्म प्रकृष्टं धाम सर्व्वकामानामाश्रयमास्पदं यत्र यस्मिन् ब्रह्मणि धाम्नि विश्वं समस्तं जगन्निहितमर्पितं यच्च स्वेन ज्योतिषा भाति शुभ्रं शुद्धं । तमप्येवमात्मज्ञं पुरुषं ये ह्यकामा विभूतितृष्णावर्जिता मुमुक्षवः सन्त उपासते परमिव देवं ते शुक्रं नृबीजं यदेतत्प्रसिद्धं शरीरोपादानकारणमतिवर्त्तन्तेऽतिगच्छन्ति धीरा बुद्धिमन्तो न पुनर्योनिं प्रसर्पन्ति । न पुनः क्व रतिं करोतीति श्रुतेः । अतस्तं पूजयेदित्यभिप्रायः ॥ १ ॥ मुमुक्षोः कामत्याग

---

आ० मुच्यते । यं यमिति ॥ परमार्थतत्त्वज्ञानादित्यर्थः ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ इति तृतीयमुण्डके प्रथमखण्डभाष्यटीका ॥ १ ॥

विषयेषु यथास्थितदोषदर्शनात्पर्य्याप्तकामः क्षीणरागो विशुद्धसत्तया ऽऽत्मकामस्यात्मबुभुत्सयैव वशीकृतचित्तस्य विषयेभ्य

उ॰ यते मन्यमानः स कामभिर्जायते तत्र तत्र ।
पर्य्याप्तकामस्य कृतात्मनस्तु इहैव सर्व्वे प्रवि-
लीयन्ति कामाः ॥ २ ॥ नायमात्मा प्रवचनेन

भा॰ एव प्रधानं साधनमित्येतद्दर्शयति । कामान् यो दृष्टादृष्टे-
ष्टविषयान् कामयते मन्यमानस्तद्गुणांश्चिन्तयानः प्रार्थ-
यते स तैः कामभिः कामैर्धर्म्माधर्म्मप्रवृत्तिहेतुभिर्विषये-
च्छारूपैः सह जायते तत्र तत्र । यत्र यत्र विषयप्राप्ति-
निमित्तकामाः कर्म्मसु पुरुषं नियोजयन्ति तत्र तत्र तेषु
तेषु विषयेषु तैरेव कामैर्वेष्टितो जायते । यस्तु परमार्थ-
तत्त्वविज्ञानात् पर्य्याप्तकाम आत्मकामत्वेन परि समन्तत
आप्ताः कामा यस्य तस्य पर्य्याप्तकामस्य कृतात्मनोऽविद्या-
लक्षणादपररूपादपनीय स्वेन परेण रूपेण कृत आत्मा
विद्यया यस्य तस्य कृतात्मनस्त्विहैव तिष्ठत्येव शरीरे । सर्व्वे
धर्म्माधर्म्मप्रवृत्तिहेतवः प्रविलीयन्ति विलयमुपयन्ति नश्य-
न्तीत्यर्थः । कामास्तज्जन्महेतुविनाशान्न जायन्त इत्यभि-
प्रायः ॥ २ ॥ यद्येवं सर्व्वलाभात्परमात्मलाभस्तल्लाभाय

आ॰ कामा निवृत्ता भवन्तीत्यर्थः सामर्थ्यादवगम्यते । स्वहेतुवि-
नाशात्पुनः कामा न जायन्त इति ॥ जातानां ज्ञानं विनापि
क्षयसम्भवादित्यर्थः । न बहुना श्रुतेनेति उपनिषद्विचारव्यति-
रिक्तेनेत्यर्थः । तेन वर्ण्णनेनेति कथं व्याख्यानं यत्तदोर्भिन्ना-
र्थत्वं साधनविवक्षायाः प्रस्तुतत्वादित्यर्थं ब्रूमः । परमात्मात्मैक्य-
भेदानुसन्धानं वर्णनं । तेन वर्णनेनैष आत्मा लभ्यो भवति ।
वहिर्म्मुखेन तु शतशोऽपि श्रवणादौ क्रियमाणे न लभ्यते । अत-

उ० लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनूं स्वां ॥ ३ ॥

नायमात्मा बलहीनेन लभ्यो न च प्रमादात्तपसो वाप्यलिङ्गात् । एतैरुपायैर्यतते यस्तु

भा० प्रवचनादय उपाया बाहुल्येन कर्त्तव्या इति प्राप्त इदमुच्यते । योऽयमात्मा व्याख्यातो यस्य लाभः परः पुरुषार्थो नाऽसौ वेद शास्त्राध्ययनबाहुल्येन प्रवचनेन लभ्यः । तथा न मेधया ग्रन्थार्थधारणशक्त्या । न बहुना श्रुतेन नापि भूयसा श्रवणेनेत्यर्थः । केन तर्हि लभ्य इत्युच्यते । यमेव परमात्मानमेष विद्वान् वृणुते प्राप्तुमिच्छति तेन वरणेनैष परमात्मा लभ्यः नान्येन साधनान्तरेण । नित्यलब्धस्वभावत्वात् । कीदृशोऽसौ विदुष आत्मलाभ इत्युच्यते । तस्यैष आत्माऽविद्यासञ्छन्नां स्वां परां तनूं स्वात्मतत्त्वस्वरूपां विवृणुते प्रकाशयति प्रकाश इव घटादिर्विद्यायां सत्यामाविर्भवतीत्यर्थः ॥ ३ ॥

तस्मादन्यत्यागेनात्मलाभप्रार्थनैवाऽऽत्मलाभसाधनमित्यर्थः । आत्मप्रार्थनासहायभूतान्येतानि च साधनानि

आ० परमात्माऽस्मीत्यनुसन्धानं परमात्मभजनं पुरस्कृत्यैव श्रवणादि सम्पादनीयमिति भावः । अथवाऽयमेव परमात्मानं वृणुते तेन परमात्मना मुमुक्षुरूपव्यवस्थितेन वरणेनाभेदानुसन्धानलक्षणेन प्रार्थनेन कृत्वा लभ्यः परमात्मैव मुमुक्षुरूपव्यवस्थित इत्यभेदानुसन्धानेनैव लभ्यो न कर्मणेत्यर्थः ॥ १ ॥ २ ॥ ३ ॥

वीर्यमिति मिथ्याज्ञानानभिभाव्यतासामर्थ्यं । विशेष । अलिङ्गा

उ० विद्वांस्तस्यैष आत्मा विशते ब्रह्मधाम ॥ ४ ॥
संप्राप्यैनमृषयो ज्ञानतृप्ताः कृतात्मानो वीतरागाः
प्रशान्ताः । ते सर्वगं सर्वतः प्राप्य धीरा युक्ता-

भा० बलाप्रमादतपांसि लिङ्गयुक्तानि सन्न्याससहितानि । य-
स्मादयमात्मा बलहीनेन बलप्रहीणेनात्मनिष्ठाजनितवी-
र्य्यहीनेन न लभ्यो नापि लौकिकपुत्रपश्वादिविषयासङ्गनि
मित्तप्रमादात् । तथा तपसो वाप्यलिङ्गाल्लिङ्गरहितात् ।
तपोऽत्र ज्ञानं । लिङ्गं सन्न्यासस्तत्सन्न्यासरहितात् ज्ञानान्न
लभ्य इत्यर्थः । एतैरुपायैर्बलाप्रमादसन्न्यासज्ञानैर्यतते
तत्परः सन् प्रयतते । यस्तु विद्वान् विवेकी आत्मवित् तस्य
विदुषः आत्मा एष विशते सम्प्रविशति ब्रह्मधाम ॥ ४ ॥
कथं ब्रह्म विशत इत्युच्यते । सम्प्राप्य समवगम्यैनमात्मा-
नमृषयो दर्शनवन्तस्तेनैव ज्ञानेन तृप्ता न वाह्येन तृप्ति-
साधनेन शरीरोपचयकारणेन । कृतात्मानः परमात्म-
स्वरूपेणैव निष्पन्नात्मानः सन्तः । वीतरागा विगतरागा-
दिदोषाः । प्रशान्ता उपरतेन्द्रियाः । त एवम्भूताः सर्व्वगं
सर्व्वव्यापिनमाकाशवत्सर्व्वतः सर्व्वत्र प्राप्य नोपाधिपरि-
च्छिन्नेनैकदेशेन । किन्तर्हि ब्रह्मैवाद्वयमात्मत्वेन प्रतिपद्य
धीरा अत्यन्तविवेकिनो युक्तात्मानो नित्यसमाहितस्व-
भावाः सर्व्वमेव समस्तं शरीरपातकालेऽप्याविशन्ति भिन्न-

चा० दिति कथं । इन्द्रजनकगार्गिप्रभृतीनामप्यात्मलाभश्रवणात् । सत्यं
सन्न्यासो नाम सर्व्वत्यागात्मकस्तेषामपि स्वत्वाभिमानाभावा-

उ० त्मानः सर्व्वमेवाविशन्ति ॥ ५ ॥ वेदान्तविज्ञान-
सुनिश्चितार्थाः सन्न्यासयोगाद्यतयः शुद्धसत्वाः ।

---

भा० घटाकाशवदविद्याकृतोपाधिपरिच्छेदं जहाति । एवं ब्रह्म-
विदो ब्रह्मधाम प्रविशन्ति ॥ ५ ॥ किञ्च वेदान्तजनितवि-
ज्ञानं वेदान्तविज्ञानं तस्यार्थः परमात्मा विज्ञेयः सोऽर्थः
सुनिश्चितो येषां ते वेदान्तविज्ञानसुनिश्चितार्थाः । ते च
सन्न्यासयोगात् सर्व्वकर्म्मपरित्यागलक्षणयोगात् केवलब्रह्म-
निष्ठा स्वरूपाद्योगाद्यतयो यत्नशीलाः शुद्धसत्त्वाः शुद्धं सत्त्वं
येषां सन्न्यासयोगात्ते शुद्धसत्त्वाः । ते ब्रह्मलोकेषु । संसारिणां
ये मरणकालास्ते परान्तास्तानपेक्ष्य मुमुक्षूणां संसारावः-
साने देहपरित्यागकालः परान्तकालस्तस्मिन् परान्तकाले
साधकानां बहुत्वाद्ब्रह्मैव लोको ब्रह्मलोक एकोऽप्यनेक-
वद्दृश्यते प्राप्यते च । अतो बहुवचनं ब्रह्मलोकेष्विति ब्रह्म-
णीत्यर्थः । परामृताः परममृतममरणधर्म्मकं ब्रह्मात्मभूतं
येषां ते परामृता जीवन्त एव ब्रह्मभूताः परामृताः
सन्तः परिमुच्यन्ति परिसमन्तात्प्रदीपनिर्व्वाणवद्घटाकाश-
वच्च निर्वृतिमुपयन्ति परिमुच्यन्ति परिसमन्तान्मुच्यन्ते
सर्व्वे न देशान्तरं गन्तव्यमपेक्षन्ते । शकुनीनामिवाकाशे
जले वारिचरस्य च । पदं यथा न दृश्येत तथा ज्ञानविदां

---

व्या० दस्यैवाऽऽन्तरः सन्न्यासो वाह्यन्तु लिङ्गमविवक्षितं । न लिङ्ग
धर्म्मकारणमिति स्मरणात् । नैष्कर्म्यसाहित्यन्तु विवक्षितं प्रदी
पस्य वर्त्तिकृतावच्छेदध्वंसे यथा तेजःसामान्यतापत्तिस्तद्वदित्याह ।

मू० ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमु
च्यन्ति सर्वे ॥ ६ ॥

गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रति-
देवतासु । कर्म्माणि विज्ञानमयश्च आत्मा परे

भा० गतिः । अनध्वगा अध्वसु पारयिष्णव इति श्रुतिस्मृतिभ्यां
देशपरिच्छिन्ना हि गतिः संसारविषयैव । परिच्छिन्नसा-
धनसाध्यत्वात् । ब्रह्म तु समस्तत्वान्न देशपरिच्छेदेन गन्तव्यं।
यदि हि देशपरिच्छिन्नं ब्रह्म स्यान्मूर्त्तद्रव्यवदाद्यन्तवद-
न्याश्रितं सावयवमनित्यं कृतकञ्च स्यात् । न त्वेवंविधं ब्रह्म
भवितुमर्हति । अतस्तत्प्राप्तिश्च नैव देशपरिच्छिन्ना भवितुं
युक्ता ॥ ६ ॥

अपिचाविद्यादिसंसारबन्धापनयनमेव मोक्षमिच्छन्ति
ब्रह्मविदो न तु कार्य्यभूतं । किञ्च मोक्षकाले या
देहारम्भिकाः कलाः प्राणाद्यास्ताःस्वाः प्रतिष्ठाः प्रतिष्ठा-
ङ्गताः स्वं स्वं कारणं गता भवन्तीत्यर्थः । प्रतिष्ठा इति
द्वितीयाबहुवचनं । पञ्चदश पञ्चदशसङ्ख्यका या अन्त्यप्रश्न-

भा० प्रदीपनिर्व्वाणवदिति । पदं पादन्यासः । प्रतिबिम्बं न दृश्यतेऽभा-
वादेवेत्यर्थः ॥ अध्वस्विति संसाराध्वनां पारयिष्णवः पारयितुं
समापयितुमिच्छन्तीति समाप्तिकामा अनध्वगा भवन्तीत्यर्थः ।
तर्कतोऽप्यैहिक एव मोक्षो वक्तव्य इत्याह । देशपरिच्छिन्ना हीत्या-
दिना ॥ ४ ॥ ५ ॥ ६ ॥

स्वाः प्रतिष्ठाः प्रतिगता भवन्तीति भूतांशानां भौतिकानाञ्च
महाभूतेषु लयो दर्शितः । अन्त्यप्रश्ने तिस्राच्चसपञ्चदश प्राण

मु॰ ऽव्यये सर्व एकीभवन्ति ॥ ७ ॥ यथा नद्यः स्यन्द-
मानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय ।
तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमु-

---

भा॰ परिपठिताः प्रसिद्धा देवाश्च देहाश्रयाश्चक्षुरादिकरणस्थाः
सर्व्वे प्रतिदेवतास्वादित्यादिषु गता भवन्तीत्यर्थः । यानि
च मुमुक्षुणा कृतानि कर्म्माण्यप्रवृत्तफलानि प्रवृत्तफला-
नामुपभोगेनैव क्षीणत्वाद्विज्ञानमयश्चात्माऽविद्याकृतबुद्ध्या-
द्युपाधिमात्मत्वेन मत्वा जलादिषु सूर्य्यादिप्रतिबिम्बव-
दिह प्रविष्टो देहभेदेषु कर्म्मणां तत्फलार्थत्वात्सह तेनैव
विज्ञानमयेनात्मना। अतो विज्ञानमयो विज्ञानप्रायः । त
एते कर्म्माणि विज्ञानमयश्चात्मोपाध्यपनयनेन सति परे
ऽव्यये ऽनन्ते अक्षये ब्रह्मण्याकाशकल्पेऽजेऽजरेऽमृतेऽभये
ऽपूर्व्वेऽनपरेऽनन्तरेऽबाह्येऽद्वये शिवे शान्ते सर्व्वे एकीभ-
वन्त्यविशेषतां गच्छन्त्येकत्वमापद्यन्ते जलाद्याधारापनय इव
सूर्य्यादिप्रतिबिम्बाः सूर्य्ये घटाद्यपनयनाकाशे घटाद्याकाशः
॥ ७ ॥ किञ्च यथा नद्यो गङ्गाद्याः स्यन्दमाना गच्छन्त्यः
समुद्रं प्राप्यास्तमदर्शनमविशेषात्मभावं गच्छन्ति प्राप्नु-
वन्ति नाम च रूपञ्च नामरूपे विहाय हित्वा तथा
ऽविद्याकृतनामरूपाद्विमुक्तः सन् परादक्षरात्पूर्व्वोक्तात्परं

---

आ॰ अज्ञाद्या याः कलाः पठिता इत्यर्थः। मायामयमहाभूतांशावष्टब्धे
जावाविद्यामयभूतसूक्ष्मैः प्रातिस्विकैरदृष्टसहकृतैः प्रातिस्विकाः

उ० पैति दिव्यं ॥ ८ ॥ स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति । नास्याब्रह्मवित्कुले भवति । तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति ॥ ९ ॥ तदेतदृचाऽभ्युक्तं

भा० दिव्यं पुरुषं यथोक्तलक्षणमुपैत्युपगच्छति ॥ ८ ॥ ननु श्रेयस्यनेके विघ्नाः प्रसिद्धा अतः क्लेशानामन्यतमेनान्येन वा देवादिना च विघ्नितो ब्रह्मविदप्यन्यां गतिं मृतो गच्छति न ब्रह्मैव । न विद्ययैव सर्व्वप्रतिबन्धस्यापनीतत्वात् । अविद्या-प्रतिबन्धमात्रो हि मोक्षो नान्यप्रतिबन्धः । नित्यत्वादात्म-भूतत्वाच्च । तस्मात्स यः कश्चिद्ध वै लोके तत्परमं ब्रह्म वेद साक्षादहमेवास्मीति स नान्यां गतिं गच्छति । देवैरपि अस्य ब्रह्मप्राप्तिं प्रति विघ्नो न शक्यते कर्त्तुं । आत्मा ह्येषां प्रभवति । तस्माद्ब्रह्मविद्विद्वान् ब्रह्मैव भवति । किञ्च नास्य विदुषोऽब्रह्मवित्कुले भवति । किञ्च तरति शोक-मनेकेष्टवैकल्यनिमित्तं मानसं सन्तापं जीवन्नेवातिक्रान्तो भवति । तरति पाप्मानं धर्म्माधर्म्माख्यं गुहाग्रन्थिभ्यो विमुक्तः सन्नमृतो भवतीत्युक्तमेव भिद्यते हृदयग्रन्थिरि-त्यादि ॥ ९ ॥ अथेदानीं ब्रह्मविद्यासम्प्रदानविध्युपदर्शनेनोप-

आ० प्राणादय आरभ्यन्ते । ते च कर्म्माक्षिप्तैर्देवैः सूर्य्यादिभिरधिष्ठी-यन्ते । कर्म्मणो भोगेनावसाने ते देवाः स्वस्थानं गच्छन्ति । यच्च प्रातिस्विकं स्वाविद्याकार्य्यं तच्च सर्व्वं ब्रह्मैव सम्पद्यत इत्याह । यानि चेत्यादिना ॥ ७ ॥ ८ ॥ एतद्ब्रह्मदारकविद्याप्रदानेऽयं विधि

उ० क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः स्वयं जुह्वत एकर्षिं श्रद्धयन्तः। तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णं ॥१०॥ तदेतत् सत्यमृषिरङ्गिराः पुरोवाच नैतदचीर्णव्रतोऽधीते।

---

भा० संहारः क्रियते। तदेतद्विद्यासम्प्रदानविधानमृचा मन्त्रेणाभ्युक्तमभिप्रकाशितं। क्रियावन्तो यथोक्तकर्मानुष्ठानयुक्ताः। श्रोत्रिया ब्रह्मनिष्ठा अपरस्मिन् ब्रह्मण्यभियुक्ताः परब्रह्म बुभुत्सवः स्वयमेकर्षिमेकर्षिनामानमग्निं जुह्वते जुह्वति श्रद्धयन्तः श्रद्दधानाः सन्तो ये तेषामेव संस्कृतात्मनां पात्रभूतानामेतां ब्रह्मविद्यां वदेत ब्रूयाच्छिरोव्रतं शिरस्यग्निधारणलक्षणं। यथाऽऽथर्व्वणानां वेदे व्रतं प्रसिद्धं। यैस्तु यैश्च तच्चीर्णं विधिवद्यथाविधानं तेषामेव च वदेत ॥ १० ॥ तदेतदक्षरं पुरुषं सत्यमृषिरङ्गिरा नाम पुरा पूर्व्वं शौनकाय विधिवदुपसन्नाय पृष्टवते उवाच। तद्वदन्योऽपि तथैव श्रेयोऽर्थिने मुमुक्षवे मोक्षार्थं विधिवदुपसन्नाय ब्रूयादित्यर्थः। नैतद्ग्रन्थरूपमचीर्णव्रतोऽचरितव्रतो नाप्यधीते। नयवति चीर्णव्रतस्य हि विद्याफलाय संस्कृता भवतीति॥ समाप्ता ब्रह्मविद्या सा येभ्यो ब्रह्मादिभ्यः पारम्पर्य्यक्रमेण सम्प्राप्ता तेभ्यो नमः परमऋषिभ्यः। परमं ब्रह्म साक्षा-

---

आ० दाथर्व्वणिकानामिति प्रकृतपरामर्शादेतच्छब्दादवगम्यते यस्य-कारेण विद्यायाः प्रकृतत्वसम्भवाच्च सर्व्वत्र ब्रह्मविद्यासम्प्रदान-

उ० नमः परमऋषिभ्यो नमः परमऋषिभ्यः ॥ ११ ॥

इति तृतीयमुण्डके द्वितीयः खण्डः ॥ २ ॥

मुण्डकोपनिषत्समाप्ता ॥ ॐ सत्सत् ॥ ॥

---

भा० दृष्टवन्तो ये ब्रह्मादयोऽवगतवन्तश्च ते परमर्षयस्तेभ्यो भूयोऽपि नमः । द्विर्वचनमत्यन्तादरार्थं मुण्डकसमाप्त्यर्थञ्च ॥ ११ ॥ इति तृतीयमुण्डकोपनिषद्भाष्ये द्वितीयः खण्डः ॥२॥ इति श्रीगोविन्दभगवत्पूज्यपादशिष्यपरमहंसपरिव्राजकस्य श्रीमच्छङ्करभगवतः कृतावाथर्वणमुण्डकोपनिषद्भाष्यं समाप्तं ॥ ॐ तत्सत् ॥

---

था० मिति सूचयन्नाह । एतां ब्रह्मविद्यां वदेतेति ॥ ९ ॥ १० ॥ ११ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदानन्दज्ञानविरचितं मुण्डकभाष्यव्याख्यानं समाप्तं ॥ ॐ तत्सत् ॥ हरिः ॐ ॥

सगौडपादीयकारिकाथर्व्ववेदीयमाण्डूक्योपनिषद्भाष्यं ॥

भा० ॐ नमः परमात्मने ॥ प्रज्ञानांशुप्रतानैः स्थिरचर निकरव्यापिभिर्व्याप्य लोकान् भुक्त्वा भोगान् स्थविष्ठान् पुनरपि धिषणोद्भासितान् कामजन्यान्। पीत्वा सर्व्वान्

सगौडपादीयकारिकाथर्व्ववेदीयमाण्डुक्योपनिषद्भाष्यटीका ॥

व्या० ॥ ॐ ॥ परिपूर्णपरिज्ञानपरितृप्तिमते सते।
विष्णवे जिष्णवे तस्मै कृष्णनामभृते नमः ॥ १ ॥
शुद्धानन्दपदाम्भोजद्वन्द्वमद्वन्द्वतास्पदं।
नमस्कुर्व्वे पुरस्कर्त्तुं तत्त्वज्ञानमहोदयं ॥ २ ॥
गौडपादीयभाष्यं हि प्रसन्नमिव लक्ष्यते।
तदर्थतोऽतिगम्भीरं व्याकरिष्ये स्वशक्तितः ॥ ३ ॥
पूर्व्वं यद्यपि विद्वांसो व्याख्यानमिह चक्रिरे।
तथापि मन्दबुद्धीनामुपकाराय यत्यते ॥ ४ ॥

श्रीगौडपादाचार्य्यस्य नारायणप्रसादतः प्रतिपन्नान्माण्डूक्योपनिषदर्थाविष्करणपरानपि श्लोकानाचार्य्यप्रणीतान् व्याचिख्यासुर्भगवान् भाष्यकारश्चिकीर्षितस्य भाष्यस्याविघ्नपरिसमाप्त्यादिसिद्धये परदेवतातत्त्वानुस्मरणपूर्व्वकं तन्नमस्काररूपं मङ्गलाचरणं शिष्टाचारप्रमाणकं मुखतः समाचरन्नर्थादपेक्षितमभिधेयाद्यनुबन्धमपि सूचयति। प्रज्ञानेत्यादिना ॥ तत्र विधिमुखेन वस्तुप्रतिपादनमिति प्रक्रियां प्रदर्शयति। यत्परम्ब्रह्म तन्नतोऽस्मीति। अस्मदर्थस्य तदैक्यस्मरणरूपं नमनं सूचयता ब्रह्मणस्तदर्थस्य प्रत्यक्त्वं सूचितमिति तत्त्वमर्थयोरैक्यं विषयो ध्वनितः। यच्छब्दस्य प्रसिद्धार्थावद्योतकत्वाद्वेदान्तप्रसिद्धं यद्ब्रह्म तन्नतोऽस्मीति सम्बन्धेन मङ्गलाचरणमपि श्रुत्या क्रियते। ब्रह्मणोऽद्वितीयत्वादेव जननमरणकारणाभावादमृतमजमित्युक्तं। जननमरणप्रबन्धस्य संसारत्वात्तन्निषेधेन स्वतोऽसंसारित्वं दर्शयता संसारानर्थनिवृत्तिरिह प्रयोजनमिति द्योतितं। यद्यद्वितीयं स्वतोऽसंसारि ब्रह्म वेदान्तप्रमाणकं तर्हि कथमवस्थात्रयविशिष्टा जीवा भोक्तारोऽनुभूयन्ते भोजयिता चेश्वरः श्रूयते भोज्यञ्च

भा० विशेषान् स्वपिति मधुरभुङ्मायया भोजयन् नो माया-

व्या० विषयजातं पृथगुपलभ्यते। तदेतदद्वैते विरुध्येतेत्याशङ्क्य ब्रह्मण्येव जीवा जगदीश्वरश्चेति सर्व्वं काल्पनिकं सम्भवतीत्यभिप्रेत्याह। प्रज्ञानेति॥ प्रकृष्टं जन्मादिविक्रियाविरहितं कूटस्थं ज्ञानं ज्ञप्तिरूपं वस्तु प्रज्ञानं तच्च ब्रह्म। प्रज्ञानं ब्रह्मेति श्रुतेः। तस्यांशवो रश्मयो जीवाश्चिदाभासाः सूर्य्यप्रतिबिम्बकल्पा निरूप्यमाणा बिम्बकल्पा ब्रह्मणो भेदेनासन्तस्तेषां प्रताना विस्तारास्ते रपर्य्यायमेवाशेषशरीरव्यापिभिः॥ तदेवाह। स्थिरेति॥ स्थिरा वृक्षादयः। चरा मनुष्यादयः। तेषां निकरः समूहस्तं व्याप्नुशीलमेषामिति तथा तैरिति यावत्। लोका लोक्यमाना विषयास्तान् व्याप्येति विषयसम्बन्धोक्तिस्तत्फलं कथयति। भोगाः सुखदुःखादिसाक्षात्कारास्तेषां स्थविष्ठत्वं स्थूलतमत्वं देवतानुगृहीतबाह्येन्द्रियद्वारा बुद्धेस्तत्तद्विषयाकारपरिणामजन्यत्वं तान् भुक्त्वा स्वपितीति सम्बन्धः॥ एतेन जागरितं ब्रह्मणि कल्पितमुक्तं॥ तत्रैव स्वप्नकल्पनां दर्शयति। पुनरपीति॥ जाग्रद्धेतुधर्म्माधर्म्मक्षयानन्तर्य्यं पुनःशब्दार्थः। स्वप्नहेतुकर्म्मोद्भवे च सतीत्यपि नोच्यते। न च तत्र वाह्यानीन्द्रियाणि स्थूला विषयाश्च सन्ति किन्तु धिषणाशब्दितबुद्ध्यात्मानो वासनात्मानो विषया भासन्तेताननुभूय स्वपितीत्यर्थः॥ तेषां प्रापकमुपन्यस्यति। कामजन्यानिति॥ कामग्रहणं कर्म्माविद्ययोरुपलक्षणार्थं॥ अवस्थाद्वयकल्पनां ब्रह्मणि दर्शयित्वा तत्रैव सुषुप्तिकल्पनां दर्शयति। पीत्वेति॥ सर्व्वे विशेषाः सर्व्वे विषयाः स्थूलाः सूक्ष्माश्च जागरितस्वप्नरूपास्तान् पीत्वा स्वात्मन्यज्ञाते प्रविलाप्य स्वपिति कारणभावेन तिष्ठतीत्यर्थः॥ तत्रानन्दप्राधान्यमभिप्रेत्य विशिनष्टि। मधुरभुगिति। अवस्थात्रयस्य मायाकृतस्य मिथ्याभूतस्य प्रतिबिम्बकल्पेष्वस्मासु सम्बन्धितामिवापाद्यास्मान भोजयद्ब्रह्म वर्त्तते। अतो ब्रह्मण्येवावस्थात्रयं तद्वन्तो जीवा मायापि ब्रह्म च ब्रह्मणि परिशुद्धे परिकल्पितं सर्व्वमित्याह। माययेति॥ तस्यैव ब्रह्मणोऽवस्थात्रयातीतत्वेन विश्रान्तिभावत्वं दर्शयति। तुरीयमिति॥ चतुर्णां पूरणं तुरीयमिति व्युत्पत्तेरवस्थात्रयसाक्षित्वेन निर्दिशा

भा० सङ्ख्यातुरीयं परममृतमजं ब्रह्म यत्तन्नतोऽस्मि ॥ १ ॥

यो विश्वात्मा विधिजविषयान् प्राश्य भोगान् स्थविष्ठान्
पश्चाच्चान्यान् स्वमतिविभवान् ज्योतिषा स्वेन सूक्ष्मान् ।

---

व्या० त्वाप्तं सद्वितीयत्वमित्याशङ्क्य कल्पितस्थानत्रयसङ्ख्यापेक्षया तुरीयत्वं न सद्वितीयत्वेनेत्याह। मायेति ॥ मायावित्त्वेन निकृष्टत्वमाशङ्क्योक्तं । परमिति । मायाद्वारा ब्रह्मणस्तत्सम्बन्धेऽपि स्वरूपद्वारा न तत्सम्बन्धोऽस्तीति कुतो निकृष्टतेत्यर्थः ॥ १ ॥

विधिमुखेन वस्तुप्रतिपादनप्रक्रियामवलम्ब्य तदर्थेनोपक्रम्य तस्य त्वमर्थप्रत्यगात्ममात्रत्वमुक्तं। अभिधेयफलोक्त्या सम्बन्धाधिकारिणौ च सूचितौ। सम्प्रति निषेधद्वारा वस्तुप्रतिपादनप्रक्रियामाश्रित्य त्वमर्थेनोपक्रम्य तस्य तदर्थासंसारिब्रह्ममात्रत्वं प्रत्याययति। यो विश्वात्मेति। तत्र त्वमर्थः स्वतः सिद्धश्चिद्धातुः सर्व्वनाम्ना परामृश्यते। तस्मिञ्जागरितमारोपितन्तमुदाहरति । विश्वात्मेति ॥ विश्वं पञ्चीकृतपञ्चमहाभूततत्कार्य्यात्मकं स्थूलं जगद्वैराजं शरीरं। तस्मिञ्जागरिते चाहं ममेत्यभिमानवानित्यर्थः ॥ तस्यार्थक्रियामुपन्यस्यति । विधिजेति ॥ विधीयत इति विधिर्धर्म्मानुबन्धेन ततो व्यतिरिक्तो विधिरधर्म्मस्ताभ्यां धर्म्माधर्म्माभ्यामविद्याकामप्रसूताभ्यां विषयाः शब्दादयो जन्यन्ते । तान् भोगयोग्यतया भोगशब्दितानादित्याद्यनुगृहीतबाह्येन्द्रियद्वारकबुद्धिपरिणामगोचरतया स्थूलतमान् प्राश्य साक्षादनुभूय स्थितोऽयं प्रत्यगात्मेत्यर्थः ॥ तत्रैव स्वप्नावस्थामध्यस्यति। पश्चाच्चेति ॥ जाग्रद्धेतुकर्म्मक्षयानन्तरं स्वप्नहेतुकर्म्मोद्भवे च सति स्थूलेभ्यो विषयेभ्योऽन्यानस्मादेव हेतोः सूक्ष्मान् बाह्येन्द्रियाणामुपरतत्वादविद्याकामकर्म्मप्रेरितात्मीयमतिप्रभावादेव प्रसृतानन्तःकरणात्मनो वासनामयानादित्यादिज्योतिषामस्तमितत्वादात्मभूतेनैव ज्योतिषा विषयीकृताननुभूयापञ्चीकृतपञ्चमहाभूततत्कार्य्यात्मकं सूक्ष्मं प्रपञ्चं हैरण्यगर्भं शरीरं स्वप्नस्थानञ्चाभिमन्यमानस्तैजसो भवतीत्यर्थः ॥ तत्रैव सुषुप्तकल्पनां दर्शयति । सर्व्वानिति ॥ स्थूलसूक्ष्मविभागेन स्थानद्वयावच्छिन्नान् प्रकृतानेतानशेषानपि विशेषानुपाधिद्वयद्वारकस्थानद्वयमस्वा

भा० सर्व्वानेतान् पुनरपि शनैः स्वात्मनि स्थापयित्वा हित्वा
सर्व्वान् विशेषान् विगतगुणगणः पात्वसौ नस्तुरीयः ॥ २ ॥

---

आ० प्रयुक्तक्रमेणोद्भवानन्तरं तस्यापि परिजिहीर्षायां शनैरनुक्रमेणा-क्रमेण वा स्वात्मन्यज्ञाते कारणात्मनि स्थापयित्वोपसंहृत्याव्याकृतप्रधानः सन् प्राज्ञो भवतीत्यर्थः ॥ तस्यैव प्रत्यगात्मनः स्थानत्रयविशिष्टस्य नान्तःप्रज्ञं न बहिःप्रज्ञमित्यादिप्रतिषेधशास्त्रप्रसूतप्रमाणज्ञानसमारूढस्य सर्व्वानप्यनर्थविशेषान् कार्य्यकारणरूपान् प्रमाणज्ञानप्रभावादेव हित्वा निरुपाधिकपरिपूर्णपरिज्ञानपरमात्मस्वरूपेण परिनिष्पन्नं तत्त्वं कथयति । हित्वेति ॥ प्रथमश्लोकेन प्रदर्शितप्राणमस्य प्रत्यक्प्रवाहप्रशमनात्मकं प्रयोजनं स्थानत्रयप्रकल्पनातीतं परवस्तुप्रयुक्तं प्रार्थयते॰ द्वितीयेन । पात्विति ॥ नोऽस्मान् व्याख्यातृत्वेन श्रोतृत्वेन च व्यवस्थितान् पुरुषार्थपरिपन्थितत्कारणनिरासपुरःसरं परमात्मा पराकृताशेषकल्पनो नित्यविज्ञप्तिस्वभावो मोक्षप्रदानेन तद्धेतुज्ञानप्रदानेन च परिरक्षतादित्यर्थः ॥ केचित्तु प्रकरणचतुष्टयात्मनो ग्रन्थस्य वेदान्तैकदेशसम्बद्धत्वज्ञापनार्थं निष्प्रपञ्चं वाक्यप्रतिपाद्यं ब्रह्म प्रथमश्लोकेन सूचितं । द्वितीयेन माण्डूक्यश्रुतिव्याख्यानरूपेणाद्यप्रकरणेन प्रणवमात्राणामात्मपादानाञ्चैकीकरणेन प्रतिपाद्यं ब्रह्म सूचितमिति मन्यन्ते । न च द्वितीयश्लोके चतुर्थपादे वृत्तलक्षणाभावादसाङ्गत्यमाशङ्कनीयं । गाथालक्षणस्य तत्र सुसम्पादत्वादिति द्रष्टव्यं । अन्ये त्वाद्यश्लोकं मूलश्लोकान्तर्भूतमभ्युपगच्छन्तो द्वितीयश्लोकं भाष्यकारप्रणीतमभ्युपयन्ति । तदसत् । उत्तरश्लोकेष्विवाद्येऽपि श्लोके भाष्यकृतो व्याख्यानप्रणयनप्रसङ्गात् । ओमित्येतदक्षरमित्यादिभाष्यविरोधाच्च । अपरे पुनराद्येन श्लोकेन शास्त्रप्रतिपाद्यपरदेवतातत्त्वानुस्मरणद्वारेण नमनक्रिया प्रकरणप्रारम्भोपयोगित्वेन क्रियते । परदेवताभक्तिवदपरदेवताभक्तेरपि विद्याप्राप्तावन्तरङ्गत्वस्य शास्त्रीयस्य शिष्यशिक्षायै ज्ञापनार्थमवस्थात्रयातीतान्नित्यसिद्धविज्ञानमूर्त्तेराचार्य्यान्मोक्षौपयिकज्ञानप्राप्तिः आचार्य्यवान् पुरुषो वेदेत्यादिश्रुत्यवष्टम्भेन मुमुक्षुणा प्रार्थ्यत इति द्वितीयश्लोकेन कल्पयन्तीति । ॥ २ ॥

श्रीगौडपादीयकारिकासहिताथर्व्ववेदीयमाण्डूक्योपनिषदारम्भः ।

उ० ॥ हरिः ॐ ॥ ओमित्येतदक्षरमिदꣳ सर्वं तस्यो-

भा० ओमित्येतदक्षरमिदं सर्व्वं तस्योपव्याख्यानं ॥ वेदान्तार्थं सारसङ्ग्रहभूतमिदं प्रकरणचतुष्टयमोमित्येतदक्षरमित्याद्यारभ्यते । अत एव न पृथक्सम्बन्धाभिधेयप्रयोजनानि वक्तव्यानि । यान्येव तु वेदान्ते सम्बन्धाभिधेयप्रयोजनानि तान्येवेह भवितुमर्हन्ति । तथापि प्रकरणव्याचिख्यासुना सङ्क्षेपतो वक्तव्यानि । तत्र प्रयोजनवत्साधनाभिव्यञ्जकत्वेनाभिधेयसम्बद्धं शास्त्रं पारम्पर्य्येण विशिष्टसम्बन्धाभिधेयप्रयोजनवद्भवति । किं पुनस्तत्प्रयोजनमित्युच्यते । रोगार्त्तस्येव रोगनिवृत्तौ स्वस्थता । तथा दुःखात्मकस्यात्मनो द्वैतप्रपञ्चोपशमे स्वस्थता । अद्वैतभावः प्रयोजनं । द्वैतप्रपञ्चस्याविद्याकृतत्वाद्विद्यया तदुपशमः

आ० यदुद्दिश्य मङ्गलाचरणं कृतं तन्निर्द्दिष्टुमादौ व्याख्येयस्य प्रतीकं गृह्णाति । ओमित्येतदिति ॥ ओमित्येतदक्षरमित्यादिप्रकरणचतुष्टयविशिष्टमिदमारभ्यते । व्याख्यायतेऽस्माभिरित्युद्देश्यं प्रतिजानीते । किमिदं शास्त्रत्वेन वा प्रकरणत्वेन वा व्याचिख्यासितं । नाद्यः । शास्त्रलक्षणाभावादस्याशास्त्रत्वात् । एकप्रयोजनोपनिवद्धमशेषार्थप्रतिपादकं हि शास्त्रं । अत्र च मोक्षलक्षणैकप्रयोजनवत्त्वेऽपि नाशेषार्थप्रतिपादकत्वं । न द्वितीयः । प्रकरणलक्षणाभावादित्याशङ्क्याह । वेदान्तेति ॥ शास्त्रं वेदान्तशब्दार्थः । तस्यार्थोऽधिकारिनिर्णयगुरूपसदनपदार्थद्वयतदैक्यविरोधपरिहारसाधनफलाख्यः । तत्र सारो जीवपरैक्यं तस्य सम्यग्ग्रहः सङ्ग्रहः संशयविपर्य्यासादिप्रतिबन्धव्युदासेन तदुपायोपदेशो यस्मिन् प्रक-

उ॰ पद्याख्यानं भूतं भवद्भविष्यदिति सर्व्वमोङ्कार एव।

भा॰ स्यादिति ब्रह्मविद्याप्रकाशनायास्यारम्भः क्रियते। यत्र हि द्वैतमिव भवति। यत्र वाऽन्यदिव स्यात्तत्रान्योऽन्यत्पश्ये-दन्योऽन्यद्विजानीयात्। यत्र त्वस्य सर्व्वमात्मैवाभूत्तत्केन कं पश्येत्केन कं तद्विजानीयादित्यादिश्रुतिभ्योऽस्यार्थस्य सिद्धिः। तत्र तावदोङ्कारनिर्णयाय प्रथमं प्रकरणमागम-प्रधानमात्मतत्त्वप्रतिपत्त्युपायभूतं। यस्य द्वैतप्रपञ्चस्योप-शमेऽद्वैतप्रतिपत्तिः रज्ज्वामिव सर्पादिविकल्पोपशमे रज्जु-तत्त्वप्रतिपत्तिः। तस्य द्वैतस्य हेतुतो वैतथ्यप्रतिपादनाय द्वितीयं प्रकरणं। तथाऽद्वैतस्यापि वैतथ्यप्रसङ्गप्राप्तौ यु-क्तितस्तथात्वदर्शनाय प्रकरणं तृतीयं। अद्वैतस्य तथात्व-

आ॰ रणे तत्त्वथेति यावत्। तथा च। शास्त्रैकदेशसम्बद्धं शास्त्रकार्य्या-न्तरे स्थितं। इदं प्रकरणत्वेन व्याख्यातुमिष्टं। निर्गुणवस्तुमात्र-प्रतिपादकत्वात्। तत्प्रतिपादनसङ्क्षेपस्य च कार्य्यान्तरत्वात्प्रकरणत्व-लक्षणस्य चात्र सम्पूर्णत्वादित्यर्थः॥ प्रकरणत्वेऽपि निर्विषयत्वा दिप्रयुक्तमव्याख्येयत्वमाशङ्क्याह। अत एवेति॥ प्रकरणत्वादेव प्रकृतशास्त्राङ्गेदेन सम्बन्धादीनामवाच्यत्वेऽपि प्रकरणप्रवृत्त्यङ्गतया तानि त्ववश्यं वक्तव्यानीत्याशङ्क्य शास्त्रीयसम्बन्धादीनां तदीये प्रकरणेऽर्थात्प्राप्तत्वान्नास्ति वक्तव्यत्वमर्थस्य पुनरुक्तेरित्याह। यान्ये-वेति॥ श्रोतारो हि शास्त्रीयं प्रकरणं प्रतिपद्यमानाः शास्त्रीया-ण्येव सम्बन्धादीनि अन्यत्र वचनाभावेऽपि बुध्यमानाः प्रवृत्तिं त-स्मिन् प्रकुर्व्वन्तीत्यर्थः॥ तर्हि प्रकरणकर्त्तृवदेव तद्भाष्यकृतापि विष-यादीनामत्रावक्तव्यत्वाद्भाष्यकृतो विषयाद्युपन्यासो वृथा स्यादि-त्याशङ्क्याह। तथापीति॥ प्रकरणकर्त्तुरवक्तव्यान्यपि तद्भाष्य-कृता तानि सङ्क्षेपतो वक्तव्यानीति व्याख्यातॄणां सम्मतं। द्वाभ्याम-नुक्तत्वे तेष्वनास्थासाध्यप्रावकाशादित्यर्थः॥ भाष्यकृता प्रयोजना-

भा॰ प्रतिपत्तिप्रतिपक्षभूतानि यानि वादान्तराण्यवैदिकानि तेषामन्योन्यविरोधित्वादतथार्थत्वेन तदुपपत्तिभिरेव निराकरणाय चतुर्थं प्रकरणं। कथं पुनरोङ्कारनिर्णय आत्मतत्त्वप्रतिपत्त्युपायत्वं प्रतिपद्यत इत्युच्यते॥ ॐमित्येतत्। एतदालम्बनं। एतद्वै सत्यकाम परञ्चापरञ्च ब्रह्म यदोङ्कारः। तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेति। ओमित्यात्मानं युञ्जीत ओमिति ब्रह्म ओङ्कार एवेदं सर्व्वमित्यादिश्रुतिभ्यः। रज्ज्वादिरिव सर्पादिविकल्पस्यास्पदोऽद्वय आत्मा परमार्थतः सन् प्राणादिविकल्पस्यास्पदो यथा तथा सर्व्वोऽपि वाक्प्रपञ्चः प्राणाद्यात्मविकल्पविषय ओङ्कार एव। स चात्मस्वरूपमेव। तदभिधायकत्वात्। ॐङ्कारविकारश-

आ॰ दीनां वक्तव्यत्वे सिद्धे शास्त्रप्रकरणयोर्मोक्षलक्षणप्रयोजनवत्त्वं प्रतिजानीते। तत्रेति॥ प्रयोजनवच्छास्त्रमिति सम्बन्धः। शास्त्रग्रहणं प्रकरणोपलक्षणार्थं। मोक्षलक्षणं फलं ब्रह्मज्ञानस्येष्यते न शास्त्रप्रकरणयोरित्याशङ्काह। साधनेति॥ सत्यं मोक्षस्य साधनं ब्रह्मात्मैकत्वज्ञानं। तस्य जनकं शास्त्रादि तद्भावेन ज्ञानव्यवधानेन मोक्षफलवद्भवति शास्त्रादीत्यर्थः। तथापि ब्रह्मणा विषयेण सम्बन्धो वेदान्तानामेवेष्यते तत्कथमभिधेयत्वसम्बद्धं शास्त्रादीत्याशङ्क्य ब्रह्मविचारमन्तरेण तज्ज्ञानजनकत्वायोगात्तज्ज्ञानजननद्वारा विषयसम्बन्धसिद्धिरित्याह। अभिधेयेति॥ उक्तं ज्ञानं व्यवहितप्रयोजनादिशास्त्रादेरुपसंहरति। पारम्पर्य्येणेति॥ तत्र सम्बन्धो ब्रह्मज्ञानं शास्त्रादिना जन्यमेवेत्ययोगव्यवच्छेदादुक्तः। शास्त्रादिनैव जन्यमित्ययोगव्यवच्छेदाद्विषयोऽपि दर्शितः॥ यदुक्तं प्रयोजनवत्त्वं तदाक्षिपति। किं पुनरिति॥ साध्यत्वे स्वर्गवदनित्यत्वं नित्यत्वे साधनानधीनत्वान्न तादर्थ्येन शास्त्रादि प्रयोक्तव्यमित्यर्थः। मोक्षस्यात्मस्वरूपत्वान्नानित्यत्वं नापि साधनानर्थक्यं।

भा० द्वाभिधानाभिधेयस्य सर्व्वः प्राणादिरात्मविकल्पोऽभिधान-
व्यतिरेकेण नास्ति। वाचारम्भणं विकारो नामधेयं तद-
स्येदं वाचा तन्त्या नामभिर्दामभिः सर्व्वं सितं। सर्व्वं ह्येदं
नामनीत्यादिश्रुतिभ्यः । अत आह ओमित्येतदक्षरमिदं
सर्व्वमिति । यदिदमर्थजातमभिधेयभूतं तस्याभिधानाव्य-
तिरेकात्। अभिधानस्य चोङ्काराव्यतिरेकात् ओङ्कार एवेदं
सर्व्वं । परञ्च ब्रह्माभिधानाभिधेयोपायपूर्व्वकमेव गम्यत-
इत्योङ्कार एव । तस्यैतस्य परापरब्रह्मरूपस्याक्षरस्योमि-
त्येतस्योपव्याख्यानं । ब्रह्मप्रतिपत्त्युपायत्वाद्ब्रह्मसमीपतया
विस्पष्टं प्रकथनमुपव्याख्यानं प्रस्तुतं वेदितव्यमिति वाक्य-
शेषः । भूतं भवद्भविष्यदिति कालत्रयपरिच्छेद्यं यत्तदपो-

---

भा० स्वरूपभूतमोक्षप्रतिबन्धनिवर्त्तकत्वेनानर्थवत्त्वादित्युत्तरमाह ।
उच्यत इति ॥ यथा देवदत्तस्य ज्वरादिना रोगेणाभिभूतस्य
स्वस्थता स्वरूपादप्रच्युतिरूपा स्वरूपभूतैव प्रागपि सती रोगप्र-
तिबद्धाऽसतीव स्थिता चिकित्साशास्त्रीयोपायप्रयोगवशात प्रति-
बन्धभूतरोगापगमे सत्यभिव्यज्यते । न हि तत्रोपायवैयर्थ्यं प्रति-
बन्धप्रध्वंसार्थत्वात् । नचानित्यत्वं स्वस्थतायाः शङ्क्येत । तस्मात्तद-
साध्यत्वादित्युक्तोऽर्थे दृष्टान्तमाह । रोगार्त्तस्येवेति ॥ यथोदित
दृष्टान्तानुरोधादात्मनः स्वतः समुत्खातनिखिलदुःखस्य निरति-
शयानन्दैकतानस्यापि स्वाविद्याप्रसूताहङ्कारादिद्वैतप्रपञ्चसम्ब-
न्धादात्मनि दुःखमारोप्याहं दुःखी सुखं मया प्राप्तव्यमिति प्रति-
पद्यमानस्य परमकारुणिकाचार्य्योपदिष्टवाक्योत्थाद्वैतविद्यातो
द्वैतनिवृत्तौ प्रतिबन्धप्रध्वंसे स्वभावभूता परमानन्दता निरस्त-
समस्तानर्थता च स्वारस्येनाभिव्यक्ता भवति । सा च स्वस्थता
परिपूर्णा वस्तुस्वभावान्नातिरिच्यते। तदिदं शास्त्रीयं प्रयोजनं तस्य
च स्वरूपत्वेनासाध्यत्वान्नानित्यत्वं शङ्कितव्यं । न च साधनवैयर्थ्यं

गा॰ सर्वं जनयति प्राणश्चेतोंऽशून् पुरुषः पृथक् ॥ ६ ॥

भा॰ ग्रहणद्वाराभावादसत्त्वप्रसङ्गः। दृष्टञ्च रज्जुसर्पादीना-
मविद्याकृतमायावीजोत्पन्नानां रज्ज्वाद्यात्मना सत्त्वं। न हि
निरास्पदा रज्जुसर्पमृगतृष्णिकादयः क्वचिदुपलभ्यन्ते के-
नचित्। यथा रज्ज्वां प्राक् सर्पोत्पत्तेः रज्ज्वात्मना सर्पः
सन्नेवासीत्। एवं सर्व्वभावानामुत्पत्तेः प्राक् प्राणवीजात्मनैव
सत्त्वमिति। अतः श्रुतिरपि वक्ति ब्रह्मैवेदमात्मैवेदमग्र आसी-
दिति। सर्व्वं जनयति प्राणश्चेतोंऽशूनंशव इव रवेश्चिदा-
त्मकस्य पुरुषस्य चेतोरूपा जलार्कसमाः प्राज्ञतैजसवि-
श्वभेदेन देवतिर्य्यगादिदेहभेदेषु विभाव्यमानास्चेतोंऽशवो
ये तान् पुरुषः पृथग्विषयभावविलक्षणानग्निविस्फुलिङ्ग-

---

आ॰ असज्जन्मनिरसनमन्तरेण कथं सज्जन्म निर्द्धारयितुं शक्यमित्या
शङ्क्याह। वक्ष्यतीति॥ जन्मनः पूर्व्वं सर्व्वस्य सत्त्वे च कारण-
व्यापारसाध्यत्वासिद्धेर्मिथ्यात्वे कथं सतामेव प्रभवो भावाना-
मित्याशङ्क्याह। यदीति॥ कार्य्यप्रपञ्चस्यासत्त्वे कारणस्य ब्रह्मणः
कारणेन व्यवहार्य्यत्वाभावात्तस्य ग्रहणे द्वारभूतस्य लिङ्गस्या-
भावादसत्त्वमेव सिद्ध्येत्। कार्य्येण हि लिङ्गेन कारणं ब्रह्मादृष्ट-
मपि सदित्यवगम्यते। तच्चेदसद्भवेन्न तस्य कारणेन सम्बन्धधी-
रित्यसदेव कारणमपि स्यादित्यर्थः। कार्य्यकारणयोरुभयोरपि
भवत्वसत्त्वमित्याशङ्क्याह। दृष्टञ्चेति॥ अविद्ययाऽनाद्यनिर्वा-
च्यया कृताश्च ते मायावीजादुत्पन्नाश्च तेषामविद्यैव मायेत्यङ्गी-
कारात्तेषु रज्ज्वादौ कल्पितसर्पादीनामधिष्ठानभूतरज्ज्वादिरू-
पेण सत्त्वं दृष्टमिति योजना। विमतं सदुपादानं कल्पितत्वा-
द्रज्जुसर्पवदित्यर्थः। दृष्टान्तस्य साध्यविकलत्वं शङ्कित्वा परिह-
रति। न हीति॥ विवक्षितं दृष्टान्तमनूद्य दार्ष्टान्तिकमाह।

गौ॰ विभूतिं प्रसवन्त्वन्ये मन्यन्ते सृष्टिचिन्तकाः ।

भा॰ वत्सलचणान् जलार्कवच्च जीवलचणांस्त्वितरान् सर्व्वभावान् प्राणवीजात्मा जनयति यथोर्णनाभिः । यथाग्नेर्विस्फुलिङ्गा इत्यादिश्रुतेः ॥६॥ विभूतिर्विस्तार ईश्वरस्य सृष्टिरिति सृष्टिचिन्तका मन्यन्ते न तु परमार्थचिन्तकानां सृष्टावादर इत्यर्थः । इन्द्रो मायाभिः पुरुरूप ईयत इत्यादिश्रुतेः । न हि मायाविनः सूत्रमाकाशे निःचिप्यते न तदायुधमारुह्य चक्षुर्गोचरतामतीत्य युद्धेन खण्डशश्छिन्नं पतितं

आ॰ यथेत्यादिना ॥ प्राणशब्दितं वीजमज्ञातं ब्रह्म सल्लक्षणं तदात्मनेति यावत् । तदेवमचेतनं सर्व्वं जगत्प्रागुत्पत्तेर्वीजात्मना स्थितं प्राणो वीजात्मव्यवहारयोग्यतया जनयतीत्युपसंहरति । इत्यत इति ॥ चतुर्थपादप्रतीकमादाय व्याकरोति । चेतोऽंशूनित्यादिना ॥ रवेरंशवो यथा वर्त्तन्ते तथा पुरुषस्य स्वयं चैतन्यात्मकस्य चेतोरूपाश्चैतन्याभासाश्चेतोंऽशवो निर्द्दिश्यन्ते । तान् पुरुषो जनयतीत्युत्तरत्र सम्बन्धः । तेषां चिदात्मकात्पुरुषात्पुरुषतत्त्वतो भेदाभावं विवचित्वा विशिनष्टि । जलार्केति ॥ भेदधीस्तु तेषामुपाधिभेदादित्याह । प्राज्ञेति ॥ पृथगिति सूचितं पुरुषस्य जीवसर्जने हेतुं कथयति । विषयेति ॥ यथाग्निना समानरूपा विस्फुलिङ्गा जन्यन्ते तथा चिदात्मना समानस्वभावा जीवास्तेनोत्पाद्यन्ते । विषयविलक्षणत्वात् । न प्राणेन वीजात्मना तथामुत्पादनं । न चोत्पाद्यानां जीवानामुत्पादकाच्चिदात्मनस्तो भिन्नत्वं । जलपात्रप्रतिबिम्बितादित्यादीनां बिम्बभूतात्तत्त्वतो भेदाभावात्तान् बिम्बादीन् पुरुषश्चित्प्रधानो जनयतीत्यर्थः ॥ विषयभावेन व्यवस्थितान् पुनर्भावान् प्राणो जनयतीति इतीयपादार्थमुपसंहरति । इतरानिति ॥ ६ ॥ चेतनाचेतनात्मकस्य जगतः सर्गे प्रस्तुते स्वमतविवेचनार्थं मतान्तरमुपन्यस्यति । विभूतिप्रसवमिति । ईश्वरस्य विभूतिर्विस्तारः स्वकीयैश्वर्य-

गौ० स्वप्नमायास्वरूपेति सृष्टिरन्यैर्विकल्पिता ॥७॥

भा० पुनरुत्थितस्य पश्यतां तत्कृतमायादिसतत्त्वचिन्तायामादरो भविष्यति । तथैवायं मायाविनः सूत्रप्रसारणसमः सुषुप्तस्वप्नादिविकासस्तदारूढमायाविसमस्य तत्स्थप्राज्ञतैजसादिः सूत्रतदारूढाभ्यामन्यः परमार्थमायावी । स एव भूमिष्ठो मायाच्छन्नोऽदृश्यमान एव स्थितो यथा तथा तुरीयाख्यं परमार्थतत्त्वं। अतस्तच्चिन्तायामेवादरो मुमुक्षूणामार्य्याणां न निष्प्रयोजनायां सृष्टावादर इति । अतः सृष्टिचिन्तकानामेवैते विकल्पा इत्याह स्वप्नमायास्वरूपेति । स्वप्नस्वरूपा मायास्वरूपा चेति ॥ ७ ॥

आ० ख्यापनं सृष्टिरिति पक्षे सृष्टेर्वस्तुत्वशङ्कायां पक्षान्तरमाह । स्वप्नेति ॥ कुतः सृष्टिचिन्तकानामेतन्मतं तत्त्वविदामेव किं न स्यात्तत्राह । न त्विति ॥ सृष्टेरपि वस्तुत्वात्तच्चिन्तकानामपि तत्रादरो भविष्यतीत्याशङ्क्याह । इन्द्र इति ॥ मायामयी सृष्टिरादरविषया न भवतीत्यत्र दृष्टान्तमाह । न हीति ॥ मायादीत्यादिशब्देन तत्कार्य्यं गृह्यते ॥ दृष्टान्तनिविष्टमर्थं दार्ष्टान्तिके योजयति । तथैवेति ॥ तर्हि परमार्थचिन्तकानां कुत्रादर इत्याशङ्क्य सदृष्टान्तमुत्तरमाह । सूत्रेत्यादिना ॥ मायाच्छन्नत्वमदृश्यमानत्वे हेतुः । तुरीयाख्यं जाग्रत्स्वप्नसुषुप्तेभ्यो विश्वतैजसप्राज्ञेभ्यश्चातिरिक्तं तदस्पृष्टमिति शेषः । परमार्थतत्त्वचिन्ता हि सम्यग्धीद्वारा फलवती न सृष्टेः । ततः सृष्टावनादरस्तत्त्वनिष्ठानामित्याह । नेति ॥ परमार्थचिन्तकानां सृष्टावनादरादपरमार्थनिष्ठानामेव सृष्टौ विशेषचिन्तेत्युक्तेऽर्थे द्वितीयार्द्धमवतारयति । इत्यत इति ॥ जाग्रद्भूतानामर्थानामेव स्वप्ने प्रथनात्तस्य सत्यत्वं मायायाश्च मण्यादिलक्षणायाः सत्यत्वाङ्गीकारादनयोर्विकल्पयोः सिद्धान्ताद्वैषम्यमुन्नेयं ॥ ७ ॥

गा० इच्छामात्रं प्रभोः सृष्टिरिति सृष्टौ विनिश्चिताः। कालात्प्रसूतिं भूतानां मन्यन्ते कालचिन्तकाः ॥ ८ ॥ भोगार्थं सृष्टिरित्यन्ये क्रीडा-

भा० इच्छामात्रं प्रभोः सत्यसङ्कल्पत्वात्सृष्टिर्घटादिः सङ्कल्पनामात्रं न सङ्कल्पनातिरिक्तं कालादेव सृष्टिरिति केचित् ॥ ८ ॥ भोगार्थं क्रीडार्थमिति चान्ये सृष्टिं मन्यन्ते। अन्ययोः पक्षयोर्दूषणं देवस्यैव स्वभावोऽयमिति। देवस्य

आ० सृष्टिचिन्तकानामेव सृष्टिविषये विकल्पान्तरमुत्थापयति। इच्छामात्रमिति॥ ज्योतिर्विदां कल्पनाप्रकारमाह। कालादिति॥ परमेश्वरस्येच्छामात्रं सृष्टिरित्यत्र हेतुमाह। सत्येति॥ यथा लोके कुलालादेः सङ्कल्पनामात्रं घटादिकार्य्यं सृष्टिरिष्टा। नामरूपाभ्यामन्तरेव कार्य्यं सङ्कल्प्य वहिस्तन्निर्म्माणाभ्युपगमात्। तथा भगवतः सृष्टिः सङ्कल्पनामात्रा न तदतिरिक्ता काचिदस्तीति केषांचिदीश्वरवादिनामित्यर्थः ॥८॥ यथा तथा वा अस्तु सृष्टिस्तस्यास्तु किं प्रयोजनमित्यत्र विकल्पद्वयमाह। भोगार्थमिति॥ सिद्धान्तमाह। देवस्येति॥ कः स्वभावो नामेत्युक्ते नैसर्गिकोऽपरोक्षा मायाशब्दार्थस्तस्येत्याह। अयमिति॥ पूर्व्वपक्षाणामपवादं सूचयति। अस्येति॥ देवस्य परमेश्वरस्य स्वभावः सृष्टिरिति स्वभावपक्षं नैसर्गिकमायाविनिर्म्मिता सृष्टिरिति मतं सिद्धान्तत्वेनाश्रित्य चतुर्थपादेन दूषणमुच्यते। पक्षयोरन्ययोरिति योज्यं। ईश्वरस्येश्वरत्वख्यापनं सृष्टिरित्येकः पक्षः। स्वप्नस्वरूपा मायास्वरूपा वा सृष्टिरिति पक्षद्वयमीश्वरस्य सत्यसङ्कल्पस्य सृष्टिरिति पक्षान्तरं। कालादेव जगतः सृष्टिर्नेश्वरात्। ईश्वरस्तूदासीनः। तत्र विकल्पान्तरं भोगार्थं क्रीडार्थं वा सृष्टिरिति पक्षगतञ्च विकल्पद्वयं। तेषामेतेषां सर्व्वेषामेव पक्षाणां दूषणं चतुर्थपादेनोक्तमिति पक्षान्तरमाह। सर्व्वेषामिति॥ नो खल्वाप्तकामस्य परस्यात्मनो मायां विना विभूतिख्यापनमुपयुज्यते। न च स्वप्नमायाभ्यां साम्यमन्तरेण स्वप्नमायासृष्टिरिष्टुं शक्यते ऽवस्तुनोरेव तयोस्तच्छब्द

गौ० र्थमिति चापरे । देवस्यैष स्वभावोऽयमाप्तका-
मस्य का स्पृहा ॥ ९ ॥

॥ उपनिषद् ॥

उ० नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न

भा० स्वभावपक्षमाश्रित्य सर्व्वेषां वा पक्षाणामाप्तकामस्य का
स्पृहेति ॥ ९ ॥

न हि रज्ज्वादीनामविद्यास्वभावव्यतिरेकेण सर्पाद्या-
भासत्वे कारणं शक्यं वक्तुं । चतुर्थः पादः क्रमप्राप्तो वक्तव्य
इत्याह । नान्तःप्रज्ञमित्यादि । सर्व्वशब्दप्रवृत्तिनिमित्त-
शून्यत्वात्तस्य शब्दानाभिधेयत्वमिति विशेषप्रतिषेधेनैव च
तुरीयं निर्द्दिदिक्षति । शून्यमेव तर्हि तन्न । मिथ्याविक-
ल्पस्य निर्निमित्तत्वानुपपत्तेः । न हि रजतसर्पपुरुषमृगतृ-
ष्णिकादिविकल्पाः शुक्तिकारज्जुस्थाणूषरादिव्यतिरेकेणा-
वस्त्वास्पदाः शक्याः कल्पयितुं । एवं तर्हि प्राणादिसर्व्वविक-

आ० प्रयोगात् । न च परमानन्दस्वभावस्य परस्य विना मायामिच्छा
सङ्गच्छते । न हि तस्य स्वतोऽविक्रियस्येच्छादिभाक्त्वं युक्तं । न च
मायामन्तरेण भोगक्रीडे तस्योपपद्येते । ततो मायामयी भगवत
सृष्टिरित्यर्थः ॥ ९ ॥

यदुक्तं कालात्प्रसूतिं भूतानामिति तत्राह । न हीति ॥ अधि-
ष्ठानभूतरज्ज्वादीनां स्वभावशब्दितस्वाज्ञानादेव सर्पाद्याभा
सत्वं तथा परस्य स्वमायाशक्तिवशादाकाशाद्याभासत्वं । आत्मन
आकाशः सम्भूत इति श्रुतेः । न तु कालस्य भूतकारणत्वं
प्रमाणाभावादित्यर्थः । पादत्रये व्याख्याते व्याख्येयत्वेन क्रमवशा
त्प्राप्तं चतुर्थं पादं व्याख्यातुमनन्तरग्रन्थप्रवृत्तिरित्याह । चतुर्थ
इति । ननु पादत्रयविधिमुखेनैव चतुर्थः पादोऽपि व्याख्यायता

उ॰ प्रज्ञानघनं न प्रज्ञं नाप्रज्ञं । अदृष्टमव्यवहार्य्य-

भा॰ न्यास्पदत्वात्तुरीयस्य शब्दवाच्यत्वमिति न प्रतिषेधैः प्रत्या-
य्यत्वमुदकाधारादेरिव घटादेः । न प्राणादिविकल्पस्या-
सत्त्वाच्छुक्तिकास्विव रजतादेः । न हि सदसतोः सम्बन्धः ।
शब्दप्रवृत्तिनिमित्तभागवस्तुत्वात् । नापि प्रमाणान्तरविष-
यत्वं स्वरूपेण गवादिवत् । नापि क्रियावत्त्वं पाचकादिवत् ।
नापि गुणवत्त्वं नीलादिवत् । अतो नाभिधानेन निर्देशम-
र्हति । शशविषाणादिसमत्वान्निरर्थकत्वं तर्हि न ।॰आत्मत्वा-
वगमे तुरीयस्यानात्मतृष्णाव्यावृत्तिहेतुत्वात् शुक्तिकाव-
गम इव रजततृष्णायाः । न हि तुरीयस्यात्मत्वावगमे
सत्यविद्यातृष्णादिदोषाणां सम्भवोऽस्ति । न च तुरीय-

व्या॰ किमिति निषेधमुखेन व्याख्यायते तत्राह । सर्व्वेति ॥ सर्व्वाणि शब्द-
प्रवृत्ती निमित्तानि षष्ठीगुणादीनि तैः शून्यत्वात्तुरीयस्य वाच्य-
त्वायोगान्निषेधद्वारैव तन्निर्द्देशः सम्भवतीत्यर्थः । साक्षाद्वाच्य-
त्वाभावं द्योतयितुं निर्दिदिक्षतीत्युक्तं । यदि चतुर्थं विधिमुखेन न
निर्द्देष्टुं शक्यं तर्हि शून्यमेव तदापद्येत तन्निषेधेनैव निर्दिश्यमान-
त्वात् ॥ तथाविधं नास्त्यर्थवदिति शङ्कते । शून्यमेवेति ॥ न तुरीयस्य
शून्यत्वमनुमातुं युक्तं । विमतं सदधिष्ठानं कल्पितत्वात् । तथा
विधरजतादिवदित्यनुमानात्तुरीयस्य सत्त्वसिद्धेरित्युत्तरमाह ।
तन्नेति ॥ दृष्टान्तं साधयति । न हीति ॥ रजतादीनां सदनु
विद्धबुद्धिबोध्यत्वादवस्त्वास्पदत्वायोगात् । तद्वदेव प्राणादिविक-
ल्पानामपि नावस्त्वास्पदत्वं सिद्ध्यतीत्यर्थः । यद्यधिष्ठानत्वं तुरीय
स्येष्टं तर्हि वाच्यत्वमधिष्ठानत्वाद्घटादिवदिति प्रक्रमभङ्गः स्यादिति
चोदयति । एवं तर्हीति ॥ किं प्रातिभासिकमधिष्ठानत्वं चेत्
हेतुं । किंवा तात्त्विकं । नाद्यः । तस्य तात्त्विकवाच्यत्वासाधकत्वात् ।

उ० मग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्म्यप्रत्यय-

भा० स्यात्मत्वानवगमे कारणमस्ति । सर्व्वोपनिषदान्तादर्थ्येनोप-
क्षयात् । तत्त्वमसि । अयमात्मा ब्रह्म । तत्सत्यं । स आत्मा
यत्साक्षादपरोक्षाद्ब्रह्म । स वाह्याभ्यन्तरो ह्यजः । आत्मैवेदं
सर्व्वमित्यादिना सोऽयमात्मा परमार्थरूपश्चतुष्पादित्युक्तः
तस्यापरमार्थरूपमविद्याकृतं रज्जुसर्पादिसममुक्तं पाद-
त्रयलक्षणं वीजाङ्कुरस्थानीयं । अथेदानीमवीजात्मकं पर-
मार्थस्वरूपं रज्जुस्थानीयं सर्पादिस्थानीयोक्तस्थानत्रय-
निराकरणेनाह । नान्तःप्रज्ञमित्यादि । नन्वात्मनश्चतुष्पात्त्वं
प्रतिज्ञाय पादत्रयकथनेनैव चतुर्थस्यान्तःप्रज्ञादिभ्योऽन्यत्वे
सिद्धे नान्तःप्रज्ञमित्यादिप्रतिषेधोऽनर्थकः । न सर्पादि-

आ० अतात्त्विके तु वाच्यत्वे प्रक्रमो न विरुध्येत । न द्वितीयः । शुक्त्यादिषु
कल्पितरजतादेरवस्तुत्ववत् तुरीयेऽपि कल्पितप्राणादेरवस्तुत्वा-
त्तत्प्रतियोगिकाधिष्ठानत्वस्य तात्त्विकत्वायोगादिति दूषयति । न
प्राणादीति ॥ किञ्च वाच्यत्वे तुरीयस्य निरुच्यमाने तत्र शब्दप्रवृत्ति-
निमित्तं वक्तव्यं । तच्च षष्ठी वा रूढिर्वा जातिर्वा क्रिया वा गुणो वेति
विकल्प्य प्रथमं प्रत्याह । न हीति ॥ तुरीयातिरिक्तस्यावस्तुत्वात्तस्य
तुरीयस्य च वस्तुभूतसम्बन्धासिद्धेर्विषयाभावे कुतः षष्ठीत्यर्थः ॥
द्वितीयं दूषयति । नापीति ॥ विशिष्टरूपेण विषयत्वेऽपि स्वरू-
पेण निरुपाधिकात्मना तदविषयत्वात् नात्र गवादाविव रूढि-
रवतरतीत्यर्थः ॥ न तृतीयः । गवादाविवाद्वितीये तुरीये सामा-
न्यविशेषभावस्याभिधातुमयोग्यत्वादिति मत्वाह । गवादिव-
दिति ॥ न चतुर्थः । पाचकादाविवाक्रिये तुरीये विक्रियावत्त्वस्य
शब्दप्रवृत्तिनिमित्तस्य वक्तुमयुक्तत्वादित्याह । नापि क्रियावत्त्व-
मिति ॥ न पञ्चमः । उत्पलादौ नीलादिशब्दवन्निर्गुणे तुरीये

उ० सारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः ॥ ७ ॥

---

भा० विकल्पप्रतिषेधेनैव रज्जुस्वरूपप्रतिपत्तिवत्। त्र्यवस्थस्यैवात्मनस्तुरीयत्वेन प्रतिपिपादयिषितत्वात्। तत्त्वमसीतिवत्। यदि हि त्र्यवस्थात्मविलक्षणं तुरीयमन्यत्तत्प्रतिपत्तिद्वाराभावाच्छास्त्रोपदेशानर्थक्यं शून्यतापत्तिर्वा रज्जुरिव सर्पादिभिर्विकल्प्यमाना स्थानत्रयेऽपि आत्मैक एवान्तःप्रज्ञादित्वेन विकल्प्यते यदा तदान्तःप्रज्ञादित्वप्रतिषेधविज्ञानप्रमाणसमकालमेवात्मन्यनर्थप्रपञ्चनिवृत्तिलक्षणफलं परिसमाप्तमिति तुरीयाधिगमे प्रमाणान्तरं साधनान्तरं वा न मृग्यं। रज्जुसर्पविवेकसमकाल इव रज्ज्वां सर्पनिवृत्तिफले सति रज्ज्वधिगमस्य येषां पुनस्तमोऽपनयव्य-

---

टी० गुणवत्त्वस्य शब्दप्रवृत्तिनिमित्तस्य वक्तुमयुक्तत्वादित्याह। नापीति॥ तदेवं तुरीयस्य वाच्यत्वानुमानं शब्दप्रवृत्तिनिमित्तानुपलब्धिबाधितमिति फलितमाह। अत इति॥ यदि तुरीयस्य नास्ति विशिष्टं जात्यादिमत्त्वं तर्हि नरविषाणादिदृष्टेरिव तद्दृष्टेरपि निष्फलत्वं। विशिष्टजात्यादिमतो राजादेरुपासनस्य फलवत्त्वोपलम्भादिति शङ्कते। शशविषाणादीति॥ यथा शुक्तिरियमित्यवगमे रजतादिविषयतृष्णा व्यावर्त्त्यते तथा तुरीयं ब्रह्माहमित्यात्मत्वेन तुरीयस्य साक्षात्कारे सत्यनात्मविषया तृष्णा व्यवच्छिद्यते। तदेवमात्मत्वेन तुरीयावगमस्य सर्व्वाकाङ्क्षानिवर्त्तकत्वादनर्थकत्वाशङ्का न युक्तेति परिहरति। नेत्यादिना॥ तुरीयस्यात्मत्वावगमे सति सर्व्वानर्थहेतुतृष्णादिदोषनिवृत्तिलक्षणं फलमुक्तं विद्वदनुभवेन साधयति। न हीति॥ ननु तुरीयमशेषविशेषशून्यं नात्मत्वेनावगन्तुं शक्यते तद्धेत्वभावादिति

भा० तिरेकेण घटादिगमे प्रमाणं व्याप्रियते तेषां छेद्यावयव-
सम्बन्धवियोगव्यतिरेकेणान्यतरावयवेऽपि छिदिर्व्याप्रियत
इत्युक्तं स्यात् । यदा पुनर्घटतमसोर्विवेककरणे प्रवृत्तं
प्रमाणमनुपादित्सिततमसो निवृत्तिफलावसानं छिदिरिव
छेद्यावयवसम्बन्धविवेककरणे प्रवृत्ता तदवयवद्वैधीभाव-
फलावसानात्तदा नान्तरीयकं घटविज्ञानं न तत्प्रमाण-
फलं। न च तद्वदध्यात्मन्यध्यारोपितान्तःप्रज्ञत्वादिविवेकक
रणे प्रवृत्तस्य प्रतिषेधविज्ञानप्रमाणस्यानुपादित्सितान्तः-

---

व्या० तत्राह । न चेति ॥ सर्व्वोपनिषदामित्युक्तमेवोदाहरणलेशेन
दर्शयति । तत्त्वमसीति ॥ निषेधमुखेनैव तुरीयस्य प्रतिपादनं न
विधिमुखेनेत्युपपाद्य वृत्तानुवादपूर्व्वकमुत्तरग्रन्थमवतारयति ।
सोऽयमित्यादिना ॥ वीजाङ्कुरस्थानीयं मिथो हेतुमद्भावेन व्यव
स्थितमित्यर्थः । अवीजात्मकं कार्य्यकारणविनिर्म्मुक्तमिति यावत् ॥
तत्र हेतुं सूचयति । परमार्थेति ॥ तस्य विधिमुखेन निर्देशा-
नुपपत्तिं प्रागुक्तामभिप्रेत्याह । सर्पादीति ॥ किमुत्तरेण ग्रन्थेन
तुरीयं प्रतिपाद्यते किंवा तस्य स्थानत्रयवैलक्षण्यं विवक्ष्यते। प्रथमे
प्रतिपादकस्य विधानाद्व्यतिरेकादन्यनिषेधानर्थक्यं । द्वितीयेऽपि
तदानर्थक्यमापद्येत । अनुक्त्यैवोक्तादन्यत्वसिद्धेरिति मन्वानः श-
ङ्कते । नन्विति ॥ न तावत्तुरीयं विधिमुखेन बोध्यं । तस्य स्वप्रका-
शत्वात् । तस्मिन् प्रकाशाद्यनुदयात् । तथापि समारोपितविश्वा
दिरूपेण प्रतिपन्नं तन्निषेधेन बोध्यते। तदनिषेधे तस्य यथावदप्रथ-
नात् । अतो न निषेधानर्थक्यमिति परिहरति । न सर्पादीति ॥
तुरीयस्य पादत्रयविलक्षणस्यार्थादेव सिद्धावपि जीवात्मनः स्था-
नत्रयविशिष्टस्य तुरीयं ब्रह्मस्वरूपमिति नोपदेशमन्तरेण सिद्ध्य-
तीति तुरीयग्रन्थोऽर्थवानित्यर्थः । यथा विधिमुखेन प्रवृत्तेन
तत्त्वमसीतिवाक्येन स्थानत्रयसाक्षिणस्त्वम्पदलक्ष्यस्य तत्पदलक्ष्य-
ब्रह्मता लक्षणया बोध्यते। तथा च निषेधशास्त्रेणापि तात्पर्य्यवृत्त्या
जीवस्य तुरीयब्रह्मत्वं प्रतिपादयितुं दृष्टान्तमाह । तत्त्वम

भा॰ प्रज्ञत्वादिनिवृत्तिव्यतिरेकेण तुरीये व्यापारोपपत्तिः ।
अन्तःप्रज्ञत्वादिनिवृत्तिसमकालमेव प्रमातृत्वादिभेदनि-
वृत्तेः। तथा च वक्ष्यति। ज्ञातेऽद्वैतं न विद्यत इति। ज्ञानस्य
द्वैतनिवृत्तिलक्षणव्यतिरेकेण क्षणान्तरानवस्थानात्। अव-
स्थाने चानवस्थाप्रसङ्गाद्द्वैतानिवृत्तिः । तस्मात्प्रतिषेध-
विज्ञानप्रमाणव्यापारसमकाल एवात्मन्यध्यारोपितान्तः-
प्रज्ञत्वाद्यनर्थनिवृत्तिरिति सिद्धं। नान्तःप्रज्ञमिति तैजस-
प्रतिषेधः । न बहिःप्रज्ञमिति विश्वप्रतिषेधः । नोभयतः-

व्या॰ ज्ञेति ॥ ननु स्थानत्रयविशिष्टस्यात्मनो नैव तुरीयात्मत्वं तुरीय-
प्रश्नेन प्रतिपाद्यते। तुरीयस्य विशिष्टादिलक्षणत्वेनात्यन्तभि-
न्नत्वात्तत्राह । यदि हीति ॥ प्रातिभासिकवैलक्षण्येऽपि विशि-
ष्टोपलक्ष्ययोरात्यन्तिकवैलक्षण्याभावान्न तात्त्विकं तुरीयस्य वि-
शिष्टादन्यत्वं । अन्यथाऽत्यन्तभिन्नयोर्मिथःसंस्पर्शविरहिणोरु-
पायोपेयभावायोगात्तुरीयप्रतिपत्तौ विशिष्टस्य द्वारत्वाभावा-
दन्यस्य च तत्प्रतिपत्तिद्वारस्यादर्शनात्तुरीयाप्रतिपत्तिरेव स्यादि
त्यर्थः ॥ शास्त्रात्तत्प्रतिपत्तिः स्यादिति चेन्नेत्याह । शास्त्रेति ॥ तद्वि-
शिष्टरूपमनूद्य विशेषणांशापोहेन तस्य तुरीयत्वमुपदिशति ।
भेदे चात्यन्तिके तदानर्थक्यान्न शास्त्रात्तत्प्रतिपत्तिरित्यर्थः ॥ मा
तर्हि तुरीयप्रतिपत्तिर्भूयादिति चेत्तत्राह । शून्येति ॥ विशिष्ट-
स्यैव प्रतिपत्त्या तुरीयस्याप्रतिपत्तौ प्रतिपन्नस्य विश्वादेर्विशिष्टस्य
प्रत्युदयस्तत्वादन्यस्य चाप्रतिपन्नत्वान्नैरात्म्यधीरेवापद्येतेत्यर्थः ।
भेदपक्षस्येत्थंयोक्तदोषवशान्न सम्भवति तर्हि माभूदभेदपक्षो
ऽपि कथं निर्वहतीति चेत्तत्र किं पक्षं पर्य्यनुयुज्यते किंवा प्रमा-
णान्तरमथ वा साधनान्तरमिति विकल्प्याद्यं दूषयति। रज्ज्वि-
वेति॥ यथा रज्जुरधिष्ठानभूता सर्पाधारादिभिर्विकल्प्यते तथैक
एवात्मा स्थानत्रयेऽपि यदान्तःप्रज्ञत्वादिना विकल्प्यमानो बहुधा
भासते तदा तदनुवादेनान्तःप्रज्ञत्वादिप्रतिषेधजनितं यत्प्र
माणरूपविज्ञानं तदुत्पत्तिसमानकालमेवात्मन्यनर्थनिवृत्तिरूपं

भा० प्रज्ञमिति जाग्रत्स्वप्नयोरन्तरालावस्थाप्रतिषेधः। न प्रज्ञानघनमिति सुषुप्तावस्थाप्रतिषेधः। वीजाभावाविवेकरूपत्वात्। न प्रज्ञमिति युगपत्सर्व्वविषयज्ञातृत्वप्रतिषेधः। नाप्रज्ञमित्यचैतन्यप्रतिषेधः। कथं पुनरन्तःप्रज्ञत्वादीनामात्मनि गम्यमानानां रज्ज्वादौ सर्पादिवत्प्रतिषेधादसत्त्व गम्यत इत्युच्यते। ज्ञस्वरूपाविशेषेऽपीतरेतरव्यभिचारात् रज्ज्वादाविव। रज्ज्वादाविव सर्पाधारादिविकल्पितभेदवत्सर्व्वत्राव्यभिचाराज्ज्ञस्वरूपस्य सत्यत्वं सुषुप्ते व्यभिचरतीति

---

आ० फलं सिद्धमिति न फलपर्य्यनुयोगोऽवकाशवानित्यर्थः। शब्दस्य संसृष्टपरोक्षज्ञानहेतोरसंसृष्टापरोक्षज्ञानहेतुत्वायोगात्तुरीयज्ञाने प्रमाणान्तरमेष्टव्यमिति पक्षं प्रत्याह। तुरीयेति॥ तस्य हि साक्षात्कारे न शब्दातिरिक्तप्रमाणमन्वेष्यं। शब्दस्य विषयानुसारेण प्रमाणहेतुत्वात्। विषयस्य तुरीयस्यासंसृष्टापरोक्षत्वादित्यर्थः। तुरीयसाक्षात्कारे प्रसङ्ख्यानाख्यं साधनान्तरमेष्टव्यमिति पक्षं प्रतिक्षिपति। साधनान्तरं चेति॥ प्रसङ्ख्यानस्याप्रमाणत्वान्न प्रमारूपं प्रति हेतुतेति भावः। यथा रज्जुरियं सर्पो नेति विवेकधीसमुदयसाक्षात्कारं यादृशायामेव रज्ज्वां सर्पनिवृत्तिफले सिद्धे रज्जुसाक्षात्कारस्य फलान्तरं प्रमाणान्तरं साधनान्तरं वा न मृग्यते कॢप्तत्वात् तथेहापीत्याह। रज्ज्विवेति॥ विषयगतं प्राकट्यं प्रमाणफलं नाध्यस्तनिवृत्तिरित्याशङ्क्याह। येषामिति॥ स्वविषयाज्ञानापनयनाय प्रवृत्ता प्रमाणक्रिया स्वविषये भावरूपमतिशयमाधत्ते चेदपनयार्थक्रियात्वाविशेषाच्छिदिरपि छेद्यसंयोगापनयनातिरिक्तमतिशयमादध्यात्। न च संयोगविनाशातिरिक्ते विभागे सम्प्रतिपत्तिरस्ति। प्राकट्यस्य च प्रकाशत्वे ज्ञानवदर्थनिष्ठत्वमप्रकाशत्वे स्यात्। तेनार्थेन विना नाऽर्थोऽस्तीति भावः॥ अज्ञाननिवर्त्तकमेव प्रमाणमिति पक्षे विषयस्फुरणे कारणाभावाद्विषयसंवेदनं न स्यादित्याशङ्क्याह। यदेति॥ घटो हि तमसा समावृतो व्यवहारयोग्यस्तिष्ठति तस्य

भा० चेत्। सुषुप्तस्यानुभूयमानत्वात्। न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यत इति च श्रुतेः। अत एवादृष्टं। यस्माददृष्टं तस्मादव्यवहार्य्यं। अग्राह्यं कर्म्मेन्द्रियैरलक्षणमलिङ्गमित्येतदनुमेयमित्यर्थः। अत एवाचिन्त्यं। अत एवाव्यपदेश्यं शब्दैः। एकात्मप्रत्ययसारं जाग्रदादिस्थानेष्वेकोऽयमा-

---

आ० तमसो निष्कृम्य व्यवहारयोग्यत्वापादने प्रत्यक्षादिप्रमाणं प्रवर्त्तते। तत्रानुपादित्सितस्यानिष्टस्याप्रमेयस्य तमसो निवृत्तिलक्षणे यदा पर्य्यवस्यति तदा घटसंवेदनमार्थिकं प्रमाणफलं न भवति। यथा छिदिक्रिया छेद्यस्य तरोरवयवयोर्म्मिथःसंयोगनिरसने प्रवृत्ता सती तयोरेव छेद्यावयवयोर्द्वैधीभावे फले पर्य्यवस्यति न त्वन्यतरावयवेऽपि छिदिर्थ्याप्रियते तथेहापि तमोनिवृत्तौ प्रमाणं निर्वृणोति। घटस्फुरणं त्वार्थिकं। न च तस्य स्थायित्वमभिव्यञ्जकप्रमातृव्यापारस्यास्थिरत्वादित्यर्थः। किञ्च घटादेर्जडस्य संविदपेक्षत्वात्तत्र संविदो मानफलत्वेऽपि नात्मन्यजडे संविदेकताने मनस्यारोपितधर्म्मनिवर्त्तकत्वमन्तरेण संविज्जनकत्वव्यापारः सम्भवतीत्याह। न चेति॥ तुरीयात्मनि संवेदनजननव्यापारो न प्रमाणस्य प्रकल्प्यते। तस्य संविदात्मकत्वादारोपितनिवृत्तिव्यतिरेकेण मानजन्यफलसंविदनपेक्षत्वादित्यर्थः॥ तत्रैव हेत्वन्तरमाह। अन्तः प्रज्ञत्वादीति॥ आश्रयाभावेनाश्रितप्रमाणाभावादनन्तरक्षणे तस्य व्यापारानुपपत्तिरित्यत्र वाक्यशेषमनुकूलयति। तथा चेति॥ किञ्च ज्ञानाधानद्वैतनिवृत्त्यवच्छिन्नक्षणातिरेकेण न क्षणान्तरे ज्ञानं स्थातुं पारयति। न चास्थिरं ज्ञानं व्यापाराय पर्य्याप्तं। तथा च ज्ञानस्य द्वैतनिवृत्तिव्यतिरेकेण नात्मनि व्यापारोऽस्तीत्याह। ज्ञानस्येति॥ ननु ज्ञानं द्वैतनिवर्त्तकमपि न स्वात्मानं निवर्त्तयति। निवर्त्यनिवर्त्तकभावस्यैकत्र विरोधात्। अतो यावन्निवर्त्तकं स्थास्यति तत्राह। अवस्थाने चेति॥ निवर्त्तकस्य ज्ञानस्य द्वैतनिवृत्तेरनन्तरमपि निवर्त्तकान्तरमपेक्ष्यावस्थाने च तस्य तस्य निवर्त्तकान्तरव्यपेक्षत्वादाद्यस्यापि विज्ञानस्य निवर्त्तकत्वासिद्धिः। न च ज्ञानस्य स्वनिवर्-

भा० त्मेत्यव्यभिचारी यः प्रत्ययस्तेनानुसरणीयं। अथवैक आत्मप्रत्ययः सारं प्रमाणं यस्य तुरीयस्याधिगमे तत् तुरीयमेकात्मप्रत्ययसारं। आत्मेत्येवोपासीत इति श्रुतेः। अन्तःप्रज्ञत्वादि स्थानिधर्म्मप्रतिषेधः कृतः। प्रपञ्चोपशममिति जाग्रदादिस्थानधर्म्माभाव उच्यते। अत एव शान्त

---

आ० कत्वानुपपत्तिः स्वपरविरोधिनां भावानां बहुत्वमुपलम्भादित्यर्थः॥ ज्ञानस्य जन्मातिरिक्तव्यापाराभावात्तज्जन्मनश्च द्वैतनिषेधेनैवोपक्षयात्ज्ञानान्तरे विषयस्फुरणजननायानवस्थानादारोपितात्तद्धर्म्मनिवृत्त्यैव ज्ञानं पर्य्यवसितमित्युपसंहरति। तस्मादिति॥ प्रतिषेधजनितं विज्ञानमेव प्रमाणं। तस्य व्यापारो जन्मैव। तेन समानकालेनैवानर्थनिवृत्तिरिति योजना। तत्र हेतुमाह। वीजभावेति॥ सुषुप्तं हि स्वप्नजागरिते प्रतिवीजभावस्तस्याशेषविशेषविज्ञानाभावरूपत्वाद्विशेषविज्ञानानां सर्व्वेषां घनमेकं साधारणमविभक्तं सुषुप्तमिति तत्प्रतिषेधो नेत्यादिना सम्भवतीत्यर्थः। युक्तं सर्पादीनां रज्ज्वादौ भ्रान्तिप्रतिपन्नानां प्रतिषेधादसत्त्वं। आत्मनि तु प्रमाणेन गम्यमानानामन्तःप्रज्ञत्वादीनां न प्रतिषेधो युज्यते मानविरोधादिति शङ्कते। कथमिति॥ प्रामाणिकत्वस्यासिद्धत्वादयुक्तमन्तःप्रज्ञत्वादीनामसत्यत्वमिति परिहरति। उच्यत इति॥ विमतमसत्यं व्यभिचारित्वात्सम्प्रतिपन्नवदित्याह। ज्ञस्वरूपेति॥ तस्याविशेषो ऽव्यभिचारस्तत्र रज्ज्वादाविवेत्युदाहरणं। अन्तः प्रज्ञत्वादीनामितरेतरव्यभिचारे निदर्शनं सर्पाधारादीति। विमतं सत्यमव्यभिचारित्वाद्रज्ज्वादिवदित्याह। सर्व्वत्रेति॥ तस्य च सत्यत्वे सर्व्वकल्पनाधिष्ठानत्वसिद्धिरिति भावः॥ अव्यभिचारित्वहेतोरसिद्धिं शङ्कते। सुषुप्त इति। न तत्र चैतन्यस्य व्यभिचारः सुषुप्तस्य स्फुरणव्याप्ततया साधकस्फुरणस्यावश्यकत्वादित्याह। न सुषुप्तस्येति॥ सुषुप्ते साधकस्फुरणस्य सत्त्वे प्रमाणमाह। न हीति॥ निषेधशास्त्रालोचनया निर्व्विशेषत्वं तुरीयस्योक्तं तदेव हेतूकृत्य ज्ञानेन्द्रियाविषयत्वमाह। अत एवेति॥ दृष्टस्यैवार्थक्रियादर्शनाददृष्टत्वादर्थक्रियाराहित्यमिति विशेष-

भा० मविक्रियं शिवं यतोऽद्वैतं भेदविकल्परहितं चतुर्थं तुरीयं मन्यन्ते । प्रतीयमानपादत्रयरूपवैलक्षण्यात् । स आत्मा स विज्ञेय इति प्रतीयमानसर्पभूच्छिद्रदण्डादिव्यतिरिक्ता यथा रज्जुस्तथा तत्त्वमसीत्यादिवाक्यार्थः । आत्माऽदृष्टो

---

आ० षणान्तरमाह । यस्मादिति ॥ अदृष्टमित्यनेनाग्राह्यमित्यस्य पौनरुक्त्यं परिहरति । कर्म्मेन्द्रियैरिति ॥ अलक्षणमित्ययुक्तं । सत्यं ज्ञानमनन्तमित्यादिलक्षणोपलम्भादित्याशङ्क्याह । अलिङ्गमिति ॥ को ह्येवान्यात्कः प्राण्यादित्यादिलिङ्गोपन्यासाविरुद्धमेतदित्याशङ्क्याह । अननुमेयमिति ॥ प्रत्यक्षानुमानाविषयत्वप्रयुक्तं विशेषणान्तरमाह । अत एवेति । मनोविषयत्वाभावादेव शब्दाविषयत्वं ॥ शब्दप्रवृत्तेस्तत्प्रवृत्तिपूर्व्वकत्वादित्याह । अत एवेति ॥ तर्हि यथोक्तं वस्तु नास्त्येव प्रमाणाभावादित्याशङ्क्याह । एकात्मेति ॥ परोक्षार्थविषयतया विशेषणं व्याख्यायापरोक्षार्थतया व्याकरोति । अथ वेति ॥ अपरोक्षात्मप्रत्ययस्यात्मनि प्रमाणत्वे बृहदारण्यकश्रुतिमुदाहरति । आत्मत्येवेति ॥ यत्राप्रोतीत्यादिना परिपूर्णत्वादिलक्षणस्तावदात्मोक्तः । स च वाङ्मनसातीतः श्रुतिभ्योऽवगतस्तमेवैकरसं परमात्मानं प्रत्यक्त्वेन गृहीत्वा तन्निष्ठस्तिष्ठतीत्यात्मनोऽवस्थात्रयातीतस्य तुरीयस्यापरोक्षनित्यदृष्टित्वं श्रुतितो दृष्टमित्यर्थः ॥ विशेषणान्तरस्य पुनरुक्तिं परिहरन्नर्थभेदमाह । शान्तमिति ॥ स्थानिधर्म्मस्य स्थानधर्म्मस्य च प्रतिषेधोऽन्तःशब्देन परामृश्यते । शान्तं रागद्वेषादिरहितं । अविक्रियं कूटस्थमित्यर्थः । शिवं परिशुद्धं परमानन्दबोधरूपमिति यावत् ॥ यस्माद्द्वैताभावोपलक्षितं तस्माच्चतुर्थमित्याह । यत इति ॥ अद्वैतमित्येतद्व्याचष्टे । भेदेति ॥ सङ्ख्याविशेषविषयत्वाभावे कथं चतुर्थत्वमित्याशङ्क्याह । प्रतीयमानेति ॥ चतुर्थतुरीययोर्व्याख्यानव्याख्येयत्वेनापौनरुक्त्यं तस्योक्तविशेषणत्वेऽपि मम किमायातमित्याशङ्क्याह । स विज्ञेय इति । तदेव व्याचष्टे । प्रतीयमानेति ॥ न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वादित्यादिवाक्यानि प्रतीकोपादानेन दर्शयति । न हि द्रष्टुरिति ॥ आत्मन्यवबोधार्थे

गौडपादीयोपनिषदाविष्करणं ॥

गौ॰ निवृत्तेः सर्व्वदुःखानामीशानः प्रभुरव्ययः । अद्वैतः सर्व्वभावानां देवस्तुर्य्यो विभुः स्मृतः ॥ १० ॥

भा॰ द्रष्टा । न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यत इत्यादिभिरुक्तो यः स विज्ञेय इति भूतपूर्व्वगत्या ज्ञाते द्वैताभावः ॥ ७ ॥

अत्रैते श्लोका भवन्ति ॥ प्राज्ञतैजसविश्वलक्षणानां सर्व्वदुःखानां निवृत्तेरीशानस्तुरीय आत्मा । ईशान इत्यस्य पदस्य व्याख्यानं प्रभुरिति । दुःखनिवृत्तिं प्रति प्रभुर्भवतीत्यर्थः । तद्विज्ञाननिमित्तत्वाद्दुःखनिवृत्तेः । अव्ययो न व्येति स्वरूपान्न व्यभिचरतीति यावत् । एतत्कुतः । यस्मा-

आ॰ ज्ञातेर्विज्ञेयत्वमित्याशङ्क्य भूतपूर्व्वमविद्यावस्थायां या ज्ञेयत्वाख्यावगतिस्तयेदानीमपि विज्ञेयत्वमित्याह । भूतेति ॥ विद्यावस्थायामेव किमिति ज्ञातृज्ञानज्ञेयविभागो न भवति तत्राह । ज्ञात इति ॥ ज्ञानेन तत्कारणस्याज्ञानस्यापनीतत्वादित्यर्थः ॥ ७ ॥

शान्तःप्रशान्तत्वादितिश्रुत्युक्तेऽर्थे तद्विवरणरूपान् श्लोकानवतारयति । अत्रेति ॥ विविधं स्थानत्रयमस्माद्भवतीति व्युत्पत्त्या तुरीयो विभुरुच्यते । न हि तुरीयातिरेकेण स्थानत्रयमात्मानं धारयति । सर्व्वदुःखानामाध्यात्मिकादिभेदभिन्नानां तद्धेतूनां तदाधाराणामिति यावत् । ईशानपदं प्रयुज्य प्रभुपदं प्रयुञ्जानस्य पौनरुक्त्यमित्याशङ्क्याह । ईशान इति ॥ तुरीयस्य दुःखनिवृत्तिं प्रति सामर्थ्यस्य नित्यत्वान्न कदाचिदपि दुःखं स्यादित्याशङ्क्याह । तद्विज्ञानेति ॥ संसृष्टरूपेण व्ययोऽस्तीत्याशङ्क्य विशिनष्टि । स्वरूपादिति ॥ तत्र प्रश्नपूर्व्वकमद्वितीयत्वं हेतुमाह । एतत्कुत इति ॥ अतो द्वितीयस्य व्ययहेतोरभावादिति शेषः । विश्वादीनां दृश्यमानत्वात्तुरीयस्याद्वितीयत्वासिद्धिरित्याशङ्क्याह ।

गौ॰ कार्य्यकारणबद्धौ ताविष्येते विश्वतैजसौ। प्राज्ञः
कारणबद्धस्तु द्वौ तौ तुर्य्ये न सिध्यतः ॥ ११ ॥
नात्मानं नापरांश्चैव न सत्यं नापि चा॰

भा॰ द्वैतः सर्व्वभावानां रज्जुसर्पवन्मृषात्वात् एष देवो द्योत-
नात्तुरीयस्तुर्यो विभुर्व्यापी स्मृतः ॥ १० ॥

विश्वादीनां सामान्यविशेषभावो निरूप्यते तुर्य्ययाथा-
त्म्यावधारणार्थं। कार्य्यं क्रियत इति फलभावः। कारणं
करोतीति वीजभावः। तत्त्वाग्रहणान्यथाग्रहणाभ्यां वीज-
फलभावाभ्यां तौ यथोक्तौ विश्वतैजसौ बद्धौ सङ्गृहीताविि-
ष्येते। प्राज्ञस्तु वीजभावेनैव बद्धः। तत्त्वाप्रतिबोधमात्र-
मेव हि वीजं प्राज्ञत्वे निमित्तं। ततो द्वौ तौ वीजफलभावौ
तत्त्वाग्रहणान्यथाग्रहणे तुर्य्ये न सिद्ध्यतो न विद्येते न सम्भवत
इत्यर्थः ॥ ११ ॥

कथं पुनः कारणबद्धत्वं प्राज्ञस्य तुरीये वा तत्त्वाग्र-

आ॰ सर्व्वभावानामिति ॥ अवस्थात्रयातीतस्य तुरीयस्योक्तमद्वयत्वं
विद्वदनुभवसिद्धमिति सूचयति। स्मृत इति ॥ १० ॥

विश्वादिष्ववान्तरविशेषनिरूपणद्वारेण तुरीयमेव निर्द्धार-
यति। कार्य्यमिति ॥ श्लोकस्य तात्पर्य्यमाह। विश्वादीनामिति ॥
विश्वतैजसयोरुभयबद्धत्वं सामान्यं प्राज्ञस्य कारणमात्रबद्धत्वं
विशेषः ॥ अथेदं निरूपणं कुत्रोपयुज्यते तत्राह। तुर्य्येति ॥
प्राज्ञस्य कारणमात्रबद्धत्वं साधयति। तत्त्वाप्रतिबोधेति ॥ यथा-
साममवान्तरविशेषे स्थिते प्रकृते तुरीये किमायातमित्याशङ्क्याह।
तत इति ॥ तयोस्तस्मिन्नविद्यमानत्वं चिदेकताने तयोर्निरूपयि-
तुमशक्यत्वादित्याह। सम्भवत इति ॥ ११ ॥

प्राज्ञस्य कारणबद्धत्वं साधयति। नात्मानमिति। तुरीयस्य

गौ० वृत्तं । प्राज्ञः किञ्चन संवेत्ति तुर्य्यं तत्सर्व्वदृक्

भा० ग्रहणान्यथाग्रहणलक्षणौ बन्धौ न सिध्यत इति । यस्मादात्मविलक्षणमविद्याबीजप्रसूतं वाह्यं द्वैतं प्राज्ञो न किञ्चन संवेत्ति यथा विश्वतैजसौ ततश्चासौ तत्त्वाग्रहणेन तमसा अन्यथाग्रहणबीजभूतेन बद्धो भवति । यस्मात्तुरीयं तत्सर्व्वदृक् सदा तुरीयादन्यस्याभावात्सर्व्वदा सदैवेति । सर्व्वञ्च तद्दृक्चेति सर्व्वदृक्तस्मान्न तत्त्वाग्रहणलक्षणं बीजं । तत्र तत्प्रसूतस्यान्यथाग्रहणस्याप्यत एवाभावो न हि सवितरि सदा प्रकाशात्मके तद्विरुद्धमप्रकाशनं अन्यथा प्रकाशनं वा सम्भवति । न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यत इति श्रुतेः । अथवा जाग्रत्स्वप्नयोः सर्व्वभूतावस्थः सर्व्व-

आ० कार्य्यकारणाभ्यामसंस्पृष्टत्वं स्पष्टयति । तुर्य्यमिति ॥ श्लोकव्यावर्त्त्यामाशङ्कामाह । कथमिति ॥ वाशब्दात्कथमित्यस्यानुवृत्तिः सूच्यते । प्रथमचोद्योत्तरत्वेन पादत्रयं व्याचष्टे । यस्मादिति ॥ विलक्षणमनात्मानमिति यावत् । अनृतमित्यस्य व्याख्यानमविद्याबीजप्रसूतमिति द्वैतं द्वितीयमसत्यमित्यर्थः । वैधर्म्योदाहरणं यथेति ॥ प्राज्ञस्य विभागविज्ञानाभावे फलमाह । ततश्चेति ॥ यथोक्ते तमसि कार्य्यलिङ्गमनुमानं सूचयति । अन्यथेति ॥ द्वितीयं चोद्यं चतुर्थपादव्याख्यानेन प्रत्याख्याति । यस्मादित्यादिना ॥ सदैव तुरीयादन्यस्याभावात्तुरीयमेव सर्व्वं तच्च सदा दृग्रूपमिति यस्मात्तस्मादिति योजना । तत्रेति परिपूर्णचिदेकतानं तुरीयं परामृश्यते । अत एवेति कारणाभावे कार्य्यानुपपत्तेरित्यर्थः ॥ तुरीये तत्त्वाग्रहणान्यथाग्रहणयोरसम्भवं दृष्टान्तेन साधयति । न हीति ॥ यत्तु तुरीयस्य सदा दृगात्मत्वमुक्तं तत्र प्रमाणमाह । न हि द्रष्टुरिति ॥ चतुर्थपादं प्रकारान्तरेण योजयति । अथ

गौ० सदा ॥ १२ ॥ द्वैतस्याग्रहणं तुल्यमुभयोः प्राज्ञ-
तुर्य्ययोः। वीजनिद्रायुतः प्राज्ञः सा च तुर्य्येन
विद्यते ॥ १३ ॥

---

भा० वस्तुदृगाभासस्तुरीय एवेति सर्व्वदृक् सदा। नान्यदतोऽस्ति
द्रष्टृ इत्यादिश्रुतेः॥ १२ ॥ निमित्तान्तरप्राप्ताशङ्कानिवृ-
त्त्यर्थोऽयं श्लोकः। कथं द्वैताग्रहणस्य तुल्यत्वात्कारणबद्धत्वं
प्राज्ञस्यैव न तुरीयस्येति प्राप्ता शङ्का निवर्त्त्यते। यस्मा-
द्वीजनिद्रायुतस्तत्त्वाप्रतिबोधो निद्रा। सैव च विशेषप्रति-
बोधप्रसवस्य वीजं। सा वीजनिद्रा। तया युतः प्राज्ञः
सदा दृक्स्वभावत्वात्तत्त्वाप्रतिबोधलक्षणा निद्रा तुरीये
न विद्यते। अतो न कारणबन्धस्तस्मिन्नित्यभिप्रायः ॥ १३ ॥

---

आ० वेति ॥ तत्रापि श्रुतिमनुकूलयति। नान्यदिति ॥ १२ ॥ अनुमा-
नप्रयुक्तां तुरीयेऽपि कारणबद्धत्वाशङ्कां परिहरति। द्वैतस्येति ॥
श्लोकस्य तात्पर्य्यं गृह्णाति। निमित्तान्तरेति ॥ विमतं कारण-
बद्धं द्वैताग्रहणत्वात्प्राज्ञवदित्यनुमानमेव दर्शयन्निमित्तान्तरमेव
स्फोरयति। कथमिति ॥ अनुमानकृताशङ्कानिवर्त्तकत्वेन श्लोक-
मवतारयति। प्राप्तेति ॥ प्राज्ञस्योत्तरभाविप्रबोधादिकार्य्यापे-
क्षया नियतपूर्व्वभावित्वं कारणबद्धत्वे प्रयोजकं। न च तुरीयस्य
तदस्तीत्यप्रयोजको हेतुरित्याह। यस्मादिति ॥ किञ्च तुरीयस्य
विशुद्धचिद्धातुत्वप्रसाधनप्रमाणबाधात् कालात्ययापदिष्टो हेतु-
रित्याह। सदेति ॥ न च पूर्व्वोक्तोपाधेः साधनव्याप्तिस्तुरीयस्यो-
त्तरभाविकार्य्यापेक्षया नियतप्राग्भावित्वाभावादिति मत्वाह।
तत्त्वेति ॥ दोषद्वयवत्त्वेनानुमानस्याभासत्वं फलितमाह। अतो
नेति ॥ १३ ॥

गा॰ स्वप्ननिद्रायुतावाद्यौ प्राज्ञस्त्वस्वप्ननिद्रया। न
निद्रां नैव च स्वप्नं तुर्ये पश्यन्ति निश्चिताः॥१४॥

भा॰ स्वप्नोऽन्यथाग्रहणं सर्प इव रज्ज्वां। निद्रोक्ता तत्त्वा-
प्रतिबोधलक्षणं तम इति। ताभ्यां स्वप्ननिद्राभ्यां युक्तौ
विश्वतैजसौ। अतस्तौ कार्य्यकारणबद्धावित्युक्तौ। प्राज्ञस्तु
स्वप्नवर्जितः केवलयैव निद्रया युत इति कारणबद्ध
इत्युक्तं। नोभयं पश्यन्ति तुरीये निश्चिता ब्रह्मविदो
विरुद्धत्वात्सवितरीव तमः। अतो न कार्य्यकारणबद्ध
इत्युक्तस्तुरीयः॥१४॥

आ॰ कार्य्यकारणबद्धौ तावित्यादिश्लोकोक्तमर्थमनुभवावष्टम्भेन प्रप-
ञ्चयति। स्वप्नेति॥ ननु तैजसस्यैव स्वप्नप्रयुक्तत्वं न तु विश्वस्य प्रबु-
द्धमानस्य तद्योगो युज्यते प्रबुध्यमानत्वव्याघातात्। कथमविशेषेण
विश्वतैजसौ स्वप्ननिद्रायुताविति॥ तत्र स्वप्नशब्दार्थमाह। स्वप्न
इति॥ यथा रज्ज्वां सर्पो गृह्यमाणोऽन्यथा गृह्यते तथाऽऽत्मनि
देहादिग्रहणमन्यथाग्रहणं। आत्मनो देहादिविलक्षणस्य श्रुति
युक्तिसिद्धत्वात्तेन स्वप्नशब्दितेनान्यथाग्रहणेन संसृष्टत्वं विश्व
तैजसयोरविशिष्टमित्यर्थः। तथा निद्राणस्यैव निद्रा युक्ता न तु
प्रबोधवतो विश्वस्येत्याशङ्क्याह। निद्रेति॥ उक्ताभ्यां स्वप्ननि-
द्राभ्यां विश्वतैजसयोर्वैशिष्ट्यं निगमयति। ताभ्यामिति॥ तयो-
रन्यथाग्रहणेनाग्रहणेन च वैशिष्ट्यमुपेत्य प्रागपि सूचितमित्या-
शङ्क्याह। अत इति॥ द्वितीयं पादं विभजते। प्राज्ञस्त्विति॥
द्वितीयार्धं व्याचष्टे। नोभयमिति॥ तुरीये निद्रास्वप्नयोरदर्शने
हेतुमाह। विरुद्धत्वादिति॥ अज्ञानतत्कार्य्ययोर्नित्यविज्ञप्ति
रूपे तुरीये विरुद्धत्वादनुपलब्धिरित्यत्र दृष्टान्तमाह। सवित
रीवेति॥ तुरीये वस्तुतो नाविद्यातत्कार्य्ययोः सङ्गतिरस्तीत्य
ङ्गीकृत्य प्रागपि सूचितमित्याह। अतो नेति॥१४॥

गौ० अन्यथा गृह्णतः स्वप्नो निद्रातत्त्वमजानतः । विपर्य्यासे तयोः क्षीणे तुरीयं पदमश्नुते ॥ १५ ॥

भा० कदा तुरीये निश्चितो भवतीत्युच्यते । स्वप्नजागरितयोरन्यथा रज्ज्वां सर्प इव गृह्णतस्तत्त्वं स्वप्नो भवति । निद्रातत्त्वमजानतस्तिसृष्ववस्थासु तुल्या । स्वप्ननिद्रयोस्तुल्यत्वाद्विश्वतैजसयोरेकराशित्वं । अन्यथाग्रहणात् प्राधान्याच्च गुणभूता निद्रेति तस्मिन् विपर्य्यासः स्वप्नः । तृतीये तु स्थाने तत्त्वाज्ञानलक्षणा निद्रैव केवला विपर्य्यासः । अतस्तयोः कार्य्यकारणस्थानयोरन्यथाग्रहणाग्रहणलक्षणविपर्य्यासे कार्य्यकारणबन्धरूपे परमार्थतत्त्वप्रतिबोधतः

---

व्या० कदा तर्हि स्वप्नो भवतीत्यपेक्षायामाह । अन्यथेति ॥ निद्रा तर्हि कदेति सन्दिहानं प्रत्याह । निद्रेति ॥ तुरीयप्रतिपत्तिसमयं सङ्गिरते । विपर्य्यास इति ॥ श्लोकव्यावर्त्त्यामाकाङ्क्षां दर्शयति । कदेति ॥ कदा स्वप्ननिष्ठो भवति कदा निद्रानिष्ठः स्यादित्यपि द्रष्टव्यं ॥ प्रश्नत्रयस्योत्तरं श्लोकेन दर्शयति । उच्यत इति ॥ तत्र कदा स्वप्नो भवतीति प्रश्नं परिहरति । स्वप्नेति ॥ अवस्थाद्वये स्वप्नद्रष्टुरित्यर्थः । द्वितीयं प्रश्नं समाधत्ते । निद्रेति ॥ विश्वादिषु त्रिषु तयोरिति द्विवचनं कथमित्याशङ्क्याह । स्वप्ननिद्रयोरिति ॥ विश्वतैजसावेको राशिः । प्राज्ञो द्वितीयः । ततः श्लोके द्विवचनमविरुद्धमित्यर्थः । प्रथमे राशौ विपर्य्यासस्वरूपं कथयति । अन्यथेति । द्वितीये राशौ विपर्य्यासविशेषं दर्शयति । तृतीये त्विति । द्वितीयार्द्धगतान्यक्षराणि व्याकरोति । अत इति ॥ द्विवचनस्योपपन्नत्वाद्विपर्य्यासस्य च विभागेन निर्द्धारितत्वाद-

गौ॰ अनादिमायया सुप्तो यदा जीवः प्रबुध्यते ।

भा॰ क्षीणे तुरीये पदमश्नुते तदोभयलक्षणं बन्धरूपं तत्रा-
पश्यन् तुरीये निश्चितो भवतीत्यर्थः ॥ १५ ॥

योऽयं संसारी जीवः स उभयलक्षणेन तत्त्वाप्रतिबोध-
रूपेण बीजात्मना अन्यथाग्रहणलक्षणेन चानादिकाल-
प्रवृत्तेन मायालक्षणेन स्वप्नेन ममायं पिता पुत्रोऽयं
नप्ता क्षेत्रं पशवोऽहमेषां स्वामी सुखी दुःखी क्षयितोऽह-
मनेन वर्द्धितश्चानेनेत्येवंप्रकारान् स्वप्नान् स्थानद्वयेऽपि
पश्यन् सुप्तो यदा वेदान्तार्थतत्त्वाभिज्ञेन परमकारुणिकेन
गुरुणा नास्येवं त्वं हेतुफलात्मकः किन्तु तत्त्वमसीति प्रति-
बोध्यमानो यदा तदैवं प्रतिबुध्यते । कथं नास्मिन् बाह्य-
माभ्यन्तरं वा जन्मादिभावविकारोऽस्त्यतोऽजं सबाह्या-
भ्यन्तरसर्व्वभावविकारवर्जितमित्यर्थः । यस्माज्जन्मादि-
कारणभूतं नास्मिन्नविद्यातमोबीजं निद्रा विद्यत इत्य-

आ॰ त्यर्थः । तृतीयं प्रश्नं प्रतिविधत्ते । तदेति ॥ तत्त्वप्रबोधाद्विपर्य्या-
सक्षयावस्थायामित्यर्थः ॥ १५ ॥

कदा तत्त्वप्रतिबोधो विपर्य्यासक्षयहेतुर्भवतीत्यपेक्षायामाह ।
अनादीति ॥ प्रतिबुध्यमानं तत्त्वमेव विशिनष्टि । अजमिति ॥
जीवशब्दवाच्यमर्थं निर्द्दिशति । योऽयमिति ॥ परमात्मैव जीव-
भावमापन्नः संसरतीत्यर्थः । तस्य कथं जीवभावापत्तिरित्या-
शङ्क्य कार्य्यकरणबद्धत्वादित्याह । स इति ॥ परमात्मोभयलक्ष-
णेन स्वापेन सुतेजा भवतीत्यन्वयः । स्वापस्योभयलक्षणत्वमेव
प्रकटयति । तत्त्वेत्यादिना ॥ मायालक्षणेनेत्युभयत्र सम्बध्यते ॥
सुषुप्तमेव व्यनक्ति । ममेत्यादिना ॥ स्वापपरिगृहीतस्यैव प्रतिबो-
धनावकाशो भवतीत्याह । यदेति ॥ यदा सुषुप्तस्तदा बुध्यते

गौ० अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा ॥ १६ ॥
प्रपञ्चो यदि विद्येत निवर्त्तेत न संशयः ।

भा० निद्रं । अनिद्रं हि तत्तुरीयमत एवास्वप्नं । तन्निमित्तत्वादन्यथा ग्रहणस्य । यस्माच्चानिद्रमस्वप्नं तस्मादजमद्वैतं तुरीयमात्मानं बुध्यते तदा ॥ १६ ॥

प्रपञ्चनिवृत्त्या चेत्प्रतिबुध्यतेऽनिवृत्ते प्रपञ्चे कथमद्वैतमिति । उच्यते । सत्यमेवं स्यात्प्रपञ्चो यदि विद्येत रज्ज्वां सर्प इव कल्पितत्वात् न तु स विद्यते विद्यमानश्चेन्निवर्त्तेत न संशयः । न हि रज्ज्वां भ्रान्तिबुद्ध्या

आ० इति शेषः ॥ प्रतिबोधकं विशिनष्टि । वेदान्तार्थेति ॥ कथं प्रतिबोधनं तदाह । नासीति ॥ अनुभूयमानत्वमेवमित्युच्यते । यथोक्तविशेषणेन गुरुणा प्रतिबुध्यमानः शिष्यस्तदाऽस्मादेवं वक्ष्यमाणप्रकारेण प्रतिबुद्धो भवतीत्युक्तं ॥ तमेव प्रकारं प्रश्नपूर्व्वकं द्वितीयार्द्धव्याख्यानेन विशदयति । कथमित्यादिना ॥ अस्मिन्निति सप्तम्या बोध्यात्मरूपं परामृश्यते । बाह्यं कार्य्यमान्तरं कारणं तदुभयमिह नास्ति । ततो जन्मादेर्भावविकारस्य नात्रावकाशः सम्भवतीत्यर्थः ॥ अवतारितं विशेषणं सप्रमाणं योजयति । सबाह्येति ॥ अजत्वादेवानिद्रं कार्य्याभावे कारणस्य प्रमाणाभावेन वक्तुमशक्यत्वादिति मत्वाह । यस्मादिति ॥ अनिद्रत्वं हेतुं कृत्वा विशेषणान्तरं दर्शयति । अत एवेति ॥ अन्यथाग्रहणसम्बन्धवैधुर्य्यं हेतुं कृत्वा विशेषणद्वयमित्याह । यस्माच्चेति ॥ तत्त्वमेवंलक्षणमस्यात्मनः किमायातमित्याशङ्क्याह । तुरीयमिति । तदा विशिष्टेनाचार्य्येण विशिष्टं शिष्यं प्रति प्रतिबोधनावस्थायामित्यर्थः ॥ १६ ॥

तुरीयमद्वैतमित्युक्तं तदयुक्तं प्रपञ्चस्य द्वितीयस्य सत्त्वादित्याशङ्क्याह । प्रपञ्च इति ॥ प्रपञ्चनिवृत्त्या तुरीयप्रतिबोधात्तदद्वितीयत्वमविरुद्धमिति सिद्धान्तिकीमाशङ्कां पूर्व्ववाद्यनुवदति । प्रपञ्चेति ॥ तर्हि पूर्व्वप्रपञ्चनिवृत्तेरनिवृत्तस्य तस्य सत्त्वाद्द्वैतं

गौ० मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥ १७ ॥

भा० कल्पितः सर्पो विद्यमानः सन् विवेकतो निवृत्तः । नैव माया मायाविना प्रयुक्ता तद्दर्शिनां चक्षुर्बन्धापगमे विद्यमाना सती निवृत्ता । तथेदं प्रपञ्चाख्यं मायामात्रं द्वैतं रज्जुवन्मायाविवच्चाद्वैतं परमार्थतस्तस्मान्न कश्चित्प्रपञ्चः प्रवृत्तो निवृत्तो वास्तीत्यभिप्रायः ॥ १७ ॥

व्या० सेद्धमर्हतीति पूर्ववाद्येव ब्रवीति । अनिवृत्त इति ॥ सिद्धान्ती श्लोकेनोत्तरमाह । उच्यत इति ॥ किं प्रपञ्चस्य वस्तुत्वमुपेत्याद्वैतानुपपत्तिरुच्यते किंवा ऽवस्तुत्वमिति विकल्प्याद्ये द्वैतानुपपत्तिमङ्गीकरोति ॥ सत्यमिति ॥ अद्वैतं तर्हि कथमुपपद्येतेत्याशङ्क्य प्रपञ्चस्यावस्तुत्वपक्षे तदुपपत्तिरित्याह । रज्ज्वामिति ॥ यथा सर्पो रज्ज्वां कल्पितो वस्तुतो नास्ति तथा प्रपञ्चोऽपि कल्पितत्वान्न वस्तुतो विद्यते । तथाच तात्त्विकमद्वैतमविरुद्धमित्यर्थः ॥ उक्तमर्थं व्यतिरेकमुखेन साधयति । विद्यमानश्चेति । यद्यात्मनि कारणाधीनः सन् प्रपञ्चो विद्येत तदा कृतकस्यानित्यत्वनियमात्तन्निवृत्तिरवश्यम्भाविनी । कार्य्यस्य च निवृत्तिर्नाम कारणसंसर्गस्ततः सति कारणे प्रपञ्चनिवृत्तेरनात्यन्तिकत्वादद्वैतानुपपत्तिराशङ्क्येत । न च कारणाधीनः सन् प्रपञ्चोऽस्ति । तस्य कल्पितत्वेनावस्तुत्वादित्यर्थः ॥ प्रपञ्चस्य मायया विद्यमानत्वं न तु वस्तुत्वमित्युदाहरणाभ्यामुपपादयति । स चेत्यादिना ॥ सर्पो हि रज्ज्वां भ्रान्त्या कल्पितो नायं सर्पो रज्जुरेवेति विवेकधिया निवृत्तो नैव वस्तुतो विद्यते । बाधितस्य कालत्रयेऽपि सत्त्वाभावात् । माया चेन्द्रजालशब्दवाच्या मायाविना प्रदर्शिता पार्श्वस्थानां मायादर्शनवतां चक्षुर्गतस्य यथार्थदर्शनप्रतिबन्धकस्यापगमे सति समुत्पन्नसम्यग्दर्शनतो निवृत्ता सती नैव वस्तुतो विद्यमाना भवितुमुत्सहते । यथेदमुदाहरणद्वयं तथेदं द्वैतं प्रपञ्चाख्यं मायामात्रं न परमार्थतोऽस्तीत्यर्थः । प्रपञ्चस्यासत्त्वे शून्यवादः स्यादित्याशङ्क्याह । रज्जुवदिति ॥ प्रपञ्चस्य कालत्रयेऽपि सत्त्वाभावे तात्त्विकमद्वैतमविरुद्धमित्युपसंहरति । तस्मादिति ॥ १७ ॥

गा॰ विकल्पो विनिवर्त्तेत कल्पितो यदि केनचित्। उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते ॥ १८ ॥

भा॰ ननु शास्ता शास्त्रं शिष्य इति विकल्पः कथं निवृत्त इत्युच्यते। विकल्पो विनिवर्त्तेत यदि केनचित्कल्पितः स्यात्। यथाऽयं प्रपञ्चो मायारज्जुसर्पवत्तथाऽयं शिष्यादिभेदविकल्पोऽपि प्राक् प्रतिबोधादेवोपदेशनिमित्तोऽत उपदेशादयं वादः शिष्यः शास्ता शास्त्रमित्युपदेशकार्य्ये

आ॰ प्रकारान्तरेणाद्वैतानुपपत्तिमाशङ्क्य परिहरति। विकल्प इति॥ यदि केनचिद्धेतुना तत्त्वज्ञानेन कार्य्येण शास्त्रादिविकल्पो हेतुतया विकल्पितस्तथाप्यसौ बाधितो निवर्त्तेत न तु तात्त्विकमद्वैतं विरोद्धुमर्हति। तत्त्वज्ञानात्प्रागवस्थायामेव तत्त्वोपदेशं निमित्तीयतः। शास्त्रादिभेदोऽनूद्यते। उपदेशप्रयुक्ते तु ज्ञाने निवृत्ते न किञ्चिदपि द्वैतमस्तीत्यद्वैतमविरुद्धमित्यर्थः। श्लोकव्यावर्त्यामाशङ्कामाह। नन्विति॥ तदनिवृत्तौ नाद्वैतसिद्धिर्न च शास्त्रादिभेदस्य कल्पितत्वादविरोधः। तथा सति धूमाभासवत्तत्त्वज्ञानहेतुत्वानुपपत्तिरित्यर्थः॥ धूमाभासस्याव्याप्तत्वादहेतुत्वेऽपि कल्पितस्य शास्त्रादेस्तत्त्वज्ञानहेतुत्वं प्रतिबिम्बादिवदुपपन्नमित्युत्तरमाह। उच्यत इति॥ शिष्यः शास्ता शास्त्रमित्ययं विकल्पो विभागः सोऽपि निवृत्तिप्रतियोगित्वादवस्तुत्वाज्ज्ञानबाध्यत्वाद्द्वैताविरोधीत्यर्थः॥ शिष्यादिविभागस्य कल्पितत्वं दृष्टान्तेन स्पष्टयति। यथेति॥ मायाविना प्रयुक्ता माया यथा कल्पितेष्यते यथा च सर्पधारादिर्विकल्पितस्तथाऽयं प्रपञ्चः सर्व्वोऽपि कल्पितो वस्तु न भवतीति प्रपञ्चितं तथैव प्रपञ्चैकदेशः शिष्यादिरपि ज्ञानात्प्राक्कल्पितः सन्नज्ञानकृतो मिथ्येत्यर्थः। किमिति ज्ञानात्पूर्व्वमसौ कल्प्यते तत्राह। उपदेशेति॥ उपदेशमुद्दिश्य यथोक्तविभागवचनमित्युक्तमुपसंहरति। अत इति॥ उपदे-

उ० सोऽयमात्माऽध्यक्षरमोङ्कारोऽधिमात्रं पादा मात्रा मात्राश्च पादा अकार उकारो मकार इति ॥ ८ ॥

---

भा० तु ज्ञाने निर्वृत्ते ज्ञाते परमार्थतत्त्वे द्वैतं न विद्यते ॥१८॥

अभिधेयप्रधान ओङ्कारश्चतुष्पादात्मेति व्याख्यातो यः सोऽयमात्माऽध्यक्षरमक्षरमधिकृत्याभिधानप्राधान्येन वर्ण्यमानोऽध्यक्षरं । किं पुनस्तदक्षरमित्याह । ओङ्कारः । सोऽयमोङ्कारः पादशः प्रविभज्यमानोऽधिमात्रं मात्रामधिकृत्य वर्त्तत इत्यधिमात्रं । कथमात्मनो ये पादास्त ओङ्कारस्य मात्राः । कास्ताः । अकार उकारो मकार इति ॥ ८ ॥

---

प्रात्प्रागिव तस्मादूर्द्ध्वमपि भेदोऽनुवर्त्ततामित्याशङ्क्य विरोधिसद्भावान्नैवमित्याह । उपदेशेति ॥ १८ ॥

तत्त्वज्ञानसमर्थानां मध्यमानामुत्तमानाञ्चाधिकारिणामध्यारोपापवादाभ्यां पारमार्थिकं तत्त्वमुपदिष्टमिदानीं तत्त्वग्रहणासमर्थानामधमाधिकारिणामात्मध्यानविधानायारोपदृष्टिमेवावष्टभ्य व्याचष्टे । अभिधेयेत्यादिना ॥ अध्यक्षरमित्येतद्व्याकरोति । अक्षरमिति ॥ अध्यक्षरमित्यत्र किं पुनस्तदक्षरमिति प्रश्नपूर्व्वकं व्युत्पादयति । किं पुनरित्यादिना ॥ तस्य विशेषणान्तरं दर्शयति । सोऽयमिति ॥ आत्मा हि पादशो विभज्यते मात्रामधिकृत्य पुनरोङ्कारो व्यवतिष्ठते तत्कथं पादशो विभज्यमानस्याधिमात्रत्वमिति पृच्छति । कथमिति ॥ पादानां मात्राणाञ्चैकत्वादेतदविरुद्धमित्याह । आत्मन इति ॥ ८ ॥

उ॰ जागरितस्थानो वैश्वानरोऽकारः प्रथमा मात्राप्तेरादिमत्त्वाद्वाप्नोति ह वै सर्वान् कामानादिश्च भवति य एवं वेद ॥ ९ ॥

---

भा॰ तत्र विशेषनियमः क्रियते। जागरितस्थानो वैश्वानरो यः स ओङ्कारस्याकारः प्रथमा मात्रा। केन सामान्येनेत्याह। आप्तेराप्तिर्व्याप्तिरकारेण सर्व्वा वाग्व्याप्ता। अकारो वै सर्व्वा वागिति श्रुतेः। तथा वैश्वानरेण जगत्। तस्य ह वैतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेज इत्यादिश्रुतेः। अभिधानाभिधेययोरेकत्वञ्चावोचाम। आदिरस्य विद्यत इत्यादिमद्यथैवादिमदकाराख्यमक्षरं तथैव वैश्वानरस्तस्माद्वा सामान्यादकारत्वं वैश्वानरस्य। तदेकत्वविदः फलमाह। आप्नोति ह वै सर्व्वान् कामानादिः प्रथमश्च

---

आ॰ पादानां मात्राणाञ्च मध्ये विश्वाख्यविशेषस्याकारविशेषत्वं नियमयति। तत्रेति॥ विश्वाकारयोरेकत्वं सादृश्ये सत्यारोपयितुं शक्यमन्यत्र सत्येव तस्मिन्नारोपसन्दर्शनात्तथा च किं तदारोपप्रयोजकं सादृश्यमिति पृच्छति। केनेति॥ सामान्योपन्यासपरां श्रुतिमवतारयति। आहेति॥ व्याप्तिमेवाकारस्य श्रुत्युपन्यासेन व्यनक्ति। अकारेणेति॥ अध्यात्माधिदैविकयोरेकत्वं पूर्व्वमुक्तमुपेत्य विश्वस्य वैश्वानरस्य जगद्व्याप्तिं श्रुत्यवष्टम्भेन स्पष्टयति। तथेति॥ किञ्च सामान्यद्वारा वाच्यवाचकयोरेकत्वमारोप्यं न भवति तयोरेकत्वस्य प्रागेवोक्तत्वादित्याह। अभिधानेति॥ सामान्यान्तरमाह। आदिरिति॥ तदेव स्फुटयति। यथैवेति॥ उकारो मकारश्चेत्युभयमपेक्ष्य प्रथमपाठादिमत्त्वमकारस्य द्रष्टव्यं। विश्वस्य पुनरादिमत्त्वं। तैजसप्राज्ञावपेक्ष्याद्यस्थाने वर्त्तमानत्वादित्यर्थः॥ उक्तस्य सामान्यान्तरस्य फलं दर्शयति। तस्मादिति॥

उ॰ स्वप्नस्थानस्तैजस उकारो द्वितीया मात्रोत्कर्षादुभयत्वाद्वोत्कर्षति ह वै ज्ञानसन्ततिं समानश्च

भा॰ भवति महतां य एवं वेद यथोक्तमेकत्वं वेदेत्यर्थः ॥ १० ॥

स्वप्नस्थानस्तैजसो यः स ओङ्कारस्योकारो द्वितीया मात्रा। केन सामान्येनेत्याह। उत्कर्षात्। अकाराद् उत्कृष्ट इव ह्युकारस्तथा तैजसो विश्वादुभयत्वाद्वा अकारमकारयोर्मध्यस्थ उकारस्तथा विश्वप्राज्ञयोर्मध्ये तैजसोऽत उभयभाक्त्वसामान्याद्विद्वत्फलमुच्यते। उत्कर्षति ह वै ज्ञानसन्ततिं। विज्ञानसन्ततिं वर्द्धयतीत्यर्थः। समान-

आ॰ किमर्थमित्थं सामान्यद्वारा तयोरेकत्वमुच्यते तद्विज्ञानस्य फलवत्त्वादित्याह। तदेकत्वेति ॥ ९ ॥

सादृश्यविकल्पादेव फलविकल्पः ॥ द्वितीयपादस्य द्वितीयमात्रायाश्चैकत्वं व्यपदिशति। स्वप्नेत्यादिना ॥ यथा प्रथमपादस्य प्रथममात्रायाश्चैकत्वं सामान्यं पुरस्कृत्योक्तं तथा द्वितीयपादस्य द्वितीयमात्रायाश्चैकत्वं सत्येव सामान्ये वक्तव्यं तदभावे तदारोपायोगादिति पृच्छति। केनेति ॥ सामान्योपन्यासपूर्वकमेकत्वारोपं साधयति। आहेति ॥ अकारस्य सर्व्ववाग्व्यापकत्वेनोत्कृष्टत्वस्य स्पष्टत्वात्कथं तस्मादुकारस्योत्कर्षो वर्ण्यते तत्राह। अकारादिति ॥ अकारस्योत्कर्षे वास्तवेऽपि पाठक्रमादुकारस्योत्कर्षवत्त्वमौपचारिकमिवकारस्यामुमर्थमुपोद्बलयति। यथा अकारादुकारोत्कर्षो दर्शितस्तथा विश्वात्तैजसस्योत्कर्षो वक्तव्यः ॥ सूक्ष्माभिमानिनः स्थूलाभिमानिनः सकाशादुत्कर्षस्य युक्तत्वादित्याह। तथेति ॥ उकारतैजसयोर्न प्रत्येकमुभयत्वं एकत्वस्योभयत्वव्याघातादित्याशङ्क्य व्याकरोति। अकारेति ॥ मध्यस्थत्वादुकारतैजसयोरुभयभाक्त्वं सामान्यं तस्मात्तयोरेकत्वं शक्यमारोपयितुमित्याह। अत इति ॥ यथोक्तैकत्वविज्ञानं फलवत्त्वादुपादेयमिति सूचयति। विद्वदिति ॥ ज्ञान-

उ० भवति नास्याब्रह्मवित्कुले भवति य एवं वेद ॥ १० ॥

सुषुप्तस्थानः प्राज्ञो मकारस्तृतीया मात्रा मिते-

भा० स्तुल्यश्च मित्रपक्षस्येव शत्रुपक्षाणामप्यप्रद्वेष्यो भवति। अब्र-
ह्मविदस्य कुले न भवति य एवं वेद ॥ १० ॥

सुषुप्तस्थानः प्राज्ञो यः स ओङ्कारस्य मकारस्तृतीया
मात्रा। केन सामान्येनेत्याह सामान्यमिदमत्र। मितेर्मि-
तिर्मानं मीयेत इव हि विश्वतैजसौ प्राज्ञेन प्रलयोत्पत्त्योः
प्रवेशनिर्गमाभ्यां। प्रस्थेनेव यवाः। तथा ओङ्कारसमाप्तौ
पुनः प्रयोगे च प्रविश्य निर्गच्छत इवाकारोकारौ मकारे।
अपीतेर्वाऽपीतिरप्यय एकीभावः। ॐकारोच्चारणेऽन्त्येऽक्षरे

व्या० सन्ततेरुत्कर्षो नाम कुतश्चित्तस्याभेदावेदनं तस्योत्कर्षाभावे कथं
फलवत्त्वमित्याशङ्क्य व्याचष्टे। विज्ञानेति॥ पक्षद्वयतुल्यत्वमेव
प्रकटयति। अप्रद्वेष्य इति॥ सादृश्यभेदेन फलभेदमावेद्य द्विवि-
धसादृश्यप्रयुक्तैकत्वविज्ञानफलमाह। अब्रह्मविदिति ॥ १० ॥

तृतीयपादस्य तृतीयमात्रयाऽैकत्वमुपन्यस्यति। सुषुप्तेति॥
पूर्व्ववदेकत्वप्रयोजकमत्रापि प्रश्नपूर्व्वकमुपदर्शयति। केनेत्या-
दिना॥ मानमेव विवृणोति॥ मीयेत इति॥ ओमित्योङ्कारस्य नैर-
न्तर्य्येणोच्चारणे सत्यकारोकारौ प्रथमं मकारं प्रविश्य पुनस्तस्मा-
न्निर्गच्छन्ताविवोपलभ्येते तेन मकारेऽपि मानसामान्यमिति वक्तव्य-
मित्यर्थः॥ एकीभावमेव स्फारयति। ओङ्कारेति॥ मकारवत्प्राज्ञे
ऽपि तदस्ति सामान्यमित्याह। तथेति॥ उक्तस्यापि सामान्यस्य
फलमाह। अतो वेति॥ सामान्यद्वयद्वारेण प्राज्ञमकारयोरेक-
त्वज्ञानं नाविवक्षितं फलवत्त्वादित्याह। विद्वदिति॥ अवि-
दुषोऽपि जगद्विषयज्ञानमस्तीत्याशङ्क्य विशिनष्टि। जगद्याथा-
र्थ्यमिति॥ तद्याथात्म्यज्ञाप्याज्ञातत्वं प्रलयभवनमनिष्टत्वान्न फल-

उ॰ रपीतेर्वा मिनोति ह वा इदꣳ सर्वमपीतिश्च भवति य एवं वेद ॥ ११ ॥

॥ गौडपादीयश्लोकाः ॥

गौ॰ विश्वस्यात्वविवक्षायामादिसामान्यमुत्कटं ।
मात्रासम्प्रतिपत्तौ स्यादाप्तिसामान्यमेव च ॥ १९ ॥

---

भा॰ एकीभूतावेवाकारोकारौ। तथा विश्वतैजसौ सुषुप्तकाले प्राज्ञे। अतो वा सामान्यादेकत्वं प्राज्ञमकारयोः। विद्वत्फलमाह। मिनोति ह वेदं सर्व्वं जगद्याथात्म्यं जानातीत्यर्थः। अपीतिश्च जगत्कारणात्मा भवतीत्यर्थः॥ अत्रावान्तरफलवचनं प्रधानसाधनस्तुत्यर्थं॥ ११॥

अत्रैते श्लोका मन्त्रा भवन्ति। विश्वस्यात्वमकारमात्रत्वं यदा विवक्ष्यते तदादित्वसामान्यमुक्तन्यायेनोत्कटमुद्भूतं दृश्यत इत्यर्थः। अत्वविवक्षायामित्यस्य व्याख्यानं मात्रासम्प्रतिपत्ताविति। विश्वस्याकारमात्रत्वं यदा सम्प्र-

---

आ॰ मित्याशङ्क्याह। जगदिति॥ तत्र तत्रैकत्वज्ञाने फलभेदकथनादुपासनाभेदमाशङ्क्याङ्गेषु फलभेदश्रुतेरर्थवादत्वमुपेत्याह। अत्रेति॥ पादानां मात्राणाञ्च क्रमादेकत्वविज्ञाने फलकथनं सर्व्वान् पादान्मात्राश्च सर्व्वाः स्वात्मन्यन्तर्भाव्य प्रधानस्य ब्रह्मध्यानस्य साधनं यदोङ्काराख्यमक्षरं तस्य स्तुतावुपयुज्यते तेन च तदेवैकमुपासनमितरस्यातदङ्गत्वान्नोपास्तिभेदकत्वमित्यर्थः॥ ११॥

पादानां मात्राणाञ्च यदेकत्वं सनिमित्तं श्रुत्योपन्यस्तं तत्र श्रुत्यर्थविवरणरूपान् पूर्व्ववदेव श्लोकानवतारयति। अत्रेति। प्रथमपादस्य प्रथममात्रायाश्चाभेदारोपार्थमुक्तं सामान्यद्वयं विशदयति। विश्वस्येति॥ उक्तन्यायेनादिरस्यत्यादाविति शेषः।

गा॰ तैजसस्योत्वविज्ञाने उत्कर्षो दृश्यते स्फुटं ।
मात्रासम्प्रतिपत्तौ स्यादुभयत्वं तथाविधं ॥२०॥
मकारभावे प्राज्ञस्य मानसामान्यमुत्कटं ।
मात्रासम्प्रतिपत्तौ तु लयसामान्यमेव च ॥२१॥
त्रिषु धामसु यत्तुल्यं सामान्यं वेत्ति निश्चितः ।
सम्पूज्यः सर्व्वभूतानां वन्द्यश्चैष महामुनिः॥२२॥

---

भा॰ तिपद्यत इत्यर्थः । आप्तिसामान्यमेव चोत्कटमित्यनुवर्त्तते चशब्दात् ॥ १९ ॥ तैजसस्योत्वविज्ञाने उकारत्वविवक्षाया-मुत्कर्षो दृश्यते स्फुटं स्पष्ट इत्यर्थः। उभयत्वञ्च स्फुटमेवेति। पूर्व्ववत्सर्व्वं ॥ २० ॥

मकारत्वे प्राज्ञस्य मितिलयावुत्कृष्टे सामान्ये इत्यर्थः ॥ २१ ॥ यथोक्तस्थानत्रये तुल्यमुक्तं सामान्यं वेत्त्येवमेवैतदिति निश्चितो यः सम्पूज्यो वन्द्यश्च ब्रह्मविल्लोके भवति ॥ २२ ॥

---

था॰ पुनरुक्तिपरिहारद्वारा विवक्षितमर्थमाह। अत्वेति॥ अमुष्टंक्ति द्योतकं दर्शयति।चशब्दादिति ॥१९॥ द्वितीयपादस्य द्वितीयमात्रायाश्चैकत्वारोपप्रयोजकद्वयं श्रुत्युक्तं व्यनक्ति। तैजसस्येति॥ स्फुटमिति क्रियाविशेषणं। तथाविधमित्यस्यार्थं स्फुटमित्याह। स्फुटमेवेति॥ उत्वविज्ञान इत्यस्य व्याख्यानं मात्रासम्प्रतिपत्ताविति तस्य व्याख्यानं सर्व्वमित्युच्यते तत्पूर्व्ववद्द्रष्टव्यमित्युच्यते। पूर्व्ववदिति॥२०॥
तृतीयपादस्य तृतीयमात्रायाश्चैकत्वाध्यासे सामान्यद्वयं श्रुत्या दर्शितं विशदयति। मकारेति॥ अक्षरार्थस्य पूर्व्ववदेव सुज्ञानत्वात्तात्पर्य्यार्थमाह। मकारत्व इति ॥ २१ ॥ विश्वादीनामकारादीनाञ्च यत्तुल्यं सामान्यमुक्तं तद्विज्ञानं स्तौति। त्रिष्विति॥ यथोक्तस्थानत्रयं जागरितं स्वप्नं सुषुप्तञ्चेति। त्रितयं तुल्यं पादानां मात्राणाञ्चेति शेषः॥ उक्तं सामान्यमाप्तिरुत्कर्षो मितिरित्यादिना॥ महामुनिरित्यस्यार्थमाह। ब्रह्मविदिति॥ २२॥

गो॰ अकारो नयते विश्वमुकारश्चापि तैजसं ।
मकारश्च पुनः प्राज्ञं नामात्रे विद्यते गतिः ॥२३॥

---

भा॰ यथोक्तैः सामान्यैरात्मपादानां मात्राभिः सहैकत्वं कृत्वा यथोक्तोङ्कारं प्रतिपद्य यो ध्यायीत तमकारो नयते विश्वं प्रापयति अकारालम्बनोङ्कारं विद्वान् वैश्वानरो भवतीत्यर्थः। तथोकारस्तैजसं। मकारश्चापि पुनः प्राज्ञञ्च-शब्दान्नयत इत्यनुवर्त्तते। क्षीणे तु मकारे बीजभावक्षया-दमात्रे ओङ्कारे गतिर्न विद्यते क्वचिदित्यर्थः ॥ २३ ॥

---

आ॰ पूर्व्वोक्तसामान्यज्ञानवतो ध्याननिष्ठस्य फलविभागं दर्शयति। अकार इति॥ यत्र तु पादानां मात्राणाञ्च विभागो नास्ति तस्मि-न्नोङ्कारे तुरीयात्मनि व्यवस्थितस्य प्राप्तृप्राप्तव्यप्राप्तिविभागो नास्ती-त्याह। अमात्र इति॥ ओङ्कारध्यायिनमकारो विश्वं प्रापयतीत्युक्त-मयुक्तं। विश्वप्राप्तेर्ध्यानमन्तरेण सिद्धत्वात्। अकारस्य चाध्येयस्योक्त-फलप्रापकत्वायोगादित्याशङ्क्याह। अकारेति॥ तदालम्बनं तत्प्र-धानमिति यावत्। अकारप्रधानमोङ्कारं ध्यायतो यथा वैश्वानर-प्राप्तिस्तथोकारप्रधानं तमेव ध्यायतस्तैजसस्य हिरण्यगर्भप्राप्ति-र्भवतीत्याह। तथेति। यस्तु मकारप्रधानमोङ्कारं ध्यायति तस्य प्राज्ञाख्याव्याकृतप्राप्तिर्युक्तेत्याह। मकारश्चेति॥ क्रियापदानुवृत्तिरत्र विवक्षिता॥ चतुर्थपादं व्याचष्टे। क्षीणे त्विति। स्थूलप्रपञ्चो नामादिकं विश्वस्तेनैतदात्मकमकारमात्रं सूक्ष्मप्रपञ्चः स्वप्नस्तैज-सश्चैतदात्मकमुकारमात्रं प्रपञ्चद्वयकारणं सुषुप्तं प्राज्ञश्चेत्येतत्-त्रितयं मकारमात्रं तत्रापि पूर्व्वं पूर्व्वमुत्तरोत्तरभावमापाद्यते। तदेवं सर्व्वमोङ्कारमात्रमिति ध्यात्वा स्थितस्य यदेतावन्तं काल-मोमिति रूपेण प्रतिपन्नं तत्परित्यज्य वेदान्तवाक्योपदेशसमुत्थस-म्यग्ज्ञानेन पूर्व्वोक्तसर्व्वविभागनिर्मुक्तात्मानस्य मकारत्वेन प्रती-तस्य क्षये ब्रह्मण्येव मुक्ते पर्य्यवसितस्य न क्वचिद्गतिरुपपद्यते परिच्छेदाभावादित्यर्थः । २३ ।

॥ उपनिषद् ॥

उ॰ अमात्रश्चतुर्थोऽव्यवहार्य्यः प्रपञ्चोपशमः शिवोऽद्वैत एवमोङ्कार आत्मैव संविशत्यात्मनाऽऽत्मानं

---

भा॰ अमात्रो मात्रा यस्य नास्ति सोऽमात्र ओङ्कारश्चतुर्थस्तुरीय आत्मैव केवलोऽभिधानाभिधेयरूपयोर्वाङ्मनसयोः क्षीणत्वादव्यवहार्य्यः। प्रपञ्चोपशमः शिवोऽद्वैतः संवृत्त एवं यथोक्तविज्ञानवता प्रयुक्त ओङ्कारस्त्रिमात्रस्त्रिपादः। आत्मैव संविशत्यात्मना स्वेनैव स्वं पारमार्थिकमात्मानं य एवं वेद। परमार्थदर्शिनां ब्रह्मविदां तृतीयं वीजभावं दग्ध्वाऽऽत्मानं प्रविष्ट इति न पुनर्जायते तुरीय-

---

आ॰ प्रत्यक्चैतन्यमोङ्कारसंवेद्यं त्रिमात्रेणोङ्कारेणाध्यस्तेन तादात्म्यादोङ्कारो निरूप्यते। तस्य परेण ब्रह्मणैक्यममात्रादिश्रुत्या विवक्ष्यते तामवतार्य्य व्याकरोति। अमात्र इत्यादिना॥ केवलत्वम-विर्तयितुं। विशेषणान्तरमुपपादयति। अभिधानेति॥ अभिधानं वागभिधेयं मनश्चित्तातिरिक्तार्थाभावस्याभिधास्यमानत्वात्तयोर्मूलाज्ञानक्षयेण क्षीणत्वादिति हेत्वर्थः॥ अव्यवहार्य्यश्चेदात्मा नास्त्येवेत्याशङ्क्य विकारजातविनाशावधित्वेनात्मनोऽविशेषान्नैवमित्याह। प्रपञ्चेति॥ तस्य च सर्व्वानर्थाभावोपलक्षितस्य परमानन्दत्वेन पर्य्यवसानं सूचयति। शिव इति॥ तस्यैव सर्व्वद्वैतकल्पनाधिष्ठानत्वेनावस्थानमभिप्रेत्याह। अद्वैत इति॥ ओङ्कारस्तुरीयः सन्नात्मैवेति यदुक्तं तदुपसंहरति। एवमिति॥ यथोक्तं विज्ञानं पादानां मात्राणां चैकत्वं। न च पादा मात्राश्च तुरीयात्मन्योङ्कारे सन्ति। पूर्व्वपूर्व्वविभागस्योत्तरोत्तरात्मभावेन क्रमादात्मनि पर्य्यवसानाद्विज्ञानवता प्रयुक्तः सन्नोङ्कारो मात्राः पादाश्च यस्मिन्नन्तर्भाव्यावस्थितस्यात्मनो भेदमसहमानस्तद्रूपो भवतीत्यर्थः॥ उक्तैक्यज्ञानस्य फलमाह।

उ॰ य एवं वेद य एवं वेद ॥ १२ ॥ इति माण्डूक्योपनिषन्मूलमन्त्राः समाप्तिङ्गताः ॥ ॐ तत्सत् हरिः ॐ ॥

भा॰ ख्यावीजत्वात्। न हि रज्जुसर्पयोर्विवेके रज्ज्वां प्रविष्टः सर्पो बुद्धिसंस्कारात् पुनः पूर्व्ववत्तद्विवेकिनामुत्थास्यति। मन्दमध्यमधियान्तु प्रतिपन्नसाधकभावानां सन्मार्गगामिनां सन्न्यासिनां मात्राणां पादानाञ्च क्लृप्तसामान्यविदां यथावदुपास्यमान ओङ्कारो ब्रह्मप्रतिपत्तये आलम्बनीभवति। तथा च वक्ष्यति। आश्रमास्त्रिविधा हीना इत्यादि ॥१२॥

इति माण्डूक्यमूलमन्त्रभाष्यं ॥ ॐ ॥

आ॰ संविशतीति ॥ सुषुप्ते ब्रह्मप्राप्तस्य पुनरुत्थानवत् मुक्तस्यापि पुनर्जन्म स्यादित्याशङ्क्याह। परमार्थेति ॥ सुषुप्तस्य पुनरुत्थानं वीजभूताज्ञानस्य सत्त्वादुपपद्यते। इह तु वीजभूतमज्ञानं तृतीयं सुषुप्ताख्यं दग्ध्वैव तेषामात्मानं तुरीयं प्रविष्टो विद्वानिति नासौ पुनरुत्थानमर्हति। कारणमन्तरेण तदयोगादित्यर्थः ॥ तुरीयमेव पुनरुत्थानवीजभूतं भविष्यतीत्याशङ्क्य कार्य्यकारणविनिर्म्मुक्तस्य तस्य तदयोगान्नैवमित्याह। तुरीयस्येति ॥ मुक्तस्यापि पूर्व्वसंस्कारात् पुनरुत्थानमाशङ्क्य दृष्टान्तेन निराचष्टे। न हीति ॥ पूर्व्ववदित्यविवेकावस्थायामिवेत्यर्थः। तद्विवेकिनां रज्जुसर्पविवेकविज्ञानवतामिति यावत्। बुद्धिसंस्कारादीत्यत्र बुद्धिशब्देन सर्पभ्रान्तिर्गृह्यते। उत्तमाधिकारिणामोङ्कारद्वारेण परिशुद्धब्रह्मात्मैक्यविदामपुनरावृत्तिलक्षणमुक्तं फलं। इदानीं मन्दानां मध्यमानाञ्च कथं ब्रह्मप्रतिपत्त्या फलप्राप्तिरित्याशङ्क्याह। मन्देति ॥ तेषामपि क्रममुक्तिरविरुद्धेत्यर्थः ॥ तत्रैव वाक्यशेषानुकूल्यं कथयति। तथा चेति ॥ १२ ॥ इति माण्डूक्यमूलमन्त्रभाष्यटीका समाप्ता ॥ ॐ ॥

## ॥ गौडपादीयश्लोकाः ॥

गौ॰ ओङ्कारं पादशो विद्यात् पादा मात्रा न संशयः ।
ओङ्कारं पादशो ज्ञात्वा न किञ्चिदपि चिन्तयेत् ॥२४
युञ्जीत प्रणवे चेतः प्रणवो ब्रह्म निर्भयं ।

---

भा॰ पूर्व्ववदत्रैते श्लोका भवन्ति । यथोक्तैः सामान्यैः पादा एव मात्रा मात्राश्च पादास्तस्मादोङ्कारं पादशो विद्यादित्यर्थः । एवमोङ्कारे ज्ञाते दृष्टार्थमदृष्टार्थं वा न किञ्चित्प्रयोजनं चिन्तयेत्कृतार्थत्वादित्यर्थः ॥ २४ ॥ युञ्जीत समादध्यात् यथा व्याख्याते परमार्थरूपे प्रणवे चेतो मनो

---

आ॰ यथा पूर्व्वमाचार्य्यैश्श्रुत्यर्थप्रकाशकाः श्लोकाः प्रणीतास्तथोत्तरेऽपि श्लोकाः श्रुत्युक्तेऽर्थे एवं सम्भवन्तीत्याह । पूर्व्ववदिति ॥ ओङ्कारस्य पादशो विद्या कीदृशीत्याशङ्क्याह । पादा इति ॥ पादानां मात्राणाञ्चान्योन्यमेकत्वं कृत्वा तद्विभागविधुरमोङ्कारं ब्रह्मबुद्ध्या ध्यायतो भवति कृतार्थतेति दर्शयति । ओङ्कारमिति । तस्मात्पादानां मात्राणाञ्चान्योन्यमेकत्वादित्यर्थः । तदेकत्वं पुरस्कृत्योङ्कारमुभयविभागशून्यं ब्रह्मबुद्ध्या जानीयादित्याह । ओङ्कारमिति ॥ उत्तरार्द्धस्य तात्पर्य्यमाह । एवमिति ॥ २४ ॥ प्रणवानुसन्धानकुशलस्य प्रणवज्ञानेनैव सर्व्वद्वैतापवादकेन कृतार्थता भवतीत्युक्तं । इदानीं तदनभिज्ञस्य परोपदेशमात्रशरणस्य ध्यानकर्त्तव्यता कथयति । युञ्जीतेति ॥ ननु मनसः समाधानं सर्व्वत्रापि कर्त्तव्यं किमिति प्रणवे तत्कर्त्तव्यतोच्यते तत्राह । प्रणव इति ॥ सम्प्रति प्रणवे समाहितचित्तस्य फलं दर्शयति । प्रणवे नित्ये इति ॥ समाधानविषयमाह । यथेति ॥ तुरीयरूपं यथोच्यते तत्र हेतुमाह ।

गौ० प्रणवे नित्ययुक्तस्य न भयं विद्यते क्वचित् ॥ २५ ॥
प्रणवो ह्यपरं ब्रह्म प्रणवश्च परः स्मृतः ।
अपूर्व्वोऽनन्तरो वाह्यो न परः प्रणवोऽव्ययः ॥ २६ ॥

---

भा० यस्मात्प्रणवो ब्रह्म निर्भयं । न हि तत्र सदा युक्तस्य भयं विद्यते क्वचिद्विद्वान्न बिभेति कुतश्चनेति श्रुतेः ॥ २५ ॥ परापरे ब्रह्मणि प्रणवः परमार्थतः क्षीणेषु मात्रापादेषु पर एवात्मा ब्रह्मेति न पूर्व्वं कारणमस्य विद्यत इत्यपूर्व्वः । नास्यान्तरं भिन्नजातीयं किञ्चिद्विद्यत इत्यनन्तरः । तथा वाह्यमन्यन्न विद्यत इत्यवाह्यः । अपरं कार्य्यमस्य न विद्यत इत्यनपरः । स वाह्याभ्यन्तरो ह्यजः सैन्धवघनवदित्यर्थः ॥ २६ ॥

---

आ० यस्मादिति ॥ तदेव साधयति । न हीति ॥ तत्र तैत्तिरीयकश्रुत्याऽऽनुकूल्यमाह । विद्वानिति ॥ २५ ॥ कीदृशस्तर्हि प्रणवो मन्दानां मध्यमानाञ्चाधिकारिणां ध्येयो भवतीत्याशङ्क्याह । प्रणवे हीति ॥ उत्तमाधिकारिणां कीदृशस्तर्हि प्रणवः सम्यग्ज्ञानगोचरो भवति तत्राह । पूर्व्व इति ॥ परापरब्रह्मात्मना प्रणवो मन्दमध्यमाधिकारिणोर्ध्येयतामुपगच्छतीति पूर्व्वार्द्धं व्याचष्टे । परेति ॥ उत्तमाधिकारिणस्तु सर्व्वविशेषशून्यमेकरसं प्रत्यग्भूतं यद्ब्रह्म तद्रूपेण प्रणवः सम्यग्ज्ञानाधिगम्यो भवतीत्युत्तरार्द्धं विभजते । परमार्थत इत्यादिना ॥ उक्तेऽर्थे प्रमाणं सूचयति । सवा ह्येति ॥ २६ ॥

गौ० सर्व्वस्य प्रणवो ह्यादिर्मध्यमान्तस्तथैव च ।
एवं हि प्रणवं ज्ञात्वा व्यश्नुते तदनन्तरं ॥ २७ ॥
प्रणवं हीश्वरं विद्यात्सर्व्वस्य हृदि संस्थितं ।

---

भा० आदिमध्यान्ता उत्पत्तिस्थितिप्रलयाः । सर्व्वस्यैव मायाहस्तिरज्जुसर्पमृगतृष्णिकास्वप्नादिवदुत्पद्यमानस्य वियदादिप्रपञ्चस्य यथा मायाव्यादयः । एवं हि प्रणवमात्मानं मायाव्यादिस्थानीयं ज्ञात्वा तत्क्षणादेव तदात्मभावं व्यश्नुत इत्यर्थः ॥ २७ ॥ सर्व्वप्राणिजातस्य स्मृतिप्रत्ययास्पदे हृदये

---

आ० यदोङ्कारस्य प्रत्यगात्मत्वमापन्नस्य तुरीयस्यापूर्व्वत्वमनन्तरत्वमित्यादिविशेषणमुक्तं तत्र हेतुमाह । सर्व्वस्येति ॥ यथोक्तविशेषणं प्रणवं प्रत्यक्षं प्रतिपद्य कृतकृत्यो भवतीत्याह । एवं हीति ॥ पूर्व्वार्द्धं व्याकरोति । आदीति ॥ सर्व्वस्यैवोत्पद्यमानस्योत्पत्तिस्थितिलया यथोक्तप्रणवाधीना भवन्ति । अतस्तस्योक्तं विशेषणं युक्तमित्यर्थः ॥ तत्र परिणामवादं व्यावर्त्त्य विवर्त्तवादं द्योतयितुमुदाहरति । मायेति ॥ अनेकोदाहरणमुत्पद्यमानस्यानेकविधत्वबोधनार्थं प्रणवस्य प्रत्यगात्मत्वप्राप्तस्याविकृतस्यैव स्वमायाशक्तिवशाज्जगद्धेतुत्वमित्यत्र दृष्टान्तमाह । यथेति ॥ यथा मायावी स्वगतविकारमन्तरेण मायाहस्त्यादेरिन्द्रजालस्य स्वमायावशादेव हेतुः । यथा वा रज्ज्वादयः स्वगतविकारविरहिणः स्वाज्ञानादेव सर्पादिहेतवस्तथाऽयमात्मा प्रणवभूतो व्यवहारदशायां स्वाविद्यया सर्व्वस्य हेतुर्भवति । अतो युक्तं तस्य परमार्थावस्थायां पूर्व्वोक्तविशेषणवत्त्वमित्यर्थः ॥ द्वितीयार्द्धं विभजते । एवं हीति । पूर्व्वोक्तविशेषणसम्पन्नमिति यावत् । ज्ञानस्य मुक्तिहेतोः सहायान्तरापेक्षा नास्तीति सूचयति । तत्क्षणादेवेति ॥ तदात्मभावमित्यत्र तच्छब्देनापूर्व्वादिविशेषणं परमार्थवस्तु परामृश्यते । २७ । ब्रह्मबुद्ध्या प्रणवमिति ध्यायतो हृदयाख्ये

गौ॰ सर्व्वव्यापिनमोङ्कारं मत्वा धीरो न शोचति ॥ २८ ॥
अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः ।
ओङ्कारो विदितो येन स मुनिर्नेतरो जनः ॥ २९ ॥

---

भा॰ स्थितमीश्वरं प्रणवं विद्यात्सर्व्वव्यापिनं व्योमवदोङ्कारमात्मानमसंसारिणं धीरो बुद्धिमान् मत्वा न शोचति। शोकनिमित्तानुपपत्तेः। तरति शोकमात्मविदितिश्रुतिभ्यः ॥ २८ ॥ अमात्रस्तुरीय ओङ्कारो मीयतेऽनयेति मात्रा परिच्छित्तिः सा अनन्ता यस्य सोऽनन्तमात्रः। नैतावत्त्वमस्य परिच्छेत्तुं शक्यत इत्यर्थः। सर्व्वद्वैतोपशमत्वादेव शिवः। ओङ्कारो यथा व्याख्यातो विदितो येन स परमार्थत-

---

आ॰ देशमुपदिशति। प्रणवमिति ॥ परमार्थदर्शिनस्तु देशाद्यनवच्छिन्नवस्तुदर्शनादार्थिकशोकाभावं तत्र को मोहः कः शोक इत्यादिश्रुतिसिद्धमनुवदति। सर्व्वव्यापिनमिति ॥ हृदयदेशे प्रणवभूतस्य ब्रह्मणो ध्येयत्वे हेतुं सूचयति। स्मृतिप्रत्ययेति। बुद्धिमानिति विवेकित्वमुच्यते। मत्वेति साक्षात्कारसम्पत्तिर्विवक्ष्यते ॥ विवेकद्वारा तत्त्वसाक्षात्कारे सति शोकनिवृत्तौ हेतुमाह। शोकेति ॥ तस्य हि निमित्तमात्माज्ञानं। तस्यात्मसाक्षात्कारतो निवृत्तौ शोकानुपपत्तिरित्यत्र प्रमाणमाह। तरतीति। आदिशब्देन भिद्यते हृदयग्रन्थिरित्यादिश्रुतिर्गृह्यते ॥ २८ ॥ ओङ्कारं तुरीयभावमापन्नो यः प्रतिपन्नस्तं स्तौति ॥ अमात्र इति ॥ यथोक्तप्रणवप्रतिपत्तिविहीनस्तु जननमरणमात्रभागी न पुरुषार्थभाग्भवतीति विद्यारहितं निन्दति। नेतर इति। यावदविभागस्य मात्रा विभागस्य चाभावादोङ्कारस्तुरीयः सन्नमात्रो भवतीत्याह। अमात्र इति। ननु कथमनन्तापरिच्छित्तिरोङ्कारस्य तुरीयस्योच्यते। न हि तत्र परिच्छित्तिरेवास्तीत्याशङ्क्याह। नैतावत्त्वमिति। अनर्थात्मकद्वैतसंस्पर्शाभावादप-

गौ० इति माण्डूक्योपनिषदर्थाविष्करणपरायां गौड-
पादीयकारिकायां प्रथममागमप्रकरणं ॥ ॐ
तत्सत् ॥

---

भा० त्वस्य मननान्मुनिः । नेतरो जनः शास्त्रविदपीत्यर्थः ॥ २९ ॥
इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्रा-
जकाचार्य्यस्य शङ्करभगवतः कृतावागमशास्त्रविवरणे गौ-
डपादीयकारिकासहितमाण्डूक्योपनिषद्भाष्ये प्रथममाग-
मप्रकरणं सम्पूर्णम् ॥ ॐ तत्सत् ॥

---

आ० तिबन्धेन परमानन्दत्वं तस्मिन्नाविर्भवतीत्यभिप्रेत्याह । सर्व्वेति ॥
यथा व्याख्यातः पूर्व्वार्द्धेनोक्तविशेषणवानित्यर्थः । ननु यथोक्त-
प्रणवपरिज्ञानरहितस्यापि शास्त्रपरिज्ञानवत्त्वान्न जन्मोपल-
क्षितसंसारभाक्त्वेन पुरुषार्थासिद्धिः । नवं । शास्त्रविदोऽपि
तत्त्वज्ञानाभावे मुख्यपुरुषार्थासिद्धेरित्यभिप्रेत्याह । नेतर इति ॥
तदेवं प्रणवद्वारेण निरुपाधिकमात्मानमनुसन्दधानस्य पुरुषार्थ-
परिसमाप्तिर्नेतरेषां वहिर्मुखानामिति स्थितं ॥ २९ ॥ इति
श्रीमत्परमहंसपरिव्राजकाचार्य्यश्रीशुद्धानन्दपादपूज्यशिष्यभग-
वदानन्दज्ञानविरचितायां माण्डुक्योपनिषदाविष्कारणपरगौड-
पादीयकारिकाभाष्यटीकायां प्रथममागमप्रकरणं सम्पूर्णं ॥ ॐ
तत्सत् ॥ १ ॥

# अथ गौडपादीयकारिकाया वैतथ्याख्यं द्वितीयं प्रकरणं ॥

हरिः ॐ ॥

गौ॰ वैतथ्यं सर्व्वभावानां स्वप्न आहुर्म्मनीषिणः ।

---

भा॰ ॐ ॥ ज्ञाते द्वैतं न विद्यत इत्युक्तं । एकमेवाद्वितीयमित्यादिश्रुतिभ्यः । आगममात्रं तत्तत्रोपपत्त्यापि द्वैतस्य वैतथ्यं शक्यतेऽवधारयितुमिति द्वितीयं प्रकरणमारभ्यते । वैतथ्यमित्यादिना । वितथस्य भावो वैतथ्यं असत्यत्वमित्यर्थः । कस्य । सर्व्वेषां बाह्याध्यात्मिकानां भावानां पदार्थानां स्वप्न उपलभ्यमानानामाहुः कथयन्ति मनीषिणः प्रमाणकुशलाः । वैतथ्ये हेतुमाह । अन्तःस्था-

---

आ॰ ॐ ॥ आगमप्राधान्येनाद्वैतं प्रतिपादयता तत्प्रत्यनीकस्य द्वैतस्य मिथ्यात्वमर्थादुक्तं इदानीं तन्मिथ्यात्वमुपपत्तिप्राधान्येनापि प्रतिपत्तुं शक्यमिति दर्शयितुं प्रकरणान्तरमवतारयन्नादौ दृष्टान्तसिध्यर्थं तस्मिन् श्रुतसम्मतिमाह । वैतथ्यमिति ॥ न केवलमाप्तोक्तिवशादेव स्वप्नमिथ्यात्वं किन्तु युक्तितोऽपीत्याह । अन्तःस्थानादिति ॥ पूर्व्वोत्तरप्रकरणयोः सम्बन्धसिध्यर्थं पूर्व्वप्रकरणे वृत्तं सङ्क्षिप्यानुवदति । ज्ञात इति । आदिशब्देन यत्र हि द्वैतमिव भवतीत्यादिश्रुतिर्गृह्यते । तर्हि द्वैतमिथ्यात्वस्य प्रागेव सिद्धत्वादुत्तरं प्रकरणमनर्थकमित्याशङ्क्याह । आगमेति । यद्द्वैतमिथ्यात्वं पूर्व्वमुक्तं तदागममात्रं आगमप्राधान्येनानुगतं न युक्तितः सिद्धं । तस्मिन्नागमतोऽवगते युक्तिप्राधान्येनापि तन्मिथ्यात्वमवगन्तव्यमिति प्रकरणान्तरं प्रारब्धमित्यर्थः । प्रमाणानुग्राहकत्वात्तर्कस्यानुग्राह्यप्रमाणस्य प्रधानत्वात्तदधीनविचा-

गौ० अन्तःस्थानात्तु भावानां संवृतत्वेन हेतुना ॥ १ ॥

भा० नात्। अन्तःशरीरस्य मध्ये स्थानं येषां। तत्र हि भावा उपलभ्यन्ते पर्व्वतहस्त्यादयो न वहिः शरीरात्। तस्मात्ते वितथा भवितुमर्हन्ति। ननु अपवरकाद्यन्तरुपलभ्यमानै र्घटादिभिरनैकान्तिको हेतुरित्याशङ्क्याह। संवृतत्वेन हेतुनेति। अन्तः संवृतस्थानादित्यर्थः। न ह्यन्तः संवृते देहान्तर्नाडीषु पर्व्वतहस्त्यादीनां भावोऽस्ति। नहि देहे पर्व्वतोऽस्ति ॥ १ ॥

आ० रामन्तरं तर्काधीनविचारस्य सावकाशत्वाद्युक्तं पौर्व्वापर्य्यं पूर्व्वोत्तरप्रकरणयोरित्युक्तं॥ सम्प्रति श्लोकाक्षराणि योजयति। वितथस्येत्यादिना॥ बाह्या घटादयः। सुखादयस्त्वाध्यात्मिका भावाः॥ शरीरान्तरवस्थानं स्वाप्नानां भावानामित्यत्रानुभवं प्रमाणयति। तत्र हीति॥ तेषामन्तरुपलभ्यमानत्वेऽपि न वैतथ्यं व्यभिचारादित्याशङ्कामनूद्य परिहरति। नन्वित्यादिना॥ हेत्वन्तरशङ्कां वारयति। अन्तरिति॥ यद्यपि देहान्तःसङ्कुचिते देशे स्वाप्ना भावा भवन्ति तथापि कथं तेषां मृषात्वमित्यत आह। न हीति॥ अन्तरित्युक्तं स्फुटयति। संवृत इति॥ तमेव सङ्कुचितं देशविशेषं स्वान्तरं स्फोरयति। देहान्तर्नाडीष्विति॥ उक्तमर्थं कैमुतिकन्यायेन स्फुटयति। न हीति॥ यदा देहेऽपि पर्व्वतादयो न सम्भाव्यन्ते तदा तदन्तर्वर्त्तिनीषु नाडीषु अतिसूक्ष्मासु तेषां सम्भावना नास्तीति किमु वक्तव्यमित्यर्थः। स्वाप्ना भावाः सत्या न भवन्ति। उचितदेशशून्यत्वाद्गगनभुजङ्गादिवदिति भावः॥ १ ॥

गौ॰ अदीर्घत्वाच्च कालस्य गत्वा देशान्न पश्यति ।

भा॰ स्वप्नदृश्यानां भावानामन्तः संवृतस्थानमित्येतदसिद्धं । यस्मात्प्राच्येषु सुप्त उदक्षु स्वप्नान् पश्यन्निव दृश्यते इत्येतदाशङ्क्याह । न देहाद्बहिर्देशान्तरं गत्वा स्वप्नान् पश्यति । यस्मात्सुप्तमात्र एव देहदेशाद्योजनशतान्तरिते मासमात्रप्राप्ये देशे स्वप्नान् पश्यन्निव दृश्यते । नच तद्देशप्राप्तेरागमनस्य च दीर्घः कालोऽस्ति । अतो दीर्घत्वाच्च कालस्य न स्वप्नदृग्देशान्तरं गच्छति । किञ्च प्रतिबुद्धश्च वै सर्व्वः स्वप्नदृक् स्वप्नदर्शनदेशे न विद्यते । यदि च

आ॰ देहाद्बहिरेव देशान्तरं गत्वा स्वाप्नानाम्भावानामुपलम्भात्तेषां देहान्तः संवृते नाडीप्रदेशे दर्शनमसम्प्रतिपन्नमित्याशङ्क्य परिहरति । अदीर्घत्वाच्चेति ॥ वहिः स्वप्नोपलब्धिपक्षे दोषान्तरमाह । प्रतिबुद्धश्चेति ॥ व्यावर्त्त्यामाशङ्कामनुवदति । स्वप्नेति तेषां देहान्तःसङ्कुचिते नाडीदेशे स्थितिदर्शनान्मिथ्यात्वमित्य तदपि असम्प्रतिपन्नमित्यत्र हेतुमाह । यस्मादिति । पश्यन्निवेति स्वप्नदर्शनस्य निरूपणे सत्याभासत्वमिवशब्देन द्योत्यते एतच्छब्देन चोद्यं परामृश्यते । स्वप्नद्रष्टा गत्वा स्वप्नान्न पश्यतीत्यत्र हेतुमाह । यस्मादिति ॥ इवशब्दस्तु पूर्व्ववत् । तथापि कथं वहिः स्वप्नोपलम्भो न भवतीति निर्द्धारितमित्याशङ्क्याह । नचेति ॥ स्वप्नः सत्यो न भवति उचितकालविकलत्वात् सम्प्रतिपन्नवदित्यभिप्रेत्य फलितमाह । अत इति ॥ इतश्च न देहाद्बहिर्देशान्तरे स्वप्नदर्शनमित्याह । किञ्चेति ॥ सर्व्वोऽपि स्वप्नद्रष्टा देशान्तरे स्वप्नान् पश्यन्नकस्मादेव प्रतिबुद्धो न तत्रास्ति किन्तु शयनदेशे वर्त्तते तथापि गत्वा स्वप्नदर्शने कानुपपत्तिरित्याशङ्क्याह । यदि चेति ॥ अन्तरेव स्वप्नदर्शनमिति स्थिते स्वप्नमिथ्यात्वमुचितकालशून्यत्वादित्युक्तं प्रपञ्चयति । रात्राविति ॥ यद्यपि रात्रौ

गौ० प्रतिबुद्धश्च वै सर्वस्तस्मिन् देशे न विद्यते ॥ २ ॥
अभावश्च रथादीनां श्रूयते न्यायपूर्वकं ।

---

भा० स्वप्ने देशान्तरं गच्छेत् यस्मिन् देशे स्वप्नान् पश्येत् तत्रैव प्रतिबुध्येत । नचैतदस्ति । रात्रौ सुप्तोऽहनि इव भावान् पश्यति बहुभिः सङ्गतो यैश्च सङ्गतो भवति तैर्गृह्येत । नच गृह्यते । गृहीतश्चेत् त्वामद्य तत्रोपलब्धवन्तो वयमिति ब्रूयुः । नचैतदस्ति । तस्मान्न देशान्तरं गच्छति स्वप्ने ॥ २ ॥

इतश्च स्वप्नदृश्या भावा वितथाः । यतोऽभावश्चैव रथादीनां स्वप्नदृश्यानां श्रूयते न्यायपूर्व्वकं युक्तितः श्रुतौ न तत्र रथा इत्यत्र तेनान्तःस्थानसंवृतत्वादिहेतुना प्राप्तं वैतथ्यं तदनुवादिन्या श्रुत्या स्वप्ने स्वयं ज्योतिष्ट्वप्र-

---

व्या० निद्रामुपगतस्तथापि भावानहनि पश्यन्निव तिष्ठति सुप्तः संहृतचक्षुरादिकरणोऽपि पश्यति । शयानोऽपि पर्य्यटनं प्रतिपद्यते । यद्यपि सहायविहीनः सुप्तस्तथापि बहुभिः सहायः स्वप्नानुपलभते । तस्मादुचितस्य कालस्य करणस्य सहकारिणश्चाभावेऽपि स्वप्नदर्शनात्तस्मिन्मिथ्यात्वं सिद्धमित्यर्थः । स्वप्नमिथ्यात्वे हेत्वन्तरमाह । यैश्चेति ॥ सहदर्शिभिरगृह्यमाणत्वं स्वप्नदृग्र-सम्मतिपन्नमित्याशङ्क्याह । गृहीतश्चेदिति ॥ पुरुषान्तरसंवाददर्शनात्तद्देशान्तरप्राप्तिद्वारा स्वप्नदर्शनमिति वक्तुमशक्यत्वादन्तरेव स्वप्नदर्शनमित्युचितदेशकालाद्यभावात्तन्मिथ्यात्वं सिद्धमित्युपसंहरति । तस्मान्नेति ॥ २ ॥

स्वप्नदृश्यानां भावानां मिथ्यात्वे हेत्वन्तरमाह । अभावश्चेति ॥ न तत्र रथा न रथयोगा न पन्थानो भवन्तीत्यादिश्रुत्या स्वप्ने स्वयं ज्योतिष्ट्वमात्मनो दर्शयन्त्या तत्र दृश्यानां रथादीनामभावो योग्यदेशाद्यभावद्योतकन्यायपुरःसरं श्रूयते । अतस्तेन न्यायेन

गौ० वैतथ्यं तेन वै प्राप्तं स्वप्न आहुः प्रकाशितं ॥ ३ ॥
अन्तस्थानात्तु भेदानां तस्माज्जागरिते स्मृतं ।

---

भा० तिपादनपरया प्रकाशितमाहुर्ब्रह्मविदः ॥ ३ ॥ जाग्रद्दृश्यानां भावानां वैतथ्यमिति प्रतिज्ञा दृश्यत्वादिति हेतुः स्वप्नदृश्यभाववदिति दृष्टान्तः । यथा तत्र स्वप्ने दृश्यानां

---

आ० प्राप्तमेव स्वप्नदृश्यभावानामस्ति मिथ्यात्वमन्यपरया श्रुत्या प्रकाशितमिति ब्रह्मविदो वदन्ति। तथा च स्वप्ने भावानां मिथ्यात्वं श्रुतियुक्तिभ्यां सिद्धमित्यर्थः ॥ हेत्वन्तरपरत्वं श्लोकस्य दर्शयति । इतश्चेति ॥ इतःशब्दार्थमेव स्फुटयति। यत इति ॥ ज्ञेयाभावे ज्ञानाभावादर्थाज्ज्ञानस्यापि श्रुतमसत्त्वमिति वक्तुं चशब्दः। श्रूयते न तत्रेत्याद्यायां श्रुताविति सम्बन्धः ॥ न्यायपूर्व्वकमिति व्याचष्टे । युक्तित इति ॥ योग्यदेशाद्यभावो युक्तिः ॥ तर्हि न्यायसिद्धेऽर्थे किमन्यपरया श्रुत्या क्रियते तत्राह । तेनेति ॥ अन्तःशरीरमध्यस्थानं नाडीलक्षणं। तत्रातिसूक्ष्मे संवृतत्वेन सङ्कुचितत्वेनावस्थानं पर्व्वतादीनामुपलभ्यते । ततश्चोचितदेशाभावो योग्यकालाभावश्चेत्यादिना प्रागुक्तेन हेतुना प्राप्तं स्वप्नदृश्यानां भावानां वैतथ्यं तदेव तदनुवादिन्या श्रुत्यापि प्रकाशितमित्याहुर्ब्रह्मविदः। जाग्रदवस्थायामादित्यादिप्रकाशानां वागादिज्योतिषां च विद्यमानत्वादामनादिव्यवहारस्य तन्निमित्तत्वसम्भवादात्मचैतन्यनिबन्धनो व्यवहारो न निर्द्धारयितुं शक्यते। स्वप्ने पुनः सूर्य्याद्यभावेऽपि व्यवहारदर्शनात्तस्य च निमित्तापेक्ष्यत्वादात्मचैतन्यस्य तन्निमित्तत्वनिर्णयात्तत्रात्मनः स्वयं ज्योतिष्ट्वं प्रतिपादयितुं न तत्रेत्याद्या श्रुतिः। तया तत्परया न्यायसिद्धं स्वप्नमिथ्यात्वमनुवदन्त्या तदप्रतिपादितमपि प्रकाशितमिष्यते। तथा च श्रुतियुक्तिभ्यां प्रतिपन्नं स्वप्नमिथ्यात्वमिति दृष्टान्तसिद्धिरित्यर्थः ॥ १ ॥ उक्तन्यायेन दृष्टान्ते सिद्धे फलितमनुमानमाह । अन्तःस्थानादिति ॥ भेदानामित्यत्र सूचितमनुमानमारचयति । जाग्रदिति ॥ तृतीयेन पादेन पक्षधर्म्मत्वं व्याप्तस्य हेतोरुच्यते तद्दर्शयति। यथेति ॥ द्वितीयेन पादेन प्रति

गौ॰ यथा तत्र तथा स्वप्ने संवृतत्वेन भिद्यते ॥ ४ ॥
स्वप्नजागरिते स्थाने ह्येकमाहुर्मनीषिणः ।
भेदानां हि समत्वेन प्रसिद्धेनैव हेतुना ॥ ५ ॥

भा॰ भावानां वैतथ्यं तथा जागरितेऽपि दृश्यत्वमविशिष्टमिति हेतूपनयः । तस्माज्जागरितेऽपि वैतथ्यं स्मृतमिति निगमनं । अन्तःस्थानात्संवृतत्वेन स्वप्नदृश्यानां भावानां जाग्रद्दृश्येभ्यो भेदः । दृश्यत्वमसत्यत्वञ्चाविशिष्टमुभयत्र ॥ ४ ॥ प्रसिद्धेनैव भेदानां ग्राह्यग्राहकत्वेन हेतुना समत्वेन स्वप्नजागरितस्थानयोरेकत्वमाह । विवेकिन इति । पूर्व्वप्रमाणसिद्धस्यैव फलं ॥ ५ ॥

आ॰ क्लृप्तप्रमाणाभावसूचकं प्रतिज्ञोपसंहारवचनं निगमनं सूचितमित्याह । तस्मादिति ॥ सर्व्वद्वैतवैतथ्यवादिनां केन विशेषेण पक्षसपक्षविभागसिद्धिरित्याशङ्क्यान्तःस्थानात्तु संवृतत्वेन भिद्यत इत्यत्र विवक्षितमर्थमाह । अन्तःस्थानादिति ॥ स्वप्नदृश्यानामन्तःस्थानं संवृतत्वञ्च न तथा जाग्रद्दृश्यानां तेनोचितदेशाद्यभावात्तेषां तेभ्यो वैषम्यं स्फुटं । सिद्धं हि योग्यदेशाद्यभावेन स्वप्नस्य मिथ्यात्वमिति सपक्षत्वं । जागरितस्य पुनरुचितदेशादिसद्भावादस्फुटमिथ्यात्वमिति पक्षत्वमित्यर्थः । तर्हि सर्व्वथा वैधर्म्याद्दृष्टान्तदार्ष्टान्तिकभावासिद्धिरित्याशङ्क्याह । दृश्यत्वमिति ॥४॥ स्वप्नवज्जागरितस्य मिथ्यात्वे स्वप्ननिद्रायुतावित्यादौ जागरिते स्वप्नशब्दप्रयोगो युक्तो भवतीत्याह । स्वप्नेति ॥ उभयत्रैकत्वं विद्वदभिमतमित्यत्र हेतुमाह । भेदानामिति ॥ भेदा भिद्यमाना भावास्तेषामवस्थाद्वयवर्त्तिनां ग्राह्यत्वं ग्राहकत्वमविशिष्टं । तेन दृश्यत्वेन हेतुना प्रसिद्धमेव तेषां मिथ्यात्वेन समत्वं तेन स्थानयोरेकरूपत्वं विवेकिनामभिप्रेतमिति यत्पूर्व्वमनुमानाख्यं प्रमाणं सिद्धं तस्यैव फलं साधनस्थानद्वयाविशेषरूपमनेन श्लोकेनोक्तमिति श्लोकयोजनया दर्शयति । प्रसिद्धेनैवेति ॥ ५ ॥

गा॰ आदावन्ते च यन्नास्ति वर्त्तमानेऽपि तत्तथा ।
वितथैः सदृशाः सन्तोऽवितथा इव लक्षिताः ॥ ६ ॥

भा॰ इतश्च वैतथ्यं जाग्रद्दृश्यानां भेदानामाद्यन्तयोरभावात् यदादावन्ते च नास्ति वस्तु मृगतृष्णिकादि तन्मध्येऽपि नास्तीति निश्चितं लोके । तथेमे जाग्रद्दृश्या भेदाः । आद्यन्तयोरभावाद्वितथैरेव मृगतृष्णिकादिभिः सदृशत्वाद्वितथा एव तथाऽप्यवितथा इव लक्षिता मूढैरनात्मविद्भिः ॥ ६ ॥ स्वप्नदृश्यवज्जागरितं दृश्यानामप्यसत्त्वमिति यदुक्तं तदयुक्तं । यस्माज्जाग्रद्दृश्या अन्नपानवाहनादयः क्षुत्पिपासादिनिवृत्तिं कुर्व्वन्तः । गमनागमनादिकार्य्यञ्च सप्रयोजना दृष्टाः न तु स्वप्नदृश्यानां तदस्ति तस्मात्स्वप्नदृश्यवज्जाग्रद्दृश्यानामसत्त्वं मनोरथमात्रमिति । तत्र

आ॰ जाग्रद्दृश्यानां भावानां मिथ्यात्वमित्यत्रानुमानान्तरमाह । आदाविति ॥ यदि जाग्रद्दृश्या भावा मिथ्यात्वेन प्रसिद्धस्वप्नादिभिः समत्वान्मिथ्या कथं तर्हि तेषां घटः सन् पटः सन्नित्यसत्यत्वेन प्रतीतिरित्याशङ्क्याह । वितथैरिति ॥ प्रकृते जाग्रन्मिथ्यात्वे हेत्वन्तरपरत्वं श्लोकस्योपन्यस्यति । इतश्चेति ॥ विमतं मिथ्या आदिमत्त्वादन्तवत्त्वात् स्वप्नादिवदित्यर्थः ॥ उक्तानुमानजडिम्ने व्याप्तिं कथयति । यदादाविति ॥ यदादिमदन्तवच्च तन्मिथ्या यथा मृगतृष्णिकादीत्यर्थः । व्याप्तिमतः साधनस्य पक्षधर्म्मतोपन्यासेन प्रतिज्ञोपसंहारवचनं निगमनं दर्शयति । तथेति ॥ अनुमानस्य घटादिषु सत्त्वसाधकप्रत्यक्षविरोधमाशङ्क्य सद्गन्धर्व्वनगरमिति वत्तस्यापातिकसत्त्वविषयत्वान्नैवमित्याह । तथापीति ॥ ६ ॥ स्वप्नस्य मिथ्यात्वमाद्यन्तवत्त्वान्न भवति किन्तु फलपर्य्यन्तत्वाभावाज्जागरितस्य फलपर्य्यन्तत्वान्न मिथ्यात्वमित्याशङ्क्याह । सप्रयोजन-

गौ॰ सप्रयोजनता तेषां स्वप्ने विप्रतिपद्यते । तस्मा-
दाद्यन्तवत्त्वेन मिथ्यैव खलु ते स्मृताः ॥ ७ ॥

---

भा॰ कस्माद्यस्मात्सप्रयोजनता दृष्टा या अन्नपानादीनां सा
स्वप्ने विप्रतिपद्यते । जागरिते हि भुक्त्वा पीत्वा चाढ्प्तो
विनिवर्त्तिततृट् सुप्तमात्र एव क्षुत्पिपासाद्यार्त्तमहोरात्रो-
षितमभुक्तवन्तमात्मानं मन्यते । यथा स्वप्ने भुक्त्वा पीत्वा
चाढ्प्तोऽत्थितस्तथा । तस्माज्जाग्रद्दृश्यानां स्वप्नेऽपि विप्रति-
पत्तिर्दृष्टा । अतो मन्यामहे तेषामप्यसत्त्वं स्वप्नदृश्यवदना-
शङ्कनीयमिति । तस्मादाद्यन्तवत्त्वमुभयत्र समानमिति
मिथ्यैव खलु ते स्मृताः ॥ ७ ॥

---

व्या॰ नेति ॥ फलपर्य्यन्ततारास्हित्योपाधेः साधनव्यापकत्वे फलित
माह । तस्मादिति ॥ जाग्रद्दृश्याभावा बहुशया गृह्यन्ते । श्लोकस्य
व्यावर्त्यामुपाध्याशङ्कामुत्थापयति । स्वप्नेति ॥ जाग्रद्दृश्यानामिव
स्वप्नदृश्यानामपि तुल्यं सप्रयोजनत्वमित्युपाधेरसम्भवत्वमित्याश
ङ्क्याह । नन्विति ॥ अनुमानस्य सोपाधिकत्वेनासाधकत्वे फलि
तमाह । तस्मादिति ॥ हेतोः सोपाधिकत्वं दूषयति । सप्रेति ॥
साधनव्याप्त्यादिदोषादृते नोपाधिनिरसनं सुशकमित्याशङ्क्याह ।
कस्मादिति ॥ फलपर्य्यन्ततावियहिसोपाधेः साधनव्याप्तिमाह ।
यस्मादित्यादिना ॥ तामेव विप्रतिपत्तिं प्रकटयति । जागरिते
हीति ॥ उक्तमर्थं दृष्टान्तेन स्फुटयति । यथेत्यादिना ॥ उपाधेः
साधनव्याप्तिं निगमयति । तस्मादिति ॥ हेतोः सोपाधिकत्वा-
भावे फलितमाह । अत इति ॥ हेतुद्वयमुपसंहरति । तस्मा
दिति ॥ ७ ॥

गौ॰ अपूर्वं स्थानिधर्म्मो हि यथास्वर्गनिवासिनां ।

---

भा॰ स्वप्नजाग्रद्भेदयोः समत्वाज्जाग्रद्भेदानामसत्त्वमिति यदुक्तं तदसत्। कस्मात्। दृष्टान्तस्यासिद्धत्वात्। कथं नहि जाग्रद्दृष्टा एवैते भेदाः स्वप्ने दृश्यन्ते किन्तर्हि अपूर्व्वं स्वप्ने पश्यति चतुर्दन्तगजमारूढमष्टभुजमात्मानं मन्यते। अन्यदप्येवंप्रकारमपूर्व्वं पश्यति स्वप्ने। तन्नान्येना सतासममिति सदेवतो दृष्टान्तोऽसिद्धस्तस्मात्स्वप्नवज्जागरितस्यासत्त्वमित्ययुक्तं। तत्र स्वप्ने दृष्टमपूर्व्वं यन्मन्यसे न तत्तु स्वतःसिद्धं। किन्तर्हि अपूर्व्वं स्थानिधर्म्मो हि स्थानिनो द्रष्टुरेव हि स्वप्नस्थानवतो धर्म्मः। यथा स्वर्गनिवासिनामिन्द्रादीनां सहस्राक्षत्वादि तथा स्वप्नदृशोऽपूर्व्वोऽयं धर्म्मः। न स्वतः सिद्धो द्रष्टुः स्वरूपवत्। तानेवं प्रकाशनपूर्व्वान् स्वचित्त-

---

आ॰ दृष्टान्तस्य साध्यविकलत्वं शङ्कित्वा परिहरति। अपूर्व्वमिति। यथा स्वर्गनिवसनशीलानामिन्द्रादीनां सहस्राक्षत्वादिधर्म्मस्तथा यदिदमपूर्व्वंस्वप्नदर्शनं मन्यसे तदपि स्थानिनः स्वप्नस्थानवतो द्रष्टुरेव धर्म्मः। तेन दृष्टत्वात्तस्य मिथ्यात्वसिद्धिरित्यर्थः। कथं तन्नैव दृष्टत्वं तत्राह। तानयमिति॥ यथैवेह व्यवहारभूमौ सुशिक्षितो देशान्तरप्राप्तिमार्गस्तेन मार्गेण देशान्तरं गत्वा तत्रत्यान् पदार्थान् वीक्षते तथाऽयं स्वप्नगतान् पदार्थान् यथोक्तप्रकारान् प्रतिपद्यते। ततश्च स्वप्नस्य स्थानिधर्म्मत्वाद्रज्जुसर्पादिवन्मिथ्यात्वमित्यर्थः॥ श्लोकव्यावर्त्यामाशङ्कामुपन्यस्यति। स्वप्नेति॥ समत्वमाद्यन्तवत्त्वादि। अनुमानसिद्धस्यार्थस्यानुमानदोषोक्तिमन्तरेणासत्त्वमयुक्तमिति पृच्छति। कस्मादिति॥ व्याप्तिभूमिं दूषयन् व्याप्तिभङ्गं दोषमाह। दृष्टान्तस्येति॥ असिद्धत्वं प्रश्नपूर्व्वकं विशदयति। कथमित्यादिना॥ अपूर्व्वं दर्शनमेव विवृणोति। चतुर्दन्तमिति।

गौ०तानयं प्रेक्षते गत्वा यथैवेह सुशिक्षितः ॥ ८ ॥
स्वप्नवृत्तावपि त्वन्तश्चेतसा कल्पितन्त्वसत् ।
बहिश्चेतोगृहीतं सद्दृष्टं वैतथ्यमेतयोः ॥ ९ ॥

---

भा० विकल्पानयं स्थानी स्वप्नदृक् स्वप्नस्थानं गत्वा प्रेक्षते। यथैवेह लोके सुशिक्षितो देशान्तरमार्गस्तेन मार्गेण देशान्तरं गत्वा तान् पदार्थान् पश्यति तद्वत्। तस्माद्यथा स्थानिधर्म्माणां रज्जुसर्पमृगतृष्णिकादीनामसत्त्वं तथा स्वप्नदृश्यानामपूर्व्वाणां स्थानिधर्म्मत्वमेवेत्यसत्त्वं अतो न स्वप्नदृष्टान्तस्यासिद्धत्वं॥ ८ ॥ अपूर्व्वत्वाशङ्कां निराकृत्य स्वप्नदृष्टान्तस्य पुनः स्वप्नतुल्यतां जाग्रद्भेदानां प्रपञ्चयन्नाह। स्वप्नवृत्तावपि स्वप्नस्थानेऽप्यन्तश्चेतसा मनोरथसङ्कल्पितम-

---

आ० अन्यदपि त्रिनेत्रत्वादिदृष्टान्तस्य साध्यविकलत्वे सिद्धे प्रागुक्तानुमानानुपपत्तिरिति फलितमाह। तस्मादिति॥ दृष्टान्तासिद्धिं दूषयन्ननुमानं साधयति। तन्नेति॥ तत्किं स्वभावतः सिद्धं परतो वा। नाद्यः। जडस्य तदयोगादित्याह। न तदिति॥ द्वितीये तन्मिथ्यात्वमित्यभिप्रेत्य प्रश्नपूर्व्वकमाद्यपादमवतारयति। किन्तर्हीति॥ तद्गतान्यक्षराणि व्याकरोति। स्थानिन इति॥ अपूर्व्वं स्वप्नदर्शनस्य स्थानिधर्म्मत्वं दृष्टान्तेन साधयति। यथेत्यादिना॥ अपूर्व्वदर्शनं स्वप्नद्रष्टृधर्म्मोऽपि चैतन्यवत् किं न स्यादित्याशङ्क्य बाधोपलब्धेर्म्मैवमित्याह। न स्वत इति॥ उत्तरार्द्धं विभजते। तानित्यादिना॥ अपूर्व्वाणां स्वप्नदृश्यानां स्थानिधर्म्मत्वेऽपि किमायातमित्याशङ्क्याह। तस्मादिति॥ स्वप्नदृष्टान्तस्य साध्यविकलत्वाभावं निगमयति। अतो नेति॥ अपूर्व्वस्यानपूर्व्वस्य वा स्वप्नद्रष्टृधर्म्मत्वेन तदविद्याविलसितत्वाद्दृष्टान्ते साध्यसम्प्रतिपत्तेस्तथैव जाग्रद्भेदानां मिथ्यात्वं युक्तमित्यर्थः॥ ८॥ जाग्रद्दृश्यानां मिथ्यात्वं तेषु सदसद्विभागप्रतिभानविरुद्धमित्याशङ्क्य दृष्टान्तेन

गा॰ जाग्रद्वृत्तावपि त्वन्तश्चेतसा कल्पितन्त्वसत् ।
वहिश्चेतो गृहीतं सद्युक्तं वैतथ्यमेतयोः ॥ १० ॥

---

भा॰ सत् । सङ्कल्पानन्तरसमकालमेवादर्शनात्तत्रैव स्वप्ने वहिश्चेतसा गृहीतं चक्षुरादिद्वारेणोपलब्धं घटादि सदित्येवमसत्यमिति निश्चितेऽपि सदसद्विभागो दृष्टः । उभयोरप्यन्तर्वहिश्चेतः कल्पितयोर्वैतथ्यमेव दृष्टं ॥ ९ ॥

सदसतोर्वैतथ्यं युक्तं । अन्तर्वहिश्चेतःकल्पितत्वाविशेषादिति व्याख्यातमन्यत् ॥ १० ॥ चोदकस्वाह । स्वप्नजाग्रत्स्थानयोर्भेदानां यदि वैतथ्यं क एतानन्तर्वहिश्चेतःकल्पितान् बुध्यते । को वै तेषां विकल्पकः । स्मृतिज्ञानयोः क आलम्ब

---

आ॰ समाधत्ते । स्वप्नवृत्ताविति ॥ श्लोकस्य तात्पर्य्यार्थमाह । अपूर्व्वत्वेति ॥ स्वप्नदृष्टान्तस्यापूर्व्वदर्शनत्वप्रयुक्तां साध्यविकलत्वशङ्कां परिहृत्येति यावत् । स्वप्नस्थाने सर्व्वस्य मिथ्यात्वाविशेषेऽपीत्यर्थः । असत्त्वं परमार्थतद्विलक्षणत्वेन मिथ्यात्वं । तत्रापि तर्हि विभागप्रतिभासविरोधात्कुतो मिथ्यात्वमित्याशङ्क्य बाधाविशेषादित्याह । उभयोरिति ॥ ९ ॥

दार्ष्टान्तिकमाह । जाग्रदिति ॥ युक्तत्वे हेतुमाह । अन्तरिति ॥ श्लोकस्यानामक्षराणां व्याख्यानमनपेक्षितं व्याख्यातप्रायत्वादित्याह । व्याख्यातमिति ॥ १० ॥ सर्व्वमिथ्यात्वे प्रमातृप्रमाणादिव्यवहारानुपपत्त्या विरोधमाशङ्कते । उभयोरिति ॥ कर्त्तृकरणव्यवस्थानुपपत्त्या विरोधोऽस्तीत्याह । को वा इति ॥ विकल्पको निर्म्मातेति यावत् । श्लोकस्य चोद्यपरत्वं प्रतिजानीते । चोदक इति ॥ अक्षरयोजनया प्रथमार्थापत्तिविरोधं स्फोरयति । स्वप्नेति ॥ चतुर्थपादमवतार्य्यार्थापत्त्यन्तरविरोधं स्फुटयति । को वै तेषामिति ॥ कर्त्ता हि पूर्व्वानुभूतं स्मृत्वा तज्जातीयान् निर्म्मिमीते

गौ० उभयोरपि वैतथ्यं भेदानां स्थानयोर्यदि ।
क एतान् बुध्यते भेदान् को वै तेषां विकल्पकः
॥ ११ ॥ कल्पयत्यात्मनात्मानमात्मदेवः स्वमा-

---

भा० इत्यभिप्रायः । न चेन्निरात्मवाद इष्टः ॥ ११ ॥ स्वयं स्वमायया स्वमात्मानमात्मा देव आत्मन्येव वक्ष्यमाणं भेदाकारं कल्पयति रज्ज्वादाविव सर्पादीन् । स्वयमेव च तान् बुध्यते भेदान् तद्वदेवेत्येवं वेदान्तनिश्चयः । नाऽन्यो-

---

व्या० ऽनुस्मृत्यनुभवाश्रयाद्वेपेण कर्त्राद्येपो विवक्षितस्तथा च कर्त्रा-दिव्यवहारानुपपत्तिः सर्व्वमिथ्यात्वे दुर्व्वारेत्यर्थः ॥ योऽध्यात्मं प्रमाता यश्चाधिदैवं कर्त्तेश्वरस्तावुभावपि मिथ्येत्यङ्गीकारात्प्रमा-त्रादेरसत्त्वमित्याशङ्क्याह । न चेदिति ॥ यदि प्रमाता कर्त्ता वा नेष्यते तर्हि नैरात्म्यमिष्टमेवापद्यते । न च तदिष्टुं शक्यते आत्मनि करणस्य दुष्करत्वान्निराकर्त्तुरेवात्मत्वादित्यर्थः ॥११॥ कर्त्तृकार्य्या-दिव्यवस्थानुपपत्तिं परिहरति । कल्पयतीति ॥ करणान्तरं व्यव-च्छिनत्ति । आत्मनेति ॥ कर्म्मान्तरं व्यावर्त्तयति । आत्मानमिति ॥ कर्त्तृन्तरं निवारयति । आत्मेति ॥ तस्य द्योतकान्तरापेक्षां प्रतिक्षि-पति । देव इति ॥ विवर्त्तवादं द्योतयति । स्वमाययेति ॥ सर्व्वस्य मिथ्यात्वेऽपि मायया विकल्पितभेदानुरोधेन कर्त्तत्वादिव्यवहारस्य सिद्ध्यतीति भावः । प्रमातृप्रमाणादिव्यवहारानुपपत्तिं प्रत्याह । स एवेति ॥ एकस्मिन्नेवाद्वितीये प्रतीचि वस्तुनि काल्पनिक-भेदनिबन्धना सर्व्वा व्यवस्थेत्यत्र प्रमाणमाह । इति वेदान्तेति ॥ यथा घटस्रष्टा कुलालोऽधिष्ठाता मृदोऽन्यो दृष्टो न तथे-हान्योऽधिष्ठातास्तीत्याह । स्वयमिति ॥ यथा तत्र मृदाख्य-मुपादानमधिष्ठातुरन्यदधिगतं न तथात्रान्यदुपादानमस्तीत्याह । स्वमात्मानमिति ॥ तत्र च घटं कुर्व्वतो भूभागो भवत्याधारस्तथे-हाधारोऽन्योऽस्तीत्याह । आत्मन्येवेति ॥ परिणामवादं व्यावर्त्य विवर्त्तवादं प्रकटयितुं स्वमाययेत्युक्तं तत्र दृष्टान्तमाह । रज्ज्वा-

गो०यया । स एव बुध्यते भेदानिति वेदान्तनि-
श्चयः ॥ १२ ॥

विकरोत्यपरान् भावानन्तश्चित्ते व्यवस्थि-

---

भा०ऽस्ति ज्ञानस्मृत्याश्रयः । नच निरास्पदे एव ज्ञानस्मृती वैनाशिकानामिवेत्यभिप्रायः ॥ १२ ॥

सङ्कल्पयन् केन प्रकारेण कल्पयतीत्युच्यते । विकरोति नाना करोत्यपरान् लौकिकान् भावान् पदार्थान् शब्दादीनन्यांश्चान्तश्चित्ते वासनारूपेण व्यवस्थितानव्याकृतानि-

---

आ० दाविति ॥ मायाद्वारेण चिदात्मनो जगन्निर्मातृत्वमुक्त्वा तस्यैव बुद्धिप्रतिबिम्बितस्य प्रमातृत्वमित्याह । स्वयमेव चेति ॥ न च प्रमातृत्वस्य तात्त्विकं रज्ज्वादौ सर्पादिदर्शनवदेव मिथ्यात्वनिर्धारणादित्याह । तद्ददिति ॥ कर्त्रादिभेदस्य प्रमात्रादिभेदस्य च मिथ्यात्वे नेह नानाऽस्तीत्यादिश्रुतिं प्रमाणयति । इत्येवमिति ॥ स एवेत्येवकारार्थमाह । नान्योऽस्तीति ॥ यो जगत्स्रष्टा यश्च प्रमाता ततोऽन्यज्ज्ञानस्य स्मृतेश्चाश्रयो नास्ति । चेतनभेदेमानस्याभावादनुभवस्मृत्योश्चैकाश्रयत्वस्य प्रसिद्धत्वादित्यर्थः । ज्ञानस्मृत्योराश्रयापेक्षा विषयापेक्षा वा नास्तीत्याशङ्क्याबाधितप्रसिद्धिविरोधान्मैवमित्याह । न चेति ॥ १२ ॥

प्रकृतायां कल्पनायां विवक्षितं क्रममुपन्यस्यति । विकरोतीति ॥ नियतांश्चेति चकारादनियतांश्चेति विवक्ष्यते । प्रतिपिपादयिषितं क्रमप्रतिपत्त्यर्थं पृच्छति । कः सङ्कल्पयन्निति ॥ श्लोकाक्षरयोजनया बुभुत्सितं क्रमं प्रत्याययति । उच्यत इत्यादिना ॥ अन्यांश्चेति शास्त्रीयानिति यावत् । चित्तमध्ये वासनारूपेण व्यवस्थितानभिव्यक्तनामरूपत्वेन व्यवहारयोग्यत्वमाह । अव्याकृतानिति ॥ स कल्पनाकालान् विद्युदादीन् स्थिरानित्यर्थः । बहिश्चित्तो बहिर्मुखान् बाह्यान् व्यवहारयोग्यान् पदार्थान् कल्प-

गौ० तान् । नियतांश्च बहिश्चित्त एवं कल्पयते प्रभुः ॥ १३ ॥ चित्तकाला हि येऽन्तस्तु द्वयकालाश्च ये

---

भा० यतांश्च पृथ्व्यादीन् अनियतांश्च कल्पनाकालान् बहिश्चित्तः सन् । तथाऽन्तश्चित्तो मनोरथादिलक्षणानित्येवं कल्पयति । प्रभुरीश्वर आत्मेत्यर्थः ॥ १३ ॥ स्वप्नवच्चित्तपरिकल्पितं सर्व्वमित्येतदाशङ्क्यते । यस्माच्चित्तपरिकल्पितैर्मनोरथादिलक्षणैश्चित्तपरिच्छेद्यैर्वैलक्षण्यं बाह्यानामन्योऽन्यपरिच्छेद्यत्वमिति सा न युक्ताऽऽशङ्का । चित्त-

---

व्या० यति । अन्तश्चित्तस्तु तेभ्यो व्यावर्त्तबुद्धिर्मनोरथादिलक्षणानात्मव्यवस्थितान् भावान् व्यवहारयोग्यान् कल्पयित्वा पुनर्व्यवहारयोग्यतायै कल्पयतीत्यर्थः । एतदुक्तं भवति । यथा लोके कुलालो वा तन्तुवायो वा घटं पटं वा कार्य्यं चिकीर्षुरादौ व्यवहारयोग्यां व्यक्तिं बुद्ध्या वाऽऽविर्भाव्य पश्चात्तामेव बहिर्नामरूपाभ्यां सम्पादयति । तथैवायमादिकर्त्तापि मायाक्षणो स्वचित्ते नामरूपाभ्यामव्यक्तरूपेण स्थितान् प्रत्यक्षपदार्थान् प्रथमं सिसृक्षिताकारेणान्तर्विभाव्य पश्चाद्बहिः सर्व्वप्रतिपत्तिसाधारणरूपेण सम्पादयतीति कल्पनायां क्रमाधिगतिरिति ॥१३॥ कल्पितानां कल्पनाकालादन्यस्मिन् काले सत्त्वाभावाज्जाग्रद्भावानाञ्च कल्पनाकालात्कालान्तरेऽपि प्रत्यभिज्ञया सत्त्वावगमादनुपपन्नं तेषां मिथ्यात्वमित्याशङ्क्याह । चित्तेति ॥ ये कल्पना कालभाविनो भावा मनस्यन्तर्वर्त्तन्ते । ये च प्रत्यभिज्ञायमानत्वेन पूर्व्वापरकालभाविनो बहिरेव व्यवहारयोग्या दृश्यन्ते ते सर्व्वे कल्पिताः सन्तो मिथ्यैव भवितुमर्हन्ति । प्रत्यभिज्ञायमानत्वलक्षणो विशेषवन्तुना कल्पितत्वप्रयुक्तः कल्पितेऽपि तद्दर्शनादित्यर्थः । श्लोकव्याख्यामाशङ्कां दर्शयति । स्वप्नवदिति ॥ यथा स्वप्ने दृश्यमानं सर्व्वं कल्पितं मिथ्यैवेष्यते । तथा जागरितेऽपि दृष्टं सर्व्वं चित्तस्पन्दितं तेन

गौ०बहिः । कल्पिता एव ते सर्वे विशेषो नान्यहेतुकः ॥ १४ ॥

---

भा० काला हि येऽन्तस्तु चित्तपरिच्छेद्याःनान्यश्चित्तकालव्यतिरेकेण परिच्छेदकः कालो येषां ते चित्तकालाः। कल्पनाकाल एवोपलभ्यन्त इत्यर्थः। द्वयकालाश्च भेदकाला अन्योन्यपरिच्छेद्याः। यथा गोदोहनमास्ते यावदास्ते तावद्गां दोग्धि यावद्गां दोग्धि तावदास्ते। तावानयमेतावान् स इति परस्परपरिच्छेदकत्वं बाह्यानां भेदानां ते द्वयकाला अन्तश्चित्तकाला बाह्याश्च द्वयकालाः क-

---

आ० कल्पितं मिथ्यैवेत्येतन्नाद्यापि निर्द्धारितमित्यत्र हेतुमाह। यस्मादिति॥ आत्माविद्याविवर्त्तेन चित्तेन तावदन्तर्विनिर्म्मिता मनोरथरूपा मनस्यन्तर्वर्त्तमाना वर्णा रज्जुसर्पादयश्च ते चित्तेनैव परिच्छिद्यन्ते। ते हि कल्पनाकालमात्रभाविनो न प्रमीयन्ते। तैः सह वैलक्षण्यं मनसो बहिर्जाग्रद्दृश्यमानानां भावानामन्योऽन्यपरिच्छेद्यत्वं कालद्वयावच्छिन्नत्वेन प्रत्यभिज्ञानगोचरत्वमिति यस्मादुपलभ्यते तस्मादयुक्तं जागरितस्य स्वप्नवन्मिथ्यात्वमित्यर्थः॥ श्लोकाक्षरैरुत्तरमाह। सानेति॥ येन मनस्यन्तर्मनोरथरूपाभावास्ते चित्तकाला भवन्तीत्यचित्तकालत्वे विशदयति। चित्तेत्यादिना॥ वाच्यार्थमुक्त्वा विवक्षितार्थमाह। कल्पनेति॥ द्वितीयपादमवतार्य्य व्याकरोति। द्वयेति॥ ये मनसो बहिरुपलभ्यन्ते भेदकालाः कालस्य भेदो भेदकालः स येषां ते तथेति व्युत्पत्तिः। ततश्चान्येन पूर्व्वेणान्येन चापरेण परिच्छेद्याभिन्नकालावच्छिन्नत्वेन प्रत्यभिज्ञायमाना इत्यर्थः॥ प्रत्यभिज्ञायमानत्वमुदाहरणनिष्ठतया स्फुटयति। यथेति॥ आगोदोहनं गोदोहनपर्य्यन्तमास्ते देवदत्तस्तिष्ठतीति प्रत्यभिज्ञाप्रमेयत्वेनाभिज्ञोदाहरणीया यावता कालेनावच्छिन्नो वर्त्तते तावता कालेनावच्छिन्नो गोदोहनं

गौ॰ अव्यक्ता एव येऽन्तस्तु स्फुटा एव च ये बहिः ।

---

भा॰ कल्पिता एव ते सर्व्वे न बाह्यो कालद्वयत्वविशेषः कल्पितत्वव्यतिरेकेणान्यहेतुकः । अत्रापि हि स्वप्नदृष्टान्तो भवत्येव ॥ १४ ॥

यद्यप्यन्तरव्यक्तत्वं भावानां मनोवासनामात्राभिव्यक्तानां स्फुटत्वं वा बहिश्चक्षुरादीन्द्रियान्तरे विशेषः ।

---

भा॰ निर्वर्त्तयतीत्यनेककालावस्थायित्वेन प्रत्यभिज्ञाविषयत्वं तस्य दर्शयति । यावदिति ॥ यावता कालेनायं घटोऽर्थक्रियां निर्वर्त्तयितुं शक्नोति तावता कालेनावच्छिन्नःसन्नेव तिष्ठतीत्युदाहरणान्तरमाह । तावानिति ॥ परोक्षतया स्थितो यावता कालेनावच्छिन्नः स्वकार्थ्यं निर्वर्त्यं निर्वर्त्तयत्येतावता कालेनावच्छिन्नः संतिष्ठतीत्यपरमुदाहरणमाह । एतावानिति ॥ उक्तेन न्यायेन परेणापरेण च कालेन परिच्छेद्यत्वं जाग्रद्दृश्यानां भावानामुपलभ्यते कालद्वयस्य च परिच्छेदकत्वं । तथा ते सर्व्वे भावा बहिर्दृश्यमानाद्वयकालेन कालद्वयेन परिच्छेद्या भवन्तीत्यर्थः । तृतीयपादं व्याचष्टे । अन्तरिति ॥ चतुर्थपादार्थमाह । अनेनेत्यादिना ॥ बाह्यो जाग्रद्दृश्येषु बाह्यपदार्थेषु व्यवस्थितोऽकालद्वयत्वेन कालद्वयावच्छेदेन कृतः प्रत्यभिज्ञायमानत्वरूपो विशेषो ऽन्यहेतुको न भवति ॥ कल्पितेऽपि तथाविधविशेषसम्भवादित्यत्र दृष्टान्तमाह । अत्रापि हीति ॥ यद्यपि सर्व्वं जाग्रद्भेदजातं कल्पितं तथापि तत्र यथोक्तो विशेषः स्फुटः सिध्यति । स्वप्ने सर्व्वस्य भेदजातस्य कल्पितत्वेऽपि प्रत्यभिज्ञायमानत्वाज्जागरितेऽपि तदुपपत्तेरित्यर्थः ॥ १४ ॥

स्वप्नजागरितयोरुभयोरपि मिथ्यात्वे स्फुटास्फुटावभासविभागानुपपन्नेनाविशेषेण मिथ्यात्वमित्याशङ्क्याह । अव्यक्ता इति ॥ ये मनस्यन्तर्भावनारूपत्वादस्फुटा ये च मनसा बहिरुपलभ्यमानाः स्फुटा भवन्ति ते सर्व्वे मनःस्पन्दनमात्रत्वेन कल्पिता मिथ्यैवान्त-

गौ॰ कल्पिता एव ते सर्वे विशेषस्त्विन्द्रियान्तरे ॥ १५ ॥
जीवं कल्पयते पूर्वं ततो भावान् पृथग्विधान् ।

---

भा॰ नासौ भेदानामस्तित्वकृतः स्वप्नेऽपि तथा दर्शनात् । किन्तर्ह्यन्द्रियान्तरकृत एवान्तः कल्पिता एव । जाग्रद्भावा अपि स्वप्नभाववदिति सिद्धं ॥ १५ ॥ बाह्याध्यात्मि-

---

आ॰ वहिरिन्द्रियभेदनिमित्तः स्फुटत्वात् स्फुटत्वविशेषो न मिथ्यात्वममिथ्यात्वं वा तत्रोपयुज्यते । मिथ्याभूतेष्वपि तद्दर्शनादित्यर्थः ॥ श्लोकस्याक्षराणि व्याकरोति । यद्यपीत्यादिना ॥ मनस्यन्तर्मनोरथरूपाणां भावानामव्यक्तत्वमस्फुटत्वं तत्र हेतुमाह । मन इति ॥ चक्षुरादिग्राह्यत्वेन मनसो वहिर्भावाना स्फुटत्वं दृष्टं तदेषाममिथ्यात्वकृतमिति शङ्कां वारयति । नासाविति ॥ सर्व्वसम्मतिपन्नमिथ्यात्वेऽपि स्वप्ने स्फुटत्वविशेषप्रतिभानान्नासौ विशेषो मिथ्यात्वममिथ्यात्वे वा प्रयोजयितुं प्रभवतीत्याह । स्वप्नेऽपीति ॥ अयं विशेषस्तर्हि केन सिद्ध्यतीत्याशङ्क्य चतुर्थपादार्थमाह । किं तर्हीति ॥ मनोमात्रसम्बन्धादन्तर्भावानां वासनामात्ररूपाणामस्फुटत्वं । बहिर्भावानान्तु चक्षुरादिवहिरिन्द्रियसम्बन्धात् युक्तं स्फुटत्वं तदेष विशेषो मिथ्यात्वाविशेषेऽपि सिध्यतीत्यर्थः । स्फुटत्वास्फुटत्वप्रतिभासभेदस्य मिथ्यात्वेऽपि सम्भवात्प्रागुक्तमनुमानमविरुद्धमित्युपसंहरति । अन्त इति ॥ १५ ॥ भवतु सर्व्वस्य कल्पितत्वं । सा पुनः सर्व्वकल्पना केन द्वारेणेत्याशङ्क्याह । जीवमिति ॥ आत्मा हि सर्व्वं स्वमायावशेन कल्पयन्नादौ विशिष्टरूपेण जीवं कल्पयति । तत इति ॥ तत्सृष्ट्वा तदेवानुप्राविशदिति श्रुतेः स्वयमेव जीवमापद्यते । तद्द्वारेण पुनर्नानाविधान् भावान् निर्म्मिमीते । ज्ञानस्मृतिवैषम्यात्तत्कल्पेषु भावेषु वैषम्योपपत्तिरित्यर्थः । श्लोकव्यावर्त्त्यं प्रश्नमुत्थापयति । बाह्येति ॥ पदार्थाः साध्यसाधनतया स्थिता बाह्याः सुखदुःखं ज्ञानं रागस्त्वेवमादयस्त्वाध्यात्मिकास्तेषां परस्परं निमित्तनैमित्तिकताऽस्ति । बाह्यान्निमित्तीकृत्याध्यात्मिका

गौ॰ वाह्यानाध्मात्मिकांश्चैव यथाविद्यस्तथास्मृतिः॥१६

भा॰ कानां भावानामितरेतरनिमित्तनैमित्तिकतया कल्पनायाः किं मूलमिति। उच्यते। जीवं हेतुफलात्मकमहं करोमि मम सुखदुःखे इत्येवं लक्षणं। अनेनैवंलक्षण एव शुद्धे आत्मनि रज्ज्वामिव सर्पं कल्पयते पूर्व्वं। ततस्तादर्थ्येन क्रियाकारकफलभेदेन प्राणादीन्नानाविधान् भावान् वाह्यानाध्यात्मिकांश्चैव कल्पयते। तत्र कल्पनायां को हेतुरित्युच्यते। योऽसौ स्वयं कल्पितो जीवः सर्व्वकल्पनायामधिकृतः स यथाविद्यो यादृशी विद्या विज्ञानमस्येति यथाविद्यस्तथाविधैव स्मृतिस्तस्येति तथास्मृतिर्भवति स इति।

या॰ भवन्ति। तानपि निमित्तीकृत्येतरे जायन्ते। तदेवमितरेतरनिमित्ततया नैमित्तिकतया च कल्पनायां मूलं वक्तव्यं। निर्मूलकल्पनायामतिप्रसङ्गादित्यर्थः। श्लोकाक्षरयोजनया परिहरति। उच्यत इति॥ हेतुफलात्मकमित्युक्तमेव व्यनक्ति। अहमिति॥ हेतुफलभावविकलं परिशुद्धात्मरूपं जीवकल्पनाधिष्ठानं दर्शयति। अनेनैवमिति॥ आरोपस्याधिष्ठानापेक्षात्वमित्यत्र दृष्टान्तमाह। रज्ज्वामिवेति॥ द्वितीयतृतीयपादौ विभजते। तत इति॥ तादर्थ्येन प्रथमं कल्पितस्य भोक्तुर्जीवस्य शेषत्वेनेत्यर्थः। यद्यपि जीवः सर्व्वकल्पनायां मूलभूतो हेतुस्तथापि तस्य कल्पनाविशेषो विशेषहेतुव्यतिरेकेण न सम्भवतीति शङ्कते। तत्रेति॥ चतुर्थपादेनोत्तरमाह। उच्यत इति॥ कल्पितो विशिष्टरूपेणेति शेषः। अधिकृतः स्वामित्वेन सम्बन्धेन सम्बद्ध इत्यर्थः। इति शब्दः श्लोकाक्षरपरयोजनासमाप्तिद्योतनार्थः॥ प्रकृतकल्पनामेव प्रपञ्चयति। अत इत्यादिना॥ सत्यन्नपानाद्युपयोगे तृप्त्यादि भवति। असति न भवतीत्यन्वयव्यतिरेकरूपान्न्यायात् भोजनादिकं हेतु-

गौ० अनिश्चिता यथा रज्जुरन्धकारे विकल्पिता।

---

भा० अतो हेतुकल्पनाविज्ञानात्फलविज्ञानं ततो हेतुफलस्मृतिस्ततस्तद्विज्ञानतदर्थक्रियाकारकतत्फलभेदविज्ञानानि। तेभ्यस्तत्स्मृतिस्तत्स्मृतेश्च पुनस्तद्विज्ञानानि तेभ्यस्तत्स्मृतिस्तत्स्मृतेश्च पुनस्तज्ज्ञानानीऽत्येवं बाह्यानाध्यात्मिकांश्चेतरेतरनिमित्तनैमित्तिकभावेनानेकधा कल्पयते॥ १६॥

तत्र जीवकल्पना सर्व्वकल्पनामूलमित्युक्तं सैव जीवकल्पना किं निमित्तेति दृष्टान्तेन प्रतिपादयति। यथा लोके स्वेन रूपेणानिश्चिताऽनवधारिता एवमेवेति रज्जु-

---

आ० रिति कल्पनाविज्ञानमुत्पद्यते। ततस्तृप्त्यादिकं फलमिति कल्पनाविज्ञानं जायते। ततोऽपरेद्युरुक्तयोरुभयोरपि हेतुफलयोः स्मृतिरुद्भवति। ततश्च फलसाधनासमानजातीये कर्त्तव्यताविज्ञानं। ततश्चाभिलषिततृप्त्यादिफलार्थत्वे पाकादिक्रियातत्कारकतण्डुलादितत्फलान्ननिष्पत्त्यादीनि विशेषविज्ञानादीनि भवन्ति। ततो हेत्वादिस्मृतिः। ततस्तदनुष्ठानं। ततश्च फलमित्यनेन क्रमेण मिथो हेतुहेतुमत्तया कल्पना भवतीत्यर्थः। प्रकृतां कल्पनामुपसंहरति। एवमिति॥ १६॥

इदानीं जीवकल्पनानिमित्तं निरूपयति। अनिश्चितेति॥ श्लोकस्य तात्पर्य्यं दर्शयितुं वृत्तं कीर्त्तयति। तत्रेति॥ पूर्व्वश्लोकः सप्तम्यर्थः। जीवकल्पनाया नित्यत्वायोगात् सनिमित्तत्वस्य वक्तव्यत्वात् तस्य च वस्तुत्वे निवृत्त्यनुपपत्तेः। अवस्तुत्वे च निमित्तत्वासिद्धेर्जीवकल्पनाया दुर्घटत्वात्तत्कार्य्यभूतापि कल्पना नावकल्प्यत इत्याशङ्कते। सैवेति॥ उत्तरत्वेन श्लोकाक्षराण्यवतार्य्य व्याचष्टे। दृष्टान्तेनेति॥ स्वासाधारणं रूपं रज्जुत्वं तेनेति यावत्। अनवधारितत्वमेव स्फोरयति। एवमेवेति॥ रज्जुरेवेयमित्यनेन

गौ० सर्पधारादिभिर्भावैस्तद्वदात्मा विकल्पितः॥१७॥

भा० मन्दान्धकारे किं सर्प उदकधारा दण्ड इति वानेकधा विकल्पिता भवति पूर्व्वं स्वरूपानिश्चयनिमित्तं। यदि हि पूर्व्वमेव रज्जुः सर्पेण निश्चिता स्यात् न सर्पादिविकल्पोऽभविष्यत्। स यथा स्वहस्ताङ्गुल्यादिषु एष दृष्टान्तस्तद्धेतुफलादिसंसारधर्म्मानर्थविलक्षणतया स्वेन विशुद्धविज्ञप्तिमात्रसत्ताद्वयरूपेणानिश्चितत्वाज्जीवप्राणाद्यनन्तभावभेदैरात्मा विकल्पित इत्येष सर्व्वोपनिषदां सिद्धान्तः॥१७॥

आ० प्रकारेणेत्यर्थः॥ सर्पादिकल्पनायामन्वयव्यतिरेकसिद्धमुपादानमुपन्यस्यति। स्वरूपेति॥ उक्तावधारणाराद्धित्वे कारणं सूचयति। मन्देति॥ पूर्व्वं रज्जुस्वरूपनिश्चयात्प्रागवस्थायामित्यर्थः एतदेव व्यतिरेकद्वारा विवृणोति। यदि हीति॥ देवदत्तस्य हस्ताद्यवयवेषु तद्रूपेणैव निश्चितेषु सर्पादिविकल्पो यथा नोपलभ्यते तथा पुरोवर्त्तिन्यपि रज्जुस्वरूपेण निश्चिते नासौ युक्तस्तथा च रज्जुज्ञानादेव भवतीत्यर्थः। उपपादितं दृष्टान्तमनूद्य दार्ष्टान्तिकमभिसन्दधानस्तुर्यपादार्थमाह। एष इति॥ हेतुफलादित्यादिशब्देन कर्त्तृत्वभोक्तृत्वरागद्वेषादि गृह्यते। विलक्षणत्वमेव स्फुटयति। स्वेनेति॥ अनारोपितेनेति यावत्। विशेषणैर्विशुद्धत्वं जन्मादिराहित्यमाकारान्तरशून्यत्वं तन्मात्रत्वमित्यर्थः। तन्मात्रत्वमयुक्तं सामान्यविशेषाभावादित्याशङ्क्याह। सत्तेति॥ न च तत्रान्यदस्ति सुखमिति मत्वा विशिनष्टि। अद्वयेति॥ सच्चिदानन्दाद्वयात्मा विद्याविलसितं द्वैतमित्यत्र प्रमाणं सूचयति। इत्येष इति॥ अद्वैतश्रुतयस्तावत्तत्रोपलभ्यन्ते यत्र हि द्वैतमिव भवतीत्याद्यास्च द्वैतप्रतिभासमानयोर्मिथ्यात्वमावेदयन्त्यः श्रुतयः श्रूयन्ते॥ तेनाद्वैतं तत्त्वं द्वैतमविद्याविजृम्भितमिति प्रमाणसिद्धमित्यर्थः॥१७॥

गो॰ निश्चितायां यथा रज्ज्वां विकल्पो विनिवर्त्तते ।
रज्जुरेवेति चाद्वैतं तद्वदात्मविनिश्चयः ॥ १८ ॥

भा॰ रज्जुरेवेति निश्चये सर्व्वविकल्पनिवृत्तौ रज्जुरेवेति चाद्वैतं यथा तथा नेति नेतीति सर्व्वसंसारधर्म्मशून्यप्रतिपादकशास्त्रजनितविज्ञानसूर्य्यालोककृतात्मविनिश्चयः । आत्मैवेदं सर्व्वं अपूर्व्वोऽनपरोऽनन्तरोऽवाह्यः सवाह्याभ्यन्तरो ह्यजोऽजरोऽमरोऽमृतोऽभय एवाद्वय इति ॥ १८ ॥

आ॰ अविद्याकृता जीवकल्पनेत्यन्वयमुखेनोक्तं तदेवेदानीं व्यतिरेकमुखेन दर्शयति । निश्चितायामिति ॥ रज्जुरेवेति रज्ज्वां निश्चितायां तदज्ञाननिवृत्तेस्तदुत्थसर्पादिविकल्पः सर्व्वथा निवर्त्तते रज्जुमात्रश्चावशिष्यते तद्वदात्मनि श्रौतो निश्चयो यदा सम्पद्यते तदा सर्व्वस्यात्माऽविद्याकल्पितस्य जीवादिविकल्पस्य व्यावृत्तेरद्वैतमेवात्मतत्त्वं परिशिष्यते । तस्मादात्माऽविद्याविजृम्भिता जीवकल्पनेत्यर्थः ॥ दृष्टान्तभागं व्याचष्टे । रज्जुरिति । तद्वदित्यादि व्याकरोति । तथेति ॥ सर्पस्यापि संसारात्मनो धर्म्मस्यात्मन्यारोपितस्यासत्त्वावेदकं यन्निषेधशास्त्रं तेन जनितं विज्ञानमेव सूर्य्यालोकस्तत्कृतो योऽयमात्मविनिश्चयः स एवाद्वितीयः शिष्यते । द्वैतं पुनः सर्व्वमेव व्यावृत्तं भवतीत्यर्थः । आत्मविनिश्चयमेव विशिनष्टि । आत्मैवेति ॥ सर्व्वमिदमात्मैवेत्युक्ते पूर्ण्णत्वं तस्योच्यते । पूर्व्वभाविना कारणेन संस्पर्शशून्योऽपूर्व्वः पश्चाद्भाविना कार्य्येण सम्बन्धविधुरोऽनपरमनन्तरं छिद्रं तच्छून्योऽनन्तरश्चिदेकरसस्तस्यैव प्रत्यक्त्वमवाह्यत्वं कार्य्यकारणास्पृष्टमुभयकल्पनाधिष्ठानत्वेन ततोऽर्थान्तरत्वादित्याह । सवाह्येति ॥ विशेषणत्रयं कौटस्थ्यव्यवस्थापनार्थं ॥ जन्मादिसम्बन्धाभावे कारणमविद्यासम्बन्धराहित्यं दर्शयति । अभय इति ॥ न खल्वविद्यात्र कारणत्वेन सम्बन्धमनुभवति । तस्य पूर्ण्णत्वेन कारणानपेक्ष

गौ॰ प्राणादिभिरनन्तैश्च भावैरेतैर्विकल्पितः ।
मायैषा तस्य देवस्य यया सम्मोहितः स्वयं ॥ १९ ॥

---

भा॰ यद्यात्मैक एवेति निश्चयः कथं प्राणादिभिरनन्तैर्भावैरेतैः संसारलक्षणैर्विकल्पित इति । उच्यते । शृणु मायैषा तस्यात्मनो देवस्य । यथा मायाविना विहितमायागगनमतिविमलं कुसुमितैः सपलाशैस्तरुभिराकीर्णमिव करोति तथेयमपि देवस्य माया ययाऽयं स्वयमपि मोहितो भवति । मम माया दुरत्ययेत्युक्तं ॥ १९ ॥

---

आ॰ त्वादित्याह । एक इति ॥ द्वैताद्वैतव्यावृत्त्यर्थमवधारणं न विद्यायाः निराश्रयत्वोपपत्तेः । आश्रयान्तरस्य चासत्त्वात् । तत्रैव सा प्रविशतीति चेत् सत्यं । अविद्वद्दृष्ट्या तस्यास्तत्र प्रवेशेऽपि वस्तुदृष्ट्या नासौ तस्मिन् प्रवेष्टुं प्रभवतीत्याह । अद्वय इति ॥ १८ ॥ आत्मनो द्वितीयत्वे कथमनेकैर्भावैस्तस्य विकल्पितत्वमित्यभिप्रायाप्रतिपत्त्या प्रत्यवतिष्ठते । प्राणादिभिरिति ॥ सिद्धान्ती स्वाभिसन्धिमुद्घाटयन्नुत्तरमाह । मायेति ॥ चोद्यभागं विभजते । यदीति ॥ उत्तरार्द्धमुत्तरत्वेन व्याकरोति । उच्यत इति ॥ मायामेव दृष्टान्तेन स्पष्टयति । यथेति ॥ तामेव मायां कार्य्यद्वारा स्फारयति । यथेति ॥ यथा लौकिका मोहिता मोहपरवशा दृश्यन्ते तथाऽयमात्मा स्वयमेव मायासम्बन्धान्मोहितो भवति । अतो मोहद्वाराऽऽत्मन्येव मायाधिगतिरित्यर्थः । मायाया मोहहेतुत्वं भगवतापि सूचितमित्याह । ममेति ॥ १९ ॥

गै॰ प्राण इति प्राणविदो भूतानीति च तद्विदः ।
गुणा इति गुणविदस्तत्त्वानीति च तद्विदः ॥ २० ॥
पादा इति पादविदो विषया इति च तद्विदः ।
लोका इति लोकविदो देवा इति च तद्विदः ॥ २१ ॥

---

भा॰ प्राणः प्राज्ञो बीजात्मा तत्कार्य्यभेदा ह्येतरे स्थि-

---

आ॰ के ते प्राणादयोऽनन्ता भावा यैरात्मा विकल्प्यते माययेत्यपेक्षायां प्राणादिविकल्पनामुदाहरति । प्राण इति ॥ प्राणो हिरण्यगर्भस्तटस्थेश्वरो वा स जगतो हेतुरिति प्राणविदो हैरण्यगर्भाद्या वैशेषिकादयश्च कल्पयन्ति । तदिदं कल्पनामात्रं । स्वतन्त्रस्य हिरण्यगर्भस्य सर्व्वजगद्धेतुत्वे मानाभावात् । पौरुषेयागमस्यापौरुषेयश्रुतिविरोधे स्वार्थे मानत्वायोगात्तटस्थेश्वरवादस्य च प्रमाणयुक्तिविहीनस्य प्रतिपत्तुमशक्यत्वादित्यर्थः । कल्पनान्तरं दर्शयति । भूतानीति चेति ॥ पृथिव्यप्तेजोवायवस्तत्त्वानि तानि च चत्वारि भूतानि जगत्कारणानीति लोकायतिकास्तदपि कल्पनामात्रं । न हि भूतानि स्वतः सिद्धानि जडत्वविरोधात् । नापि परतः सिद्धानि । स्वगुणस्य चैतन्यस्य स्वग्राहकत्वायोगाद्वह्निगतौष्ण्यस्य वह्निविषयत्वादर्शनात् । अतो भूतानि जगत्कर्त्तॄणीति कल्पनैवेत्यर्थः । सत्त्वरजस्तमांसि त्रयो गुणाः साम्येनावस्थिता जगतो महदादिलक्षणस्य कारणमिति साङ्ख्याः । तदपि कल्पनामात्रं । साम्येन स्थितानां कारणत्वे प्रलयाभावप्रसङ्गात् । वैषम्यभञ्जनस्य च निर्हेतुकत्वे सदा तदापातात् । सहेतुकत्वे हेतोर्नित्यत्वे प्राचीनदोषानुषङ्गादनित्यत्वे हेत्वन्तरापेक्षायामनवस्थानादित्याह । गुणा इतीति ॥ कल्पनान्तरमाह । तत्त्वानीति चेति ॥ २० ॥ आत्मविद्या शिवेति सङ्क्षेपतस्त्रीणि तत्त्वानि सर्व्वजगत्प्रवर्त्तकानीति शैवा मन्यन्ते तदपि कल्पनामात्रं । आत्मनो भिन्नत्वे शिवस्य घटादितुल्यत्वप्रसङ्गादभिन्नत्वे तत्त्वानां त्रित्वव्याघातादित्यर्थः । एकस्यात्मनो विश्वादयः सर्व्वव्यवहारहेतवो भवन्तीत्यपि कल्पनामात्रं । निरंशस्यात्मनोंऽशभेदानुपपत्ते-

गी० वेदा इति च वेदविदो यज्ञा इति च तद्विदः ।
भोक्तेति च भोक्तृविदो भोज्यमिति च तद्विदः ॥२२

---

भा० त्यन्ताः । अन्ये च सर्व्वे लौकिकाः सर्व्वप्राणिपरिकल्पिता

व्या० रित्याह । पादा इतीति ॥ वात्स्यायनप्रभृतीनां कल्पनां कथयति । विषया इतीति ॥ शब्दादयो विषया भूयो भूयो भुज्यमानास्तत्त्वमिति विभ्रममात्रं ॥ विषस्य विषयाणाञ्च दूरमत्यन्तमन्तरं । उपभुक्तं विषं हन्ति विषयाः स्मरणादपीति ॥ विषयानुसन्धानस्य निन्दितत्वात्तेषां पारमार्थिकतत्त्वभावानुपपत्तेरित्यर्थः ॥ भूर्भुवः स्वरिति त्रयो लोका वस्तुभूताः सन्तीति पौराणिकाः । तदपि कल्पनामात्रं । स्थानभेदेन त्रित्वे तदानन्त्यस्य दुरुत्तरत्वात्स्वातन्त्र्यस्य चासिद्धत्वादित्याह । लोका इतीति ॥ अग्नीन्द्रादयो देवास्तत्तत्फलदातारो नेश्वरस्तथेति देवताकाण्डीयाः । तदपि कल्पनामात्रं । अस्मदादिप्रयत्नमपेक्ष्य फलदातृत्वे तेषां भृत्येभ्यो विशेषभावप्रसङ्गात् । स्वातन्त्र्येणोपकारकत्वे तदाराधनवैयर्थ्यात् । तद्भक्तानामपि विप्रतिपत्तिदर्शनात् तत्प्रसादस्याकिञ्चित्करत्वादित्याह । देवा इति चेति ॥२१॥ ऋग्वेदादयो वेदाश्चत्वारस्तत्त्वानीति पाठका वदन्ति । तदपि कल्पनामात्रं । न हि वेदा लौकिकवर्णव्यतिरिक्ता दृश्यन्ते । क्रमवतामेव वर्णानां वेदशब्दवाच्यत्वाङ्गीकारात् । क्रमश्चोच्चारणापन्नध्वन्यन्तरगतो वर्णेष्वारोप्यते । तथा च तथाविधक्रमवतां वर्णानामारोपितरूपेण वेदशब्दवाच्यत्वात्कुतो वेदानां परमार्थतेत्याह । वेदा इति ॥ ज्योतिष्टोमादयो यज्ञा वस्तुभूता भवन्तीति बौधायनप्रभृतयो याज्ञिका मन्यन्ते तदपि भ्रान्तिमात्रं । यज्ञं व्याख्यास्यामो द्रव्यं देवता त्याग इत्यत्रैकस्मिन्नपि यज्ञविज्ञानाभावात्समुदायस्य चावस्तुत्वादित्याह । यज्ञा इति चेति ॥ भोक्तैवात्मा न कर्त्तेति साङ्ख्याः । तत्र भोगो यदि विक्रिया साक्रियते तर्हि कथं नानित्यत्वादिप्रसङ्गः स्वभावत्वे सदा स्यादिति विषयसन्निधौ भोक्तृत्वं भ्रान्तिरेवेत्याह । भोक्तेति चेति ॥ सूपकारास्तु भोज्यं वस्त्विति प्रतिजानते, तदपि न । मधुरादिरसव्यञ्जनादेस्तदन्यथात्वदर्शना

गौ॰ सूक्ष्म इति सूक्ष्मविदः स्थूल इति च तद्विदः ।
मूर्त इति मूर्तविदो अमूर्त इति च तद्विदः ॥२३॥
काल इति कालविदो दिश इति च तद्विदः ।
वादा इति वादविदो भुवनानीति तद्विदः ॥२४॥

---

भा॰ भेदा रज्ज्वामिव सर्पादयः । तच्छून्ये आत्मनात्मस्वरूपा

---

आ॰ दैकरूप्यासम्भवादित्याह । भोग्यमिति चेति ॥ २१ ॥ आत्मा सूक्ष्मोऽणुपरिमाणः स्यादिति केचित् । तन्न । युगपदशेषशरीरव्यापिवेदनानुसन्धानासिद्धेरित्याह । सूक्ष्म इतीति ॥ स्थूलो देहोऽहं प्रत्ययादात्मेति लोकायतभेदः । तच्च न । मृतसुप्तयोरपि सङ्घाताविशेषाच्चैतन्यप्रसङ्गात् । एकैकस्य च भूतस्य चैतन्यादर्शनात्सङ्घातस्य चावस्तुत्वादित्याह । स्थूल इति चेति ॥ मूर्त्तस्त्रिशूलादिधारी महेश्वरश्चक्रादिधारी वा परमार्थो भवतीत्यागमिकाः । तदपि भ्रान्तिमात्रं । अस्मदादिशरीरवत्तस्यापि शरीरस्य पाञ्चभौतिकत्वाल्लीलाविग्रहकल्पनस्य । विग्रहाभावे लीलाभावादयुक्तमित्याह । मूर्त्त इति ॥ अमूर्त्तः सर्व्वाकारशून्यो निःस्वभावः परमार्थ इति शून्यवादिनः तदपि कल्पनामात्रं । परमार्थो निःस्वभावश्चेति व्याघातादित्याह । अमूर्त्त इति चेति ॥ २३ ॥ कालः परमार्थ इति ज्योतिर्विदः । तच्च न । कालैक्ये मुहूर्त्तादिव्यवहारायोगात् । तन्नानात्वेऽपि न स्वातन्त्र्यं । अन्यविषयत्वेन प्रतीतेः । उदयकाल इत्यादिना क्रियाधर्म्मत्वेन प्रतीतेः स्फुटत्वात् । न च क्रियाधर्म्मत्वं कालेऽपि तदुत्पत्तिदर्शनादन्यथाकालानवच्छिन्नत्वेन क्रियानित्यत्वापातादित्याह । काल इतीति ॥ स्वरोदयविदस्तु दिशः परमार्था इत्याहुः तदपि भ्रान्तिमात्रं । तद्विदामपि पराजयदर्शनादित्याह । दिश इति चेति ॥ धातुवादो मन्त्रवादश्चेत्यादयो वादा वस्तुभूता भवन्तीति केचित् । तदपि कल्पनामात्रं । ताम्रादिस्वभावे स्थिते नष्टे च कनकादिस्वभावासम्भवात् । मन्त्रवादेऽपि कालदृष्टो न

गौ॰ मन इति मनोविदो बुद्धिरिति च तद्विदः ।
चित्तमिति चित्तविदो धर्म्माधर्म्मौ च तद्विदः ॥ २५
पञ्चविंशक इत्येके षड्विंश इति चापरे ।
एकत्रिंशक इत्याहुरनन्त इति चापरे ॥ २६ ॥

---

भा॰ निश्चयहेतोरविद्यया कल्पिता इति पिण्डीकृतोऽर्थः ।

---

आ॰ वति । अकालदृष्टः स्वयमेवोत्थास्यतीत्यभ्युपगमाद्व्यामोहमात्रमित्याह । वादा इतीति ॥ भुवनानि चतुर्दश वस्तूनीति भुवनकोषविदः । तदपि कल्पनामात्रं । तेषामदृष्टत्वात् । न च तेभ्यस्तद्दर्शनं । तेषां मिथो विप्रतिपत्तिदर्शनादित्याह । भुवनानीति ॥ २३ ॥ मन एवात्मेति लोकायतभेदः । तदपि भ्रान्तिमात्रं । तस्य स्वातन्त्र्ये क्लेशप्राप्त्यनुपपत्तेः । अस्वातन्त्र्ये च घटवदनात्मत्वात्करणत्वाच्च दीपवदात्मत्वायोगादित्याह । मन इति ॥ बुद्धिरेवात्मेति बौद्धाः । तेषामपि भ्रान्तिमात्रमेव । तत्सुषुप्ते व्यभिचाराद्दृश्यस्य च घटवदतिरिक्तवेद्यत्वादित्याह । बुद्धिरिति ॥ चित्तमेव वाह्याकारशून्यं विज्ञानं । तदेवात्मेत्यपरे । तत्रापि प्रागुक्तन्यायाविशेषात्तुल्यं भ्रान्तित्वमित्याह । चित्तमिति ॥ धर्म्माधर्म्मौ विधिनिषेधचोदनागम्यौ परमार्थाविति मीमांसकाः । तदपि कल्पनामात्रं । देशकालादिषु धर्म्माधर्म्मयोर्विप्रतिपत्तिदर्शनादित्याह । धर्म्मेति ॥ २५ ॥ प्रधानं मूलप्रकृतिः महदहङ्कारतन्मात्राणीति सप्त प्रकृतिविकृतयः । पञ्च ज्ञानेन्द्रियाणि । पञ्च कर्म्मेन्द्रियाणि । पञ्च विषयाः । मनश्चैकमिति षोडश विकाराः । पुरुषस्तु दृशिस्वभाव इति पञ्चविंशतिसङ्ख्याकः प्रपञ्चो वस्त्विति साङ्ख्याः । तच्च कल्पनामात्रं । पञ्चविंशतिविशेषणस्याव्यावर्त्तकत्वे वैयर्थ्यात व्यावर्त्तकत्वे च व्यावर्त्त्यं प्रमित्यप्रमित्योरनुपपत्तेरित्याह । पञ्चविंशक इति ॥ पातञ्जलाः पुनरीश्वरमधिकं पश्यन्तः षड्विंशतिपदार्था इति विकल्पयन्ति । तदयुक्तं । ईश्वरस्य पुरुषान्तर्भावादधिकत्वानुपपत्तेः । अनन्तर्भावे च घटवदनीश्वरत्वप्रसङ्गादित्याह । षड्विंश इति चेति ॥ पाशुपतास्तु रागाविद्यानियतिकालकलामायाधि-

गौ० लोकान् लोकविदः प्राहुराश्रमा इति तद्विदः।
स्त्रीपुंनपुंसकं लैङ्गाः परापरमथापरे ॥ २७ ॥
सृष्टिरिति सृष्टिविदो लय इति च तद्विदः।

भा० प्राणादिश्लोकानां प्रत्येकं पदार्थव्याख्याने फल्गुप्रयोजन-

व्या० काला एवैकत्रिंशत्पदार्था इति ब्रुवते। तन्न। क्लेशत्वेऽपि रागाविद्ययोरवान्तरभेदवदस्मदादेरपि तद्भिन्नत्वेन सङ्ख्यातिरेकात् तस्य रागोपलक्षितत्वेन तस्याप्यविद्योपलक्षितत्वेन च शून्यतापातादविद्यामाययोरैकत्वादवान्तरभेदे च नियतावपि तदुपपत्तेः सङ्ख्यातिरेकतादवस्थ्यं॥ कालकलासु च तत्प्रसिद्धेरित्याह। एकत्रिंशक इति॥ अनन्तः पदार्थभेदो न नियतोऽस्तीति केचित्। तदपि न। वादिनां विवाददर्शनात्। विवादस्य चाज्ञानमूलकत्वादित्याह। अनन्त इतीति॥ २६॥ लोकानुरञ्जनमेव तत्त्वमिति लौकिकाः। तदपि विभ्रममात्रं। लोकस्य भिन्नरुचित्वात्तदनुरञ्जनस्येश्वरेणापि कर्त्तुमशक्यत्वादित्याह। लोकानिति॥ दक्षप्रभृतयस्त्वाश्रमाः परमार्था इति समर्थयन्ते। तदसत्। वैषस्याश्रमशब्दार्थत्वे शूद्रादेरपि प्रसङ्गाज्जातेश्च दुर्विवेचनत्वात्तन्मूलस्याश्रमस्य दर्शयितुमशक्यत्वात्संस्कारस्य च देहसमवायित्वे पारलौकिकत्वायोगादसङ्गे चात्मनि तदसमवायादित्याह। आश्रमा इतीति॥ वैयाकरणास्तु स्त्रीपुंनपुंसकं शब्दजातं तत्त्वमिति वर्णयन्ति। तदप्ययुक्तं। स्त्यादेः शब्दस्वभावत्वे सर्व्वादीनां त्रिलिङ्गत्वायोगादेकस्यानेकस्वभावत्वासम्भवादौपाधिकधर्म्मत्वे च तस्यावस्तुत्वप्रसङ्गादित्याह। स्त्रीपुंनपुंसकमिति॥ द्वे ब्रह्मणी वेदितव्ये परं चापरञ्चेति केचित्। तच्च न। परिच्छेदं क्वचिदपि ब्रह्मत्वायोगात् वस्तुतोऽपरिच्छिन्नस्य तद्भावादित्याह। परावरमिति॥२७॥ सृष्टिर्वा लयो वा स्थितिर्वा तत्त्वमिति पौराणिकाः। तदपि कल्पनामात्रं। सतोऽसतश्चोत्पत्त्याद्यभावस्य वक्ष्यमाणत्वादिति मत्वाह। सृष्टिरित्यादिना॥ यथोक्तकल्पनाधिष्ठानं सूचयति। सर्व्वे चेति॥ उदाहृतानुदाहृताश्च कल्पनाभेदा यावन्तो

गौ० स्थितिरिति स्थितिविदः सर्व्वे चेह तु सर्व्वदा ॥ २८

यं भावं दर्शयेद्यस्य तं भावं स तु पश्यति ।

---

भा० त्वाद्यन्तो न कृतः ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

किं बहुना प्राणादीनामन्यतममुक्तमनुक्तं वाऽन्यं यं भावं पदार्थं दर्शयेद्यस्याचार्य्योऽन्यो वाऽऽप्त इदमेव तत्त्वमिति स तं भावमात्मभूतं पश्यत्ययमहमिति वा ममेति वा तञ्च द्रष्टारं स भावोऽवति यो दर्शितो भावो स भूत्वा रक्षति ।

---

आ० विद्यन्ते ते सर्व्वेऽपि प्रकृतात्मन्येव कल्पनावस्थायां कल्प्यन्ते नात्मनः कल्पितत्वं । सर्व्वस्य कल्पितत्वेनाधिष्ठानत्वायोगादित्यर्थः ॥ प्राणादिश्लोकेषु प्राणशब्दार्थमाह । प्राण इति ॥ तस्यैव बीजात्मनो विकारविशेषत्वादितरेषां न ततोऽत्यन्तभिन्नतेत्याह । तत्कार्य्येति ॥ अन्तिमपदार्थं स्फुटयति । अन्य इति ॥ कुलधर्म्मो ग्रामधर्म्मो देशधर्म्मश्चेत्येते सर्व्वशब्देन गृह्यन्ते । तेषामात्मनि तदज्ञानादेव कल्पितत्वं सदृष्टान्तं स्पष्टयति । रज्ज्वामिति ॥ आत्मनोऽधिष्ठानयोग्यतार्थं कल्पनाशून्यत्वमाह । तच्छून्य इति ॥ किमिति समुदायार्थः श्लोकानामुच्यते । श्लोकान्तरेष्विव प्रत्येकं पदार्थव्याख्यानमेतेषु किं न स्यादित्याशङ्क्याह । प्रत्येकमिति ॥ १८ ॥

लौकिकानां परीक्षकाणाञ्च कतिपयकल्पनाभेदानुदाहृत्यानन्तत्वादशेषतस्तेषामिहाहर्त्तुमशक्यत्वं दृष्ट्वा सङ्क्षेपमात्रमाचष्टे । यं भावमिति ॥ पादत्रयं विभजते । किं बहुनेत्यादिना ॥ तमेव भावं विशिनष्टि । यो दर्शित इति ॥ स कथं द्रष्टारं रक्षतीत्यपेक्षायामाह । असाविति ॥ साधकपुरुषतादात्म्यमापद्येत्यर्थः । रक्षणप्रकारं प्रकटयति । सेनेति ॥ साक्षादसाधारणरूपत्वेन तत्रैव निष्ठामापाद्य ततोऽन्यत्र प्रवृत्तिमुपासकस्य निवारयतो

